इतीन्धेर्घञि निपातनाद् अदन्तोऽपि एधोऽस्ति[1] । गुरोश्च हलः (३।३।१०३) इत्यप्रत्ययः—एधा ॥२॥

४. स्पर्ध संघर्षे । संघर्षः पराभिभवेच्छा । स्पर्धते भ्रातुः[2]—भ्रात्रा सह स्पर्धां करोतीत्यर्थः । स्पर्धमानः । स्पर्धिता । स्पर्धमानः स कृष्णम् इति तु कृष्णं प्राप्येत्यध्याहारात्[3] । अणावकर्मकात् (१।३।८८) इति णेः परस्मैपदम्—स्पर्धयति । यङ्लुकि—लङीट्पक्षे (द्र० ७।३। ९४) अपास्पर्धीत, अनिटि अपास्पर्त् । रात् सस्य (८।२।२४) इति नियमात् संयोगान्तलोपाभावः । सिपि तु—सिपः हल्ङ्याब्भ्यः (६।१।६८) इति लोपे प्रत्ययलक्षणेन जश्त्वे, सिपि धातोर्वा, दश्च (८।२।७४-७५) इति रुत्वपक्षे रो रि (८।३।१४) लोपे दीर्घे (द्र० ६।३।१११) च अपास्पा इति रूपम्, अरुत्वपक्षे तु तिबन्तवत् । अनुदात्तेतश्च हलादेः (३।२।१४९) इति युच्—स्पर्धनः । गुरोश्च हलः (३।३।१०३) इत्यप्रत्ययः—स्पर्धा । बाहुलकादिष्णुच्[4] मेरुं स्पर्धिष्णुनाश्मनो धृतो नाको हिमाद्रिणा[5] ॥३॥

५. गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । प्रतिष्ठा आस्पदम् । लब्धुमिच्छा लिप्सा । ग्रन्थनं[6] ग्रन्थः । अस्य पृथक्पाठो विरलप्रयोगार्थः[7] । गाधते । गाधिता । ऋदित्वात् नाग्लोपिशास्वृदिताम् ( ७।४।२ ) इति णौ

---

१. इत्यमेवादन्तमेधपदममरटीकायाम् (पृष्ठ ८२) अपि साधितवान् स्वामी । भानुजिद्दीक्षितस्तु 'एधधातोरेव हलश्चेत्यनेन घञ्' निरवोचत् । अयमदन्तः पुंसि । उदाहृतं च मुकुटेन—"एधान् हुताशनवत इति कालिदास." इति ।

२. पराभिभवस्य धात्वर्थेनोपसंग्रहाद् अकर्मकत्वम् । 'धात्वर्थेनोपसंग्रहात्' इत्युक्तत्वात् (द्र० पृष्ठ ५ पं० १६) ।

३. कृष्णमिति न स्पर्धे. कर्म, अपि तु प्राप्नोतेरिति भाव. ।

४. अय भावः—यद्यपि स्पर्धधातोः 'इष्णुच्' साक्षान्न विहितस्तथापि 'कृतो बहुलम्' (३।३।११३ वा०) इति वचनात् समाधेयः । जयादित्यस्तु 'भुवश्च' (३।२।१३८) इत्यत्र 'चकारोऽनुक्तसमुच्चयार्थ.—भ्राजिष्णुना लोहितचन्दनेन' इत्युक्तवान् । ५. अनुपलब्धमूलमिदम् । ६. 'ग्रथनम्' पाठा० ।

७. पुरुषकारे ( पृष्ठ २० ) त्वयमुद्धृत्य "व्यभिचरति चैतत् 'पूयी विशरणे दुर्गन्धे च' इत्यत्र" इत्येवं दूषितः । वयं तु पृथक्त्रिमवितनिर्देशेनानुमिनुमो

चङि उपधाह्रस्वो नास्ति—अजगाधत् । अजगाधम् अतलस्पर्शाम्[1] ॥४॥

६. बाधृ रोटने । रोटनं प्रतिघातः[2] । बाधते । बाधिता । अबबाधत् । बाधनः । गुरोश्च हलः (३।३।१०३) इत्यप्रत्यये बाधा । बाधस्तु अचि (द्र० ३।१।१२४) । अर्जिदृशिकम्यमिपंसिबाधाम् (उ०१।२७) इति कुः हत्वं च,[3] बाहुः ॥५॥

७. नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु । उपताप उपघातः[4] । याच्ञोपतापयोरित्यर्थयोः क्रियात्वात् ऐश्वर्याशिषोस्तु धात्वर्योर्धर्ममात्राभिधानात् । यथा घण्टा ध्वनति, श्वेतते प्रासादः—संयुज्यते, समवैति, अस्ति, गच्छतीति गुण-संयोग-समवाय-सत्ता-द्रव्याणि सिद्धानि आख्यातेन साध्यत्वेन प्रतीयन्ते । पूर्वापरीभूतं भावमाख्यातेनाचष्टे' (निरुक्त १।१) इति । नाधते । अननाधत् । तथा नाथते । आशिषि नाथ इत्युपसंख्यानात् (१।३।२१ वा०) आत्मनेपदम्, षष्ठी च सूत्रात्[5] (२।३।५५)—सर्पिषो नाथते-सर्पिर्मे भूयादित्याशास्ते । अन्यत्र नृपं नाथति, याचते । रिपुं नाथति, स्वामी नाथति, ईष्टे । नाथोऽचि (द्र० ३।१।१२४) । नाथ[6] इत्यनुपसर्गस्य नियमात्पेहात्मनेपदम्[7]—

———

पचन कदाचित् 'प्रतिष्ठालिप्सयोः' इत्येव मूलपाठ आसीत् 'ग्रन्थे च इत्ययमंशः पश्चात् निर्वर्धितः । यथा क्वचित् धातुपाठकोशेषु 'डुवप बीजसन्ताने' इत्यस्य स्थाने 'डुवप बीजसन्ताने छेदने च' इति दृश्यते । तुलनीयम्—यथा वपि. प्रकिरणे दृष्ट', छेदने चापि दृश्यते' (महाभाष्य १।३।१) ।

१. अमरकोश का० १, वारिवर्ग, श्लोक १५ । २. 'प्रतीघात.' पाठा० ।

३. अमरटीकायां (पृष्ठ १५१) क्षीरस्वामिना 'बहति बहते प्रयतते वा बाहुः', बाहृ प्रयत्ने' इत्युक्तम् ।

४. उपताप रोग इति वृत्तौ, उपघात इति तरङ्गिण्याम् (क्षी० धा० पृष्ठ २७)।

५. अथ मात्रः—'आशिषि नाथ.' इत्यानुपूर्विकमुपसंख्यान सूत्र च द्वयमपि वर्तते । तत्रोपसंख्यानादात्मनेपदम्, सूत्राच्च षष्ठी विधीयते ।

६. आशिषि नाथ इत्यात्मनेपदविधायके वार्तिके ।

७. पाठोऽत्र भ्रष्ट इति प्रतिभाति । अत्र शुद्धः पाठ एवमूहनीयः—'नाथ इत्यनुपसर्गस्य नियमार्थं हात्मनेपदप्रतिषेध ' इति ।

काव्यप्रकाशे त्वयं श्लोकः च्युतसंस्कृतिदोष उदाहृत्य "मनागनुनाथत इति

१०. श्विदि श्वैत्ये । श्वेतगुणक्रियायाम्[1] । श्विन्दते प्रासादः । श्वेतगुणः सिद्धोऽपि आख्यातेन साध्यैकरूप[2] उच्यते, कृता तु साध्योऽपि धात्वर्थः सिद्धतया पाकादिवत्, शब्दशक्तिस्वाभाव्यात् ॥१०॥

११. वदि अभिवादनस्तुत्योः । गुरून् वन्दते–अभिवादयते । देवान् वन्दते—स्तौति । वन्दिता । वन्दनः । शृवन्द्योरारुः (३।२।१७३)—वन्दारुः । वन्दी मङ्गलः[3] णिनि । अचि (अ० ३।१।१३४) तु वन्दी[4] हठहृता स्त्री । घट्टिवन्दिविदिभ्य उपसंख्यानात् ( अ० ३।३।१०७वा० ) युच्—वन्दना । उणादौ वन्दाकः[5] कामवृक्षः ॥११॥

१२. भदि कल्याणे सुखे च । कल्याणं श्रेयो मङ्गलादि, सुखम् आत्मगुणोदयः । भन्दते । भन्दिता । भदन्तः[6] श्रमणः । चुरादौ (१०।७०) भन्दयति ॥१२॥

१३. मदि स्तुति-मोद-मद-स्वप्न-गतिषु । मोदो हर्षः, मदो दर्पः, स्वप्नेनालस्यमपि लक्ष्यते । चन्द्रस्तु मदि जाड्ये (१।३१५) इत्येवाह । मन्दते । मन्दिता । मन्दः । मन्दिवाशिमथि ( उ० १।३८ ) इत्युरच्—मन्दुरा वाजिशाला । इषितिमिमदि ( दश० उ० ८।२६ 'क'पाठः ) इति किरच्—मन्दिरम् । स्फायितञ्चिवञ्चि ( उ० २।१३ ) इति रक्—

१. 'श्विदि श्वैत्ये' इत्युक्तम्, तत्र श्वैत्यस्य गुणत्वादक्रियात्वेन धात्वर्थाभावात् लक्षणया श्वेतगुणक्रिया लक्ष्यते । श्विन्दते प्रासादः, श्वेतो भवतीत्यर्थः ।

२. 'साध्यैकरूपम्' पाठा० ।

३. 'वैतालशब्दः प्रयोजनमेषां वैतालिका राज्ञोऽवसरपाठका मङ्गला [?, मङ्गला] ख्या', प्रातर्बोधका इत्येके' इत्यमरटीकायां (पृष्ठ १६५) स्वामी ।

४. 'वन्द्यते याच्यते वन्दी हठाहृता स्त्री' इत्यमरटीकायां ( पृ० १९९ ) क्षीरस्वामी ।

५. उणादौ 'आरु' प्रत्ययः दृश्यते (उ० ४।१३), तेनेदं पदं सिध्यतीति स्वामिनोऽभिप्रायः । वन्दारुश्चीवरभिक्षुरिति हेमचन्द्रः (उणादिटीका २४) ।

६. मन्देर्नलोपश्च (उ० ३।१३०) इत्यनेन । प्रव्रजितार्थक इत्युज्ज्वलः । श्रमण शब्दो बौद्धभिक्षुवाचक इत्येके मन्यन्ते । तदसत्, बुद्धप्रादुर्भावात्पूर्वशतसहस्रवर्षप्राचीने शतपथब्राह्मणे (१४।७।१।२२) तस्य प्रयोगदर्शनात् ।

मन्द्रः। मद्रो मायते[1]; (द० उ० ४।१०२) मदिरा च। जिमदिभ्यां न्दिस्य यारन् (उ० ३।१३४) मन्दारः[2]। कृदरादयश्च (उ० ५।४१) इति मन्दरः[3]। खजेर् आकः (उ० ४।१३) इति बाहुलकादाकः—मन्दाकः। मत्वर्थीये चेनौ (द्र० ५।२।११५)—मन्दाकिनी[4] ॥१३॥

१४. स्पदि किञ्चिच्चलने। स्पन्दते, स्पन्दिता। स्पन्दितुम्, स्पन्दनः, स्पन्दः ॥१४॥

१५. क्लिदि परिदेवने। परिदेवनं शोचनम्। क्लिन्दते। उदात्तेत्सु पाठात् (धा० सू० १।५९) क्लिन्दति। स्वरितेत्सु नोक्तः, कर्त्रभिप्रायेऽपि परस्मैपदार्थः[5] ॥१५॥

१६. मुद हर्षे। मोदते मुदिता। रलो व्युपधाद् हलादेः संश्च (१।२।२६) इति विभाषा कित्त्वाद् मुदित्वा मोदित्वा, मुमुदिषते मुमोदिषते। मोदनः। इगुपधज्ञाप्रीकिरः कः (३।१।१३५) कुमुदम्[6]। मोदयति[7] मोदकः। इषितिमिमदिमुदि (द० उ० ८।२६ क) इति किरच्—मुदिरो मे घः। मुदिग्रोर्गग्गौ (उ०१।१२८) मुद्गः। स्फायितञ्चि (उ० २।१३) इति रक्—मुद्रा। चुरादौ मुद संसर्गे (१०।१९०) मोदयति ॥१६॥

१७. दद दाने। ददते, ददेते, ददन्ते। ददिता, ददितुम्। न शसददवादिगुणानाम्[8] (उ० ६।४।१२६) इति लिटि एत्वाभ्यासलोपौ न स्तः—ददे ॥१७॥

---

१. तुलनीया अमरक्षीरटीका पृष्ठ ४८।

२. अमरटीकायां (पृष्ठ १०१) 'मन्दानियर्ति मन्दारः, मन्दा धारा यस्येति वा' इत्युक्तं स्वामिना।

३. 'मन्दरः शैशिरः शलमयन सं दिव नमः' इति त्रिकाण्डशेषः।

४. अमरटीकायां (पृष्ठ १०१) 'मन्दमञ्चति यदम्बुम्' इति निरोभत् स्वामी।

५. अयं भावः—ये खलु धातवः स्वरितेतः (यथा यजादयः), ते कर्त्रभिप्राय आत्मनेपदिनो भवन्ति। अयं तु अनुदात्तेत्सु उदात्तेत्सु चोभयत्र पठितः। तेनानुदात्तेत्त्वाद् अकर्त्रभिप्रायेऽप्यात्मनेपदं भवति, उदात्तेत्त्वात् कर्त्रभिप्रायेऽपि परस्मैपदम्।

६. कौ पृथिव्यां मोदत इति कुमुदम्। ७. 'मोदयते' पाठा०।

८. काशिकादिषु 'न शसददवादिगुणानाम्' इति पाठः। तत्र गुणशब्देन

१८. ष्वद स्वर्द आस्वादने[1]। आस्वादनं जिह्वया लेहः। चैत्राय स्वदते। षोपदेशत्वाद् इण्कोः, आदेशप्रत्यययोः (८।३।५७-५९) इति षत्वम्—असिष्वदत् सौतिस्योरेव चणि (द्र० ८।३।६१) इति नियमात् षत्वं नास्ति—सिस्वदिषते, सिस्वादयिषतीति। सः स्विदिस्वदिसहीनां च (८।३।६२) षत्वाभावः। स्वदनः। कृवापाजिमिस्वदिसाध्यशूभ्य उण् (द्र० उ० १।१) उण्—स्वादुः। चुरादौ ष्वद संवरणे (१०।२००) स्वादयति। स्वर्दोऽषोपदेशः, यत स्मृतिः[2]—अजन्त्यपराः सादयः षोपदेशाः स्मि-स्विदि-स्वदि-स्वञ्जि-स्वपयश्च, सृपि सृजि-स्तृ-स्त्यै-सेक-सृवर्जम् (तु० मा० ६।१।६४)। स्वर्दते, असस्वर्दत ॥१८,१९॥

१९. उर्द माने क्रीडायाञ्च। मितिर्मानं[3]मिति मुख्योऽर्थः[4]। चकारादास्वादनेऽपीति दुर्गः। ऊर्दते, र्वोरुपधाया दीर्घ इकः, हलि च (८।२।७६-७७) इति दीर्घः ॥२०॥

२०. कुर्द गुर्द गुद क्रीडायामेव। क्रीडानियमोऽत्र धातूनामनेकार्थत्वे लिङ्गम्। कूर्दते। स्फूर्जर् (धा०सू०१।१४८) दीर्घोपदेशाद् र्वोरुपधाया दीर्घमनित्यमाहुः[5]—कुर्दते, कुर्दनः। गुर्दनः। गुर्द-

मावितोऽकारो लक्षणया गृह्यते। स्वामिधृते 'गुधिनाम्' इति पाठे गुधः=गुण-शब्दो विधायकत्वेनास्यास्ति इति मत्वर्थीये इनि प्रत्यये शक्त्यैव सोऽर्थो लभ्यते। स्वामिधृतः पाठोऽन्यत्र न कश्चिदुपलब्धः। अत्र तत्त्वबोधिनी द्रष्टव्या (सि० कौ० मा० ३ पृ० १६९)।

१. "संवरणे" इति क्षीरस्वामी इति धातुवृत्तौ (पृष्ठ ४३) माधवः। तथैव पुरुषकारोऽपि (पृष्ठ ४४)।

२. स्मृतिपदेनात्र भाष्यमभिधीयते। तत्र चायं पाठः—'अजन्दन्त्यपराः सादयः षोपदेशाः स्मिङ् स्वदि स्विदि-स्वञ्जि स्वपयश्च, सृपि-सृजि-स्तृ-स्त्या-सेक-सृवर्जम् (६।१।६४)। अजन्दन्त्यौ सात् परौ येषां ते सकारादयः सर्वे षोपदेशा इत्यर्थः (उद्योत)।

३. इह मानं सुखमिति सम्मतायाम् इति धातुवृत्तिः (पृष्ठ ४४)।

४. अत्र 'गाधृ' (१।५) धातोर्वृत्तिस्तत्रस्था टिप्पणी(७) च द्रष्टव्या (पृष्ठ १२)।

५. अयंभावः—'र्वोरुपधाया दीर्घ इकः' (८।२।७६) इत्यनेन 'स्फूर्जा' इति

स्थाने[1] दीर्घाः खुर्दं पेठुः। गुदस्थाने गुधेत्येके। उपाध्यायास्तु गुदक्रीडायां पायुविहार एव द्वौ धातू इति व्याख्यन्, तथेति सभ्याः[2]। गोदते-जुगुदिषते, जुगोदिषते। के (द० ३।१।१३५) गुदम् ॥२१-२३॥

२१. पूद क्षरणे। क्षरणं निरसनम्। सूदते। निसूदितः। चुरादौ षूद निःस्रवणे[3] (तु० १०।१६४) निसूदयति। नन्द्यादौ (द० ३।१।१३४) सूदनः। पचादौ सूदट्—(द० ३।१।१३४) सूदः[4], सूदी। सूददीपदीक्षो च[5] (तु० ३।२।१३५) इति युज् नास्ति—सूदिता ॥२४॥

२२. ह्राद अव्यक्ते शब्दे। अव्यक्तेऽनतिस्फुटवर्णे। ह्रादते दुन्दुभिः, नूपुरह्रादः। पृषोदरादित्वाद् (द० ६।३।१०९) ह्रस्वे कृते ह्रदः ॥२५॥

२३. ह्लादी सुखे च। चकाराद्व्यक्ते शब्दे च। ह्लादते। णिचि (द० ३।१।२६) आह्लादितः। श्वीदितो निष्ठायाम् (७।२।१४) नेट्, निष्ठायां ह्लादो ह्रस्वः (द० ६।४।९५) प्रह्लन्नः। क्तिनि अपीष्यते[6]—प्रह्लत्तिः ॥२६॥

२४. स्वाद आस्वादने। स्वादते। स्वादनः ॥२७॥

२५. पर्द कुत्सिते शब्दे[7]। पायुध्वनौ वर्ततेऽयम्। अन्ये

---

ह्रस्वपाठेऽपि दीर्घत्वं सिद्ध्यत्येव, किं दीर्घोपदेशेन। अतस्तद् व्यर्थं सद् 'र्वोरुपधायाः' इति दीर्घत्वस्यानित्यतां ज्ञापयति।

१. 'कुर्दस्थाने' पाठा०। २. 'तथेति सभ्याः' इति क्वचिन्न।

३. 'निरासे' पाठा०। चुरादौ 'षूद आस्रवणे' (१०।१६४) इति पाठ उपलभ्यते। ४. पाचक इत्यर्थः।

५. 'सूददीपदीक्षश्च' इति काशिकादिषु पाठः।

६. 'ह्लाद इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात्, प्रह्लत्तिः' इति काशिका (६।४।९५) अत्रालोच्या।

७. किमर्थमयं संयोगान्तेषु उर्दादिषु न पठितस्तदाह सायणः—'संयोगान्तेषु उर्दादिष्वयं न पठितः शब्दविशेषार्थेन ग्राधा (? ह्रादा) दिनापि साम्यात्। स्वादिस्वाकारवत् संयोगादित्वेन ह्रादाद्यनुरोधेन मध्ये पठितः, (धा० वृ० पृष्ठ ४५)। एवमनेकत्र धातुपाठक्रमविषये सायणेनोहः कृतः, स तत्रैवानुसन्धेयः, उदाहरणार्थमत्र सायणपाठ उपन्यस्तः।

निश्चयाद्दमयोवार्तं मन्वाना अपाङ्ङ् इत्याहुः । पर्दते । पर्दनः । पर्देर्नित् प्रसारणेमल्लोपश्च (उ० ३।८०) इति पृदाकुः सर्पः ॥२८॥

२६. यती प्रयत्ने । यतते । यतित्वा । ईदित्वाच्छ्वीदितो निष्ठायाम् (७।२।१४) इतीण् नास्ति—यत्तः । यजयाचयतविच्छ[2] (३।३।९०) इति नङ्—यत्नः । यतेर्वृद्धिश्च (उ० २।९७) इत्यृन्—याता देवरभार्या, यातरौ[3] चुरादौ यत निकारोपस्कारयोः (१०।१९१) यातयति ॥२९॥

२७. युत् जुत् भासने । योतते, अयुयोतत् । कौशिकस्तु ज्योतिः सिद्धये जुतिं ज्युतिं[4] मन्यते, ज्योतिश्च द्युतेरिसिजादेश्च जः[5] (तु०उ० २।११०) इति सिद्धम् । जुतिरिति दुर्ग—अजुजुतत् अजोतीत् ॥३०, ३१॥

२८. विथृ वेथृ याचने[6] । वेथते, अविवेथत । किमि विशेषः—विथितः, वेथितः । कौशिकस्तु अविथुरसिद्धये यातन इत्याह, तन्न, व्यथेः सम्प्रसारणं किच्च (उ० १।३९) इति सिद्धेः ॥३२, ३३॥

---

१. प्रसारणशब्दोऽत्र सम्प्रसारणशब्देन समानार्थकः ।

२. काशिकादिषु '०विच्छ' इति पाठः ।

३. दीर्घभाव दर्शयितुमस्योपन्यासः । तथा च स्मृतिः—'पिता माता ननान्दा वा सम्बन्धिभ्रातृयातरः । जामाता दुहिता देवा न वक्तव्या इमे पञ्च दश' ।

४. अमरटीकायां (पृष्ठ २२८) क्षीरस्वामिना "ज्योतते ज्योतिः" इत्युक्तम् । वस्तुतस्तु द्युतिरिव ज्युतिरपि स्वतन्त्रो धातुः । तस्य कात्यायनश्रौतसूत्रे (४।१४।५) 'अनुज्योत्य' इति ल्यबन्तः प्रयोगोऽप्युपलभ्यते । अर्वाक्कालिकैराचार्यैरप्रयोगाद् धातुरयस्य पाठो न कृतः, एतद्धातुविषयक लोके लब्धप्रचारं ज्योतिःपदं तत्समानार्थकाद् द्युतधातोर्निष्पादितम् । उत्तरोत्तरं कथं धातुपाठस्य संक्षेपोऽभूदिति काशकृत्स्न—पाणिनिप्रोक्तयोर्धातुपाठयोस्तुलनया स्पष्टं प्रतीयते ।

५. दशपादी श्वेतवनवासि कातन्त्र हैम कण्ठाभरणादिपठितेनोणादिसूत्रेण सह नेदं संवदति ।

६. 'याचो धान्त इति कौशिकः, क्षीरस्वामिना त्वयं पक्षो दूषितः' इति धातुवृत्तावुक्तम् (पृष्ठ ४१) । सायणोक्तः पाठस्त्वत्र नोपलभ्यते । कदाचिदत्र ग्रन्थपातः सञ्जातः स्यात् ।

२९. श्रथि शैथिल्ये। शैथिल्यमगाढता। श्रन्थते, श्रन्थेश्चेति वक्तव्याद्[1] (काशिका ६।४।१२२) एत्वाभ्यासलोपौ न स्तः, तत्र हि श्रन्थि-रूपोपादानेन श्रन्थ ग्रन्थ सन्दर्भे (तु० ९।४१,४३) इत्यस्य ग्रहणम्—शश्रन्थे, श्रन्थेऽत्राप्याहुः। इदित्त्वादनुनासिकलोपाभावः, श्रेथे इति तूदाहरन् वृत्तिकृद् भ्रान्तः[2]। नोपधात् थफान्ताद् वा (१।२।२३) इति क्त्वा वा कित्—श्रन्थित्वा, श्रथित्वा। शिथिलः (द्र० उ० १।५३) श्लथः॥३४॥

३०. ग्रथि कौटिल्ये। कौटिल्यं कुस्रुतिर्बन्धश्च। ग्रन्थते। ग्रन्थ्यते[3]। ग्रन्थना। ग्रथित्वा, ग्रन्थित्वा। ग्रथितः। खनिकष्यज्य-सिवसि (उ० ४।१३९) इति ग्रन्थिः। क्र्यादौ श्रन्थ ग्रन्थ सन्दर्भे[4] (तु० ९।४१,४३) इत्युदात्तेतौ सकर्मकौ स्तः—श्रथ्नाति। ग्रथ्नाति। श्रथ्यते ग्रथ्यते, अनिदितां हल उपधायाः क्ङिति (६।४।२४) इत्यनुनासिकलोपः। श्रेथुः, ग्रेथुः, शश्रन्थुः, जग्रन्थुरिति[5]। एतौ चुरादौ आधृषाद्वा (१०।२०१) विकल्पितण्यन्तौ स्तः। श्रन्थयति, श्रन्थति, ग्रन्थयति ग्रन्थति। कर्मकर्तरि किरादिश्रिग्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामिति[6] यक्-चिणौ न स्तः—श्रथ्यते स्वयमेव, श्रथ्नीते, अश्रन्थिष्ट। ग्रन्थते, ग्रथ्नीते, अग्रन्थिष्ट॥३५॥

---

१. वार्तिकमिदं भाष्ये नोपलभ्यते।

२. 'इदित्त्वा·········भ्रान्तः' पाठो धातुवृत्तौ (पृष्ठ ४६) उद्धृतः। 'अत्र वृत्तिकारः धातुवृत्तिकृद् उच्यते' इति सायणः (धा० वृ० पृष्ठ ४६)।

३. इदित्त्वाभलोपाभाव दर्शयितु पदमिदमुदाहृतम्।

४. तरङ्गिण्यां क्र्यादौ 'श्रन्थ विमोचनप्रतिहर्षयोः', मन्थ विलोडने, ग्रन्थ सन्दर्भे' (४१–४३) इत्येवं पठ्यते। 'श्रन्थ ग्रन्थ सन्दर्भे' इत्यानुपूर्विकस्तु चुरादौ (२२६) पठ्यते।

५. अत्र कश्चित् पाठो नष्ट इति प्रतिभाति। ये तु 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्' (काशिका १।२।६) इति पठन्ति तेषां मतेऽपि किदवद्भावात्-त्वेऽनुनासिकलोपे एत्वाभ्यासलोपौ श्रेथुः ग्रेथुः। ये तु तादृशवचनस्य भाष्येऽनुक्तत्वाद-प्रामाण्यं मन्यन्ते, तेषां मते शश्रन्थुः जग्रन्थुः इति रूपम्।

६. अयं 'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' (३।१।८७ वा०) इत्यस्य 'भारद्वाजीयाः पठन्ति णिश्रिग्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणाम्' (३।१।८९ वा०) इत्यस्य चार्थतोऽनुवादः।

३१. कत्थ श्लाघायाम्। श्लाघा गुणारोपः। कत्थते, कत्थित्वा। विकत्थनः। वौ कष लस-कत्थ (३।२।१४३) इति घिनुण्—विकत्थी ॥३६॥

३२. उदात्ता अनुदात्तेतः। व्याख्यानमेतत्[1]। भ्वादिगणे प्रथमः प्रघट्टकः तवर्गान्तप्रस्तावाद् एकप्रघट्टकेनोक्तः। एवं यथा-स्थमनुसर्तव्यम् ॥

[ सेटः परस्मैपदिनः ]

३३. अत सातत्यगमने। सातत्येन गमनं नित्यगतिः। इतः शुध्यन्ताः (१।६०) पञ्चत्रिंशदुदात्ताः सेट उदात्तेतश्च परस्मैपदिनः। अतति, अतन्, अतिता। न गतिहिंसार्थेभ्यश्च (१।३।१५) इति व्यतिहारे तङ् नास्ति—व्यत्यतन्ति। अत्यविचमि (उ० ३।११७) इत्यसच्—अतसी[2]। अतन्यामिस्यधि (उ० ४।२) इत्योथिन्—अतिथिः। अत्यतिभ्यां (उ० ४।१३१) इत्याण्-आतिः पक्षी। पादे च (उ० ४।१३२) पदातिः, पादस्य पदाज्याति[3] (तु० ६।५२) इति पात्। सातिभ्यां मनिन्मनिणौ च[4] (तु०उ०४।१५३) इति मनिण्-आत्मा ॥३७॥

३४. चिती संज्ञाने। संज्ञानं संवित्तिः। चेतति। श्वीदितो निष्ठा-याम् (७।२।१४) इति नेट्—चित्तम्। चितितः[5]। रलो व्युपधाद्धलादेः संश्च (१।२।२६) इति वा कित्त्वम्-चितित्वा, चेतित्वा; चिचितिषति, चिचेतिषति। क्विपि[6]-चित्। असुनि—चेतः (द० उ० ४।१८९)। अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति णौ शः—चेतयः। चुरादौ चित संवेदने[7] (१०।१२६) इत्यात्मनेपदी—चेतयते। चेतनम्, चेतना ॥३८॥

---

१. इद वाक्य प्रमाणयति यत् 'उदात्ता अनुदात्तेतः' इत्येवमादीनि वचनानि सूत्राण्येवेति।

२. अमरटीकायां स्वामिना 'न तसने' अतसी' इत्येवमभिहितम् (पृष्ठ १४२)।

३. 'पादस्य पदाज्याति' इत्येवं काशिकादिषु पाठः।

४. इवेत दशपादोणादिषु चकारो न पठ्यते।

५. 'चितिः' पाठे 'क्तिनिष्ठायां चकारः' अत्रोत्पत्तिः इष्टव्यः।

६. 'सम्पदादिभ्यः क्विप्' (३।३।१०८) इति वार्तिकेन।

७. 'चौ' इत्यविपाठितः। ८. चुरादौ 'संवेदने' इति पठ्यते।

३५. च्युतिर् आसेचने। आसेचनमीषत्सेकः। च्योतति, च्योतिता। इरितो वा (३।१।५७) इति लुङि वाऽङ्—अच्युतत्, अच्योतीत्। च्युतित्वा च्योतित्वा, चिच्युतिषति चिच्योतिषति[1] ॥३९॥

३६. श्च्युतिर् क्षरणे। क्षरणं स्रवणम्। शस्तालव्योऽत्र, दन्त्यादित्वे हि—पद्श्च्योतन्तीति श्चुत्वस्यासिद्धत्वाड् ङः सि धुट् (८।३।२९) इति धुडागमः स्यात्[2]। श्मिडाश्चुतिरित्यप्याहुः—श्चोतति, अश्चुतत्, अश्चोतीत्। कौशिकस्तु श्चुतिमयोपधं मन्यते—श्चोतति ॥४०॥

३७. कुथि पुथि लुथि मन्थ हिंसासंक्लेशयोः[3]। हिंसा प्राण्युपघातः, संक्लेशो बाधा। कुन्थति, कुन्थ्यते। नोपधात् थफान्ताद् वा (१।२।२३) कित्—कुन्थित्वा, कुथित्वा। क्र्यादौ कुन्थ संश्लेषणे (तु० ९।४४) कुथ्नाति। पुन्थति। लुन्थति। मन्थति, मथ्यते, मथितम्, मन्थित्वा, मथित्वा। मन्थः (उ० ४।११) इनिः किच्च—मथिन् मन्थाः। अचि—मन्थः। उणादौ मन्थानः[4], शानच्[5]। ज्वलादौ मथ विलोडने (१।५८१) मथति, मथः, माथः। क्र्यादौ मन्थ विलोडने (९।४२) मथ्नाति, मथ्यते। मथिमाथीत्यपीति दौर्गाः[6]—मन्थति, मन्थ्यते; मान्थसि, मान्थ्यते ॥४१–४४॥

---

१. विकल्पेन कित्वं 'रलो व्युपधात्०' (१।२।२६) सूत्रेण द्रष्टव्यम्।

२. 'शस्तालव्यो … … … स्यात्' पाठः प्रक्रियाकौमुदीतोऽपि उद्धृतः (पृष्ठ १२)। अत्र सायणः—'अत एव धुडिकारादिविरोधात् तालव्यादित्वाद्दिवादिनो स्वामिकाश्यपा धुपेदशौ' इत्याह (धा० वृ० पृष्ठ ४८)। दन्त्यादित्वे धुडागमस्तु न प्राप्नोति 'श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम्' (८।२।६ वा०) इत्युक्तत्वात्।

३. सायणादयः 'मन्थ विलोडने' इति स्वतन्त्रं सूत्रं पठन्ति, अत्र च मन्थ स्थाने मथिम्। द्र० धा० वृ० पृष्ठ ४८।

४. 'मन्थान.' इति पाठोऽत्र युक्तः स्यात्। स च 'सम्यानच् स्तुवः' (उ० २।८९) इत्यनेन विहित आनच् बाहुलकाद् द्रष्टव्यः।

५. अमरटीकायामपि 'मथ्नातीति मन्थानः शानच्'(पृष्ठ २१६)इत्याह स्वामी। एतच्च भानुजिदीक्षितेन दूषितम् (अमर० पृष्ठ २२६)। शानच्प्रत्यये नुगभावे साधु। महाभारतादौ शानचि नुगभावो बहुशोऽपलभ्यते।

६. पुरुषकारे (पृष्ठ ७७) धातुवृत्तौ (पृष्ठ ४८) च स्मृतोऽयं पाठः।

३८. षिधु[1] गत्याम् । सेधति, सिषेध । परिषेधति गाम्, गमयतीत्यर्थः । सेधतेर्गतौ (८।३।११३) इति षत्वं नास्ति, अन्यत्र निषेधति पापात् । उपसर्गात् सुनोति-सुवति (८।३।६५) इति षत्वम्, सेधति-निर्देशात् सिध्यतेर् (धा० सू० ४।८४) नास्ति—निसिध्यति । उदितो वा (७।२।५६) इति क्त्वो वेट् सिद्ध्वा, सिधित्वा, सेधित्वा, रलो व्युपधात् (१।२।२६) इति वा कित्त्वम् । यस्य विभाषा (७।२।१५) इति निष्ठायां नेट्—सिद्धः, निरनुबन्धपाठे तु सिधितः[2] । रलो व्युपधाद् (१।२।२६) इति वा कित्वम्—सिसिधिषति सिसेधिषति ॥४५॥

३९. षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शास्त्रविषयं शासनम्। माङ्गल्यं मङ्गलविषया क्रिया[3] । अस्रैधायमृद्धिम्, अर्थान्तरे पुनरुद्धि(त)। ऊदित्वात् स्वरति-सूति (७।२।४४) इति वेट्—सेद्धा पुत्रं, शासितेत्यर्थः, सेधिता । लिटि क्रादिनियमात्[4] नित्यमिट्—सिषिधिव । वसेकाजाद्घसाम् । (७।२।६७) इति क्रसोर्नियमादिड् नास्ति—सिषिद्ध्वान् । दिवादौ षिधु संराद्धौ (४।८४) अनिट्—सिध्यति, सेद्धा ॥४६॥

४०. खाद भक्षणे । खादति, अचखादत् । अदिखादिनीवहीनां प्रतिषेधात् (द० १।४।५२ वा०) कर्मसंज्ञा नास्ति—खादयति पिण्डीं चैत्रेण । निन्द-हिंस-क्लिश-खाद(३।२।१४६)इति वुञ्-खादकः ॥४७॥

४१. खद स्थैर्ये हिंसायां च । खदति । अचि (द० ३।१।१३४) खदा[5] । अजिर शिशिर (उ० १।५४) इति खदिरः ॥४८॥

---

१. इममुदितपाठमुदाहृत्य दूषितवान् सायणः (धा० वृ० पृष्ठ ४९) ।

२. स्मृतोऽयं पाठो धातुवृत्तौ (पृष्ठ ४९) ।

३. 'शास्त्र········क्रिया' इत्युद्धृतमिदं पुरुषकारे (पृष्ठ ८७) स्मृतं च धातुवृत्तौ ( पृष्ठ ५० ) ।

४. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि (७।२।१३) इति नियमः ... **[as printed:]** वृभृस्भ्योऽनुदात्तेभ्यो लिटि इट् प्रतिषेधः सिद्ध एव, किं पुनर्निषेधेन, एवं तर्हि व्यर्थं सञ्ज्ञापयति यदि लिटि इण्निषेधस्तर्हि क्रादिभ्य एव, नान्येभ्यः । अयमेव नियमः क्रादिनियम उच्यते ।

५. अचि स्त्रियां टाप् ।

**४२. बद स्थैर्ये ।** बदति, बद्यते । अमरादौ[1] बदरम्, बदरी । बादिर् ओष्ठ्यादिः । वद व्यक्तायां वाचि (१।७३२) इति तु दन्त्यौष्ठ्यादि — वदति, उद्यते । पदेति कण्ठ —पदति ॥४९॥

**४३. गद व्यक्तायां वाचि ।** गदति । नेर्गद (८।४।१७) इत्युपसर्गाण्णत्वम्—प्रणिगदति । गदमदचरयम (३।१।१००) इति गद्यम् । नौ गदनदपठ (३।३।६४) इति वा अप्—निगदः, निगादो घञ् (द्र० ३।३।१८) भिदादौ (द्र० ३।३।१०४) गदा । गदोऽचि (द्र० ३।१।१३४) । चर्चर-घर्घर-गद्गद-घुर्घुर-घर्घर-जर्जर-झर्झर कर्कर-मर्मर-सर्सर-बुद्बुद-मुर्मुर-मर्मर-दर्दर-पुर्पुरादि[2] [पु] द्वित्वं पृषोदरादित्वात्[3] । चुरादौ स्तनगदी-देवशब्दे (१०।२४७) इत्यदन्तः—गदयति ॥५०॥

**४४. रद विलेखने ।** विलेखनमुत्पाटनम् । रदति । ल्युः (द्र० ३।१।१३४) रदनः । अचि (द्र० ३।१।१३४) रदो दन्तः ॥५१॥

**४५. णद अव्यक्ते शब्दे ।** नदति । उपसर्गादसमासेऽपि (८।४।१४) इति णत्वम्—प्रणदति । नौ गदनद (३।३।६४) इति वा अप्—निनदः, निनादः । पचादौ (द्र० ३।१।१३४) नदट्—नदः, नदी । बहुड् नदेश्च (उ० ३।५२)—नदनुः[4] । चुरादौ (१०।१५७) भासार्थः—नादयति ॥५२॥

**४६. अर्द गतौ याचने च ।** अर्दति । यातने चेत्येके—अर्दितः खेदित इत्यर्थः । तस्मान्नुड् द्विहल (७।४।७१) इति लिटि नुट्—आनर्द । नन्द्राः संयोगादय (६।१।३) इति रेफो न द्विरुच्यते—अर्दिदिषति । ल्युः (द्र० ३।१।१३४) जनार्दनः । अर्दे संनिविभ्य (७।२।२४) निम्नायां नेट्—समूर्णः । अभेश्चाविदूर्ये (७।२।२५) अभ्यर्णे सेने आसाते । चुरादौ अर्द, हिंसि हिंसायाम् (१०।२२०) अर्दयति ॥५३॥

---

१ 'त्रिसरादौ' इति पाठा० । अमरादेस्त्रिसरादेर्वा न क्वचिदुपलभ्यते गणः । अत्र कदाचित् 'उणादौ' इति युक्त पाठ स्यात् । अत्र उ० ३।१३१ सूत्र-व्याख्यानमालोचनीयम् ।

२. हस्तलेखेषु 'पूर्वादि' पाठः । स चाशुद्ध ।

३ पृषोदरादीनि यथोपदिष्टम् (६।३।१०९) इति सूत्रे पृषोदरादेराकृतिगणत्वात् इति भावः ।

४ नदनु=मेघ ।

४७. नर्द गर्द शब्दे। नर्दति। प्रनर्दति, णोपदेशत्वम् अतन्त्रम् परिगणनात्[1]। गर्दति। शृस्पृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च... शॄकॄशलिकलिगर्दिभ्योऽभच् (तु० उ० ३।१२२)—गर्दभः ॥५४,५५॥

४८. तर्द हिंसायाम्। तर्दति। वितर्दिका वेदी[2] ॥५६॥

४९. कर्द कुत्सिते शब्दे। कर्दति। कलिकर्द्योरमः (उ० ४।८४) कर्दमः[3] ॥५७॥

५०. खर्द दन्दशूके। दन्दशूके गर्हितदशनयुक्तायां क्रियायाम्, दशनमात्रे वाच्ये साधननिर्देशः साधनप्रधान-प्रयोग-समवायार्थः[4]। दन्तशूकपाठेऽपि दन्ताः शूका[5] अस्येति स एवार्थः पर्यवस्यति। खर्दति॥

५१. अति अदि बन्धने[6]। अन्तति, आनन्त। अन्तकः। अन्दति, आनन्द। अन्दूदृम्भू (उ० १।९३) इत्यन्दूः पादशृङ्खला[7]। अदि-पाठोऽनार्षः। अन्ये अति इति बन्धने इति पेठुः—इन्त्वाश्चकार[8] ॥५९,६०॥

५२. इदि परमैश्वर्ये। परमैश्वर्यं परमेशानक्रिया। इन्दति। ऋज्रेन्द्राग्रवज्र (उ० २।२८) इति रक्[9]—इन्द्रः ॥६१॥

---

१. 'सर्वे नादयो णोपदेशाः, नृति नन्दि-नर्दि-नक्कि नाटि-नाथृ नाध-नॄवर्जम्' इति णोपदेशस्मृतौ नर्देः प्रतिषेधात् णोपदेशत्वमविवक्षितम् इति भावः।

२. 'वेदिका' पाठा०।

३. अमरटीकायां (पृष्ठ ६२) क्षीरस्वामिना 'कृणोति कर्दमः' इत्युक्तम्।

४. पाठोऽयं सायणेन धातुवृत्तौ (पृष्ठ ५२) स्मृतः।

५. शूकः = अग्रपतीक्ष्णाग्रः।

६. 'अत्र धनपालः—तान्तं द्रविडाः पठन्ति, आर्यास्तु दान्तमिति; उभयमिति मैत्रेय स्वामि काश्यप सम्मताकारादयः' इति धातुवृत्तौ (पृष्ठ ५३) सायणः।

७. 'पादकटकः' पाठा०।

८. 'अतेः पाठोऽनार्षः। अन्ये अदि इति बन्धने इति पेठुः, इन्त्वाश्चकार' इति पुरुषकारे (पृष्ठ ७५) उद्धृतः पाठः। क्षीरतरङ्गिण्यां तु 'अदि' पाठः, न तु 'अतेः'।

९. रद कचित्। रन् इति तु मुख्यम्, रकः कन्-रन्प्रत्ययाभ्यां व्यवहितत्वात्। विशेषस्त्वत्र दशपाद्युणादिवृत्तौ इन्द्रपदटिप्पण्यां (पृष्ठ ३२६ टि० ५) द्रष्टव्यः।

५३. विदि अवयवे । एकदेशगतक्रियायाम् । बिन्दति । बिन्दुः, बाहुलकाद् उः । विन्दुरिच्छुः (३।२।१६९)-इति वेत्तेर् (२।५७) निपातनम् ॥६२॥

५४. णिदि कुत्सायाम् । निन्दति । निन्दा । वा निसनिक्षनिन्दाम् (८।४।३३) णत्वम्—प्रणिन्दिता, प्रनिन्दिता । निन्दहिंस (३।२।१४६) इति वुञ्—निन्दक ॥६३॥

५५. टुनदि समृद्धौ । नन्दति । ण्यन्ताल्ल्युः (द्र० ३।१।१३४) नन्दनः । शुद्धादच्—नन्दः । प्रज्ञाद्यौ (द्र० ५।४।३८) नान्दः, नान्दी[1] । इनि—नन्दी । ण्वुल् (द्र० ३।१।१३३)—नन्दकः । ट्वितोऽथुच् (३।३।८९)—नन्दथुः । नप्तृ च नन्देः (उ० २।९८) ऋन्—ननान्दा भर्तृभगिनी[2], ननान्द्री । रुहिनन्दिजीवि (उ० ३।१२७) इति झच्—नन्दयन्त । अथ मन्ताल्वाद्य (६।४।५५) इत्ययः; णेरिल्नुच्[3] (द्र० उ० ३।२९) नन्दयित्नुः । नन्दा[4] तिथिः[5] ॥६४॥

५६. चदि ह्लादने[5] दीप्तौ च । चन्दति । रक् (द्र० उ० २।१३) चन्द्रः । चन्द्रिका । इषितिमिमदिमुदिखिदिछिदिभिदिमन्दिचन्दि (दश० उ० ८।२६क०) इति किरच्-चन्दिरः । बहुलमन्यत्रापि (उ० २।७८) युच्—चन्दनम् । चन्देरादेश्च छः (उ० ४।२१८) असुन्श्च—छन्दो गायत्र्यादि । बाहुलकाद्[6] अदन्तोऽपि स्वभावः छन्दानुवर्ति[7] ॥६५॥

१ नान्दी=मङ्गलपाठ ।

२. 'पत्युः स्वसा' पाठा० ।

३. प्रकृतिप्रत्ययनिर्देशः । सूत्र त्वेवं पठ्यते—स्तनि हृषि पुषि गदि मदिभ्यो णेरित्नुच्' ।

४ पाठोऽयं क्वचिन्नास्ति ।

५. 'आह्लादने' पाठा० ।

६. 'कृतो बहुलम्' (३।३।११३ वा०) इति बहुलवचनेन । लीबिश महोदयेन 'उणादयो बहुलम्' (३।३।१) इत्यस्य सङ्ख्यानिर्दिष्टा, न तु युक्ता ।

७. 'छन्दानुवर्ती' इति दीर्घपाठो युक्तः । तथा च तदीयामरटीकायां (पृष्ठ १२८) पाठः—'छन्दति छन्द' पदे गायत्र्यादौ, अभिलाषेऽकारान्तोऽपि, यथा छन्दानु-

५७. ग्रदि चेष्टायाम्। ग्रन्दति ॥६६॥

५८. कदि क्रदि क्लदि आह्वाने रोदने च। कन्दति। कन्दो मूलम्। कन्दुः पाकस्थानम्। कन्दुकम्। कन्दरा[1]। क्रन्दति। आक्रन्दः। ल्युः[2] (द्र० ३।१।१३४)—संक्रन्दनः। कदि क्रदि-क्लदि एते त्रयोऽपि वैक्लव्ये (धा० १।५२०) इति घटादावात्मनेपदिनः ॥६७-६९॥

५९. क्लिदि परिदेवने। क्लिन्दति शोचतीत्यर्थः। आद्यो (१।१९५) ऽनुदात्तेत्-क्लिन्दते। क्लिन्द्यते। क्लिन्दितः। दिवादौ क्लिदू आर्द्रभावे (४।१३३) क्लिद्यति, क्लिद्यते। क्लिद्यः ॥७०॥

६०. शुन्ध शुद्धौ। शुन्धति। शुधितः। दिवादौ शुध शौचे (४।८२) शुध्यति, शुद्धः। चुरादौ शुन्ध शौचकर्मणि (१०।२२१) शुन्धयति, शुन्धितः ॥७१॥

६१. उदात्ता उदात्तेतः ॥

---

[ सेट आत्मनेपदिनः ]

६२. शीकृ सेचने। इतः श्लाघान्ताः (१।८१) त्रिचत्वारिंशदुदात्ताः, सेटोऽनुदात्तेतश्चात्मनेपदिनः। शीकते, शीकिता, अशिशीकत। शीकनम्। शीका। पतिकमिभ्रमि (उ० ३।१३२) इति शीकरः। चुरादौ शीक आमर्षणे (१०।२१९) शीकयति, अशीशिकत ॥७२॥

६३ लोकृ दर्शने। लोकते, अलुलोकत। लोकः। आलोकः। चुरादौ लोक भासार्थः (१०।११७) विलोकयति। उलूक ऊर्ध्वलोकनात्[2] ॥७३॥

---

मती'। वस्तुतः छन्दःपद छदि (छन्द) धातोरपठितादेव निष्पादनीयम्, यथामरटीकायां स्वामिना व्युत्पादितम्। दैवतब्राह्मणेऽपि छन्द पदनिर्वचनं 'छन्दांसि छन्दयन्तीति वा' (२।३) इत्येवोक्तम्। एतेनापि छदि (छन्द) प्रकृत्यन्तरकल्पना युक्तैव।

१. कन्दरा = कृत्रिमगृहाकारो गिरिविवरः।

२. अमरटीकायां (पृष्ठ १२७) क्षीरस्वामी—उलति नेत्राभ्यां दहति उलूकः। ऊर्ध्वालोकनादिति निरुक्तम्' इत्याह। दशपाद्युणादिवृत्तौ (३।४६) 'उत्तम्य दृष्टिविषयमालोकयतीति उलूकः कौशिकः', इत्युक्तम्। अत्र हैमोणादिविवरणम् (सूत्र ६१) अपि द्रष्टव्यम्।

६४. श्लोकृ संघाते[1] । संहनने, संहन्यमाने च । श्लोकते । श्लोकः । श्लोकः पद्ये यशसि च[2] ॥७४॥

६५. द्रेकृ ध्रेकृ शब्दोत्साहे । शब्दस्यौद्धत्ये[3] । चन्द्रो वृद्धावित्याह[4] । द्रेकते, अदिद्रेकत । उद्द्रेकः ॥७५,७६॥

६६. रेकृ शङ्कायाम् । शङ्काश्च संशयः । रेकते । यौरेकं संशयं प्राहुः[5] ॥७७॥

६७. शीकृ सेकृ स्रेकृ [स्रकि][6] श्रकि श्लकि गत्यर्थाः । शीकेरर्थभेदात् पुनः पाठः । अत एव चन्द्रो नैनमध्यैष्ट, अन्ये षेकृ इति विकल्पेन षोपदेशकार्यार्थम् पेठुः[7]—सेकते, असिसेकत् असिषेकत । अत्रान्त्यौ तालव्यादी ॥७८-८३॥

६८. शकि शङ्कायाम् । शङ्का परत्रासः । शङ्कते । उणादौ (सू० १ । ३६ ) शङ्कुः[8] । शङ्कुला आयुधम् ॥८४॥

६९. अकि लक्षणे । लक्षणं चिह्नम् । अङ्कते । घञि (३।३।१९) अङ्कः । गुरोश्च हलः (३।३।१०३) इत्यः—अङ्का । न न्द्राः संयोगादयः (६।१।३) इति नो न द्विरुच्यते[9]—अञ्चिकिषते । चुरादौ (१०।३१३) अङ्कयति । ण्यासश्रन्थ (३।३।१०७) इति युच्—अङ्कना पाञ्चालिलालना[10] । मन्दि-वाशि (उ० १।३८) इत्युरच्—अङ्कुरः ॥८५॥

---

१. संघातो ग्रन्थः । स चेदं पठ्यमानव्यापार इति स्वाम्यादयः, काश्यपादयस्तु ग्रन्थितृव्यापार इति ग्रन्थातिवत् सकर्मकः । धातुवृत्ति पृष्ठ ५५ ।

२. इदं मानवममरानुसारि (द्र० अमरकोश ३।३।२) ।

३. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ५५) ।

४. द्रेकृ ध्रेकृ वृद्धौ । चान्द्र धा० सू० १।३३६॥

५. श्लोकांशोऽयमनुपलब्धमूलः ।

६. पुरुषकारे पठ्यते (पृष्ठ ४६) । त्रिचत्वारिंशत्संख्यापूरणार्थमप्यावश्यकः ।

७. पुरुषकार इदमुद्धृतम् (पृष्ठ ४६) मतमिदं सायणेन स्मृतम् (धा० वृ० पृष्ठ ५५)।

८. शङ्कुः जलजन्तुभेदः, स्थाणुः, शल्यं च ।

९. पुरुषकार इदमुद्धृतम् ( पृष्ठ ४६ ), मतमिदं सायणेन स्मृतम् (धा वृ० पृष्ठ ५५) ।

१०. इद क्वचिद्, अस्पष्टमिदम् ।

७०. वकि कौटिल्ये । वङ्कते । वङ्कः । वल्कयादौ (द्र० उ० ४।६६) वङ्क्रिः, वङ्कुः[1] । वक्रम् वञ्चेरक्[2] (द्र० उ० २। १३) वङ्केस्त्वयुक्तम्[3] ॥८६॥

७१. मकि मण्डने । मङ्कते[4] । मङ्कनः, मङ्कना वस्त्रम् । उणादौ (उ० १।४०) मकुरः[5] ॥८७॥

७२. कक लौल्ये । लौल्यं सतृष्णत्वं[6] चापल्यञ्च । ककते । काकः पृषोदरादिः (द्र० ६।३।१०९) ॥८८॥

७३. कुक वृक आदाने[7] । कोकते । के (द्र० ३।१।१३५) कुकः केकरः[8] । संज्ञायां कोकश्चक्रवाकः । उणादौ (द्र० १ । ९४) कोकिलः । वर्कते । वृकः । णौ चङ्युपधाया ह्रस्वः (७ । ४ । १) उर्ऋत् (७ । ४ । ७) वा[9] अवीवृकत्, अववर्कत् । उणादौ[10] वर्करः ॥८९-९०॥

७४. चक तृप्तौ[11] । चकते । चकितः । कठिचकिभ्यामोरः (दश० उ० ८।२९) चकोरः । चकिरम्योरुच्चोपधायाः (उ० २।१४) चुक्रम्[12] । चक प्रतीघाते च (१।५२९) इति घटादौ मित्—चकयति ॥९१॥

---

१. हस्तलेखेषु 'वङ्कुः' इत्येव पठ्यते ।

२. नेदमुणादिसूत्रम्, अपि तु प्रकृतिप्रत्ययनिदर्शनमात्रम् ।

३. इदित्वादनुनासिकलोपाप्राप्तेः ।

४. इतोऽग्रे 'मङ्कः' इति क्वचिदधिकं पठ्यते ।

५. अमरटीकायां क्षीरस्वामी 'मुकुर' इति पठति । तथा चाह प्रक्रियासर्वस्वकारः—'मकारं मुकुरस्याहादुकारं दर्दुरस्य च । बभाण पाणिनिस्तौ तु व्यत्ययेनाह भोजराट् ॥' (प्रक्रियासर्वस्व उणादिप्रकरण १।४०) ।

६. 'गर्धः' पाठा० ।  ७. 'अदने' पाठा० ।

८. (द्र० अमरटीका २।६।४९) 'ऐंचाताना' इति लोके प्रसिद्धः ।

९. वेति न सूत्रावयवः, जिघ्रतेर्वा (७।४।६) इत्यतो वेत्यनुवर्तते ।

१०. उज्ज्वलदत्तेन 'कच्छेररः' (उ० १।१२१) सूत्रे बाहुलकाद् मन्दुरवर्करादिशब्दाः साधिताः ।  ११. इदं सायणेनोद्धृतम् (धा० वृ० पृष्ठ ९६) ।

१२. चुक्रोऽम्लव्यञ्जनम् इत्यमरटीकायां (पृष्ठ २४९) क्षीरस्वामी ।

७५. ककि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः। कङ्कते। कङ्कः। श्वङ्किस्तालव्यादिः। ढौकते, अडुढौकत्। टौकृ इति दुर्गः—टौकते। ष्वष्कते। सुब्धातुष्ठिवुष्वष्कतीनाम् प्रतिषेधात्[1] सत्त्वाभावः। टेकते। टीकते, अटिटीकत्। रङ्घते। बाहुलकात् रघुः। लङ्घते। लङ्घिवंह्योर्नलोपश्च (उ० १।२९) इति लघु। चुरादौ भासार्थौ (१०।१९७) रङ्घयति लङ्घयति ॥९२-१०३॥

७६. लघि भोजननिवृत्तौ च। चाद् गत्यर्थः—नवज्वरो लङ्घनीयः ॥१०४॥

७७. अघि वघि मघि गत्याक्षेपे। गत्याक्षेपो वेगगतिर्गमनारम्भो वा[2]। अङ्घते। उणादावघम्[3], वङ्क्षयादी (द्र० उ० ४।६६) अङ्घ्रिरित्येके ॥१०५-१०७॥

७८. मघि कैतवे च। कैतवं व्याजः। मङ्घते। श्वन्नुक्षन्[4] (उ० १।१५९) इति मघवन् मघवा[5] इन्द्रः ॥१०८॥

७९. राघृ लाघृ द्राघृ ध्राघृ[6] सामर्थ्ये। राघते, लाघते। निष्ठायामनुपसर्गात् फुल्लक्षीब (८।२।५५) इत्युल्लाघः नीरुक्, [अन्यत्र] उल्लाघित इति स्यात्। द्राघिमन्ये न पेठुः ॥१०९—११२॥

---

१. 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति महाभाष्ये (६।१।६४) पठ्यते।

२. 'गतौ गमनारम्भे चेति स्वामी' इति धातुवृत्तौ (पृष्ठ ५०) पाठः।

३. स्वामिनामरटीकायां (पृष्ठ १६) 'न जहाति अघम्' इति व्याख्यातम्।

४. उणादिषु 'श्वन्नुक्षन्' इत्यपि पठ्यते। यथमेव च युक्तः पाठः। दमो ह्रस्वादचि (८।३।३२) इति नुटो नित्यत्वात्।

५. मघवन् नान्तस्यैव 'मघवा' पदम् इति ज्ञापनाय प्रातिपदिकस्यापि निर्देशः। मघवान् इति तु मतुबन्तस्य भवति।

६. क्षीरस्वामिना धास्य रूपाणि न निर्दिष्टानि। सायण. 'धातु तवर्गचतुर्थादिमपि केचित् पठन्ति' (धा० वृ० पृष्ठ ५०) इत्युक्तवान्, न तु स्वामीति।

८०. द्राघृ आयासे च। आयासः कदर्थनम्[1]। कौथिकस्त्वायामे, दैर्घ्यविशिष्टायां क्रियायामित्याख्यत्[1]। काल्पनिके हि प्रकृति-प्रत्ययविभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव[2] साधिताः, एवम् नेदिष्ठादयो नेदत्यादेः[3]। द्राघते, अदद्राघत॥११३॥

८१. श्लाघृ कत्थने। कत्थनमुत्कर्षाख्यानम्। श्लाघह्नुङ् (१।४।३४) इति सम्प्रदानम्—चैत्राय श्लाघते। अशश्लाघत॥११४॥

८२. उदात्ता अनुदात्तेतः॥

[सेटः परस्मैपदिनः]

८३. फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनम्, असद्व्यवहारो वा। इतः शिष्यन्ताः (११९६) पञ्चचत्वारिंशत् सेटः परस्मैपदिनश्च।

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ५७) प्रौढमनोरमायां (पृष्ठ ५५८) च।

२. 'धातुष्वेव' पाठा०।

३. नामानि सर्वाणि धातुजानीति नैरुक्तानां प्रायो वैयाकरणानां च मतम्। परवर्तिकालिकैस्तु वैयाकरणैरुत्तरोत्तर नाम्नां धातुजत्वं विहाय तद्धितान्तत्वं स्वीकृतम्। यथा गोमयपदस्य 'गोम उपलेपने' इति चौरादिकाद् (१०।२६१) धातोर्निष्पत्तौ सम्यगर्थसिद्धौ सत्यामपि 'गोश्च पुरीषे' (४।३।१४५) इत्यनेन गोप्रातिपदिकात् निष्पत्तिरुक्ता, तथा सति माहिषगोमये लक्षणा कर्तव्या भवति (धातुजत्वे तु न लक्षणाया आवश्यकता)। एवं कम्पशब्दस्य कृदन्तत्वेऽपि वार्तिककारेण 'तदधिनो वा' (महा० १।१।९७ वा०) इत्यनेन तद्धितान्तत्वमपि प्रतिपादितम्। अपि च 'होमी' पदं पाणिनीयलक्षणेन होमोऽस्यास्तीत्येवं तद्धितान्त प्रतीयते, परन्तु यास्केन 'सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका, यथा……… दर्वी होमी' (नि० १।१४) इत्यस्मिन् वाक्ये कृदन्तत्वं प्रतिपादितम्। अपि च काशकृत्स्नधातुपाठस्य कन्नडटीकायां क्वचित् प्राचीनां टीकामाश्रित्य बहूनां तद्धितप्रत्ययान्तत्वेन मन्यमानानां पदानां कृदन्तत्वं प्रतिपादितम्। यथा—द्युत धातोः द्योतन द्योतनीयं द्युत्य द्यौत्यम् (पृष्ठ १२०) एवं रुचधातोः रौच्यम् (पृष्ठ १२०) मिदेः मेद्य मैद्यम् (पृष्ठ १२१) पुटेः पुट्य, पौट्यम्, रुदेः रोद्य रौद्यम् (पृष्ठ १३१) चोरयतेः चौर्यम् (पृष्ठ २५२)। इत्यमेव कस्मिंश्चित् प्राचीने व्याकरणे द्राघिमादयो द्राघतेः, नेदिष्ठादयश्च नेदत्यादेर्निष्पन्नाः स्युः। यथायथा हि लोके यौगिकार्थपरिज्ञानशक्तेरभावः सञ्जातस्तथातथा शब्दा रूढत्वमापन्नाः।

७५. ककि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः । कङ्कते । कङ्कः । श्वङ्किस्तालव्यादिः । ढौकते, अडुढौकत । टौकृ इति दुर्गः—टौकते । ष्वष्कते । सुध्यातुष्ठिवुष्वष्कीनां प्रतिषेधात्[1] सत्वाभावः । टेकते । टीकते, अटिटीकत । रङ्घते । धातुलकात् रघुः । लङ्घते । लङ्घिबंह्योर्नलोपश्च (उ० १।२९) इति लघु । चुरादौ भासार्थौ (१० । १९७) रङ्घयति लङ्घयति ॥९२–१०३॥

७६. लघि भोजननिवृत्तौ च । चाद् गत्यर्थः—ज्वरे लङ्घनीयः ॥१०४॥

७७. अघि वघि मघि गत्याक्षेपे । गत्याक्षेपो वेगगतिर्गमनारम्भो वा[2] । अङ्घते । 'उपादावघम्'[3], वङ्क्रपार्श्वौ (द्र० उ० ४।६६) अङ्घ्रिरित्येके ॥१०५–१०७॥

७८. मघि कैतवे च । कैतवं व्याजः । मङ्घते । श्वन्नुक्षन्[4] (उ० १।१५९) इति मघवन् मघवा[5] इन्द्रः ॥१०८॥

७९. राघृ लाघृ द्राघृ ध्राघृ[6] सामर्थ्ये । राघते, लाघते । निष्ठायामनुपसर्गात् फुल्लक्षीब (८।२।५५) इत्युल्लाघः नीरुक्, [ अन्यत्र ] उल्लाघित इति स्यात् । द्राघिमन्ये न पेठुः ॥१०९—११२॥

---

१. 'सुध्यातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति महाभाष्ये (६।१।६४) पठ्यते ।

२. 'गतौ गमनारम्भे चेति स्वामी' इति धातुवृत्तौ (पृष्ठ ५०) पाठः ।

३. स्वामिनामरटीकायां (पृष्ठ १६) 'न जहाति-पघम्' इति व्याख्यातम् ।

४. उणादिषु 'श्वन्नुक्षन्' इत्यपि पठ्यते । श्वमेव च युक्तः पाठः । ङमो ह्रस्वादचि (८।३।३२) इति ङुटो नित्यत्वात् ।

५. मघवन् नान्तस्यैव 'मघवा' पदम् इति ज्ञापनाय प्रातिपदिकस्यापि निर्देशः । मघवान् इति तु मतुबन्तस्य भवति ।

६. क्षीरस्वामिना चास्य रूपाणि न निर्दिष्टानि । सायणः 'धाघृ तवर्गचतुर्थादिमपि केचित् पठन्ति' (धा० वृ० पृष्ठ ५७) इत्युक्तवान्, न तु स्वामीति ।

८०. द्राघृ आयासे च। आयासः कदर्थनम्[1]। कौशिकस्त्वायामे, दैर्घ्यविशिष्टायां क्रियायामित्याख्यत्[1]। काल्पनिके हि प्रकृति-प्रत्यय-विभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव[2] साधिताः, एवम् नेदिष्ठादयो नेदत्यादेः[3]। द्राघते, अदद्राघत ॥११३॥

८१. श्लाघृ कत्थने। कत्थनमुत्कर्षाख्यानम्। श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानम्—चैत्राय श्लाघते। अशश्लाघत ॥११४॥

८२. उदात्ता अनुदात्तेतः ॥

[सेटः परस्मैपदिनः]

८३. फक्क नीचैर्गतौ। नीचैर्गतिर्मन्दगमनम्, असद्व्यवहारो वा। इतः शिष्यन्ताः (११९६) पञ्चचत्वारिंशत् सेटः परस्मैपदिनश्च।

---

1. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ५७) मौदसनोरमायां (पृष्ठ ५५८) च।

2. 'धातुन्वेव' पाठा०।

3. नामानि सर्वाणि धातुजानीति नैरुक्तानां प्राचां वैयाकरणानां च मतम्। यौत्तरकालिकैस्तु वैयाकरणैरुत्तरोत्तरं नाम्नां धातुजत्वं विहाय तद्धितान्तत्वं स्वीकृतम्। यथा गोमयपदस्य 'गोम उपलेपने' इति चौरादिकाद् (१०।२६१) धातोर्निष्पत्तौ सम्यगर्थसिद्धौ सत्यामपि 'गोश्च पुरीषे' (४।३।१४५) इत्यनेन गोप्रातिपदिकाद् निष्पादिताः, तथा सति माहिषगोमये लक्षणा कर्तव्या भवति (धातुजत्वे तु न लक्षणाया आवश्यकता)। एवं वप्यशब्दस्य कृदन्तत्वेऽपि वार्तिककारेण 'तदधिनो वा' (महा० ५।१।९७ वा०) इत्यनेन तद्धितान्तत्वमपि प्रतिपादितम्। अपि च 'होमी' पदं पाणिनीयलक्षणेन होमोऽस्यास्तीत्येवं तद्धितान्तं प्रतीयते, परन्तु यास्केन 'तन्नयल्पप्रयोगाः कृतोऽप्यैकपदिकाः, यथा·········दर्वी होमी' (नि० १।१४) इत्यस्मिन् वाक्ये कृदन्तत्वं प्रतिपादितम्। अपि च काशकृत्स्नधातुपाठस्य कन्नडटीकायां काचित् प्राचीनां टीकामाश्रित्य बहूनां तद्धितप्रत्ययान्तत्वेन मन्यमानानां पदानां कृदन्तत्वं प्रतिपादितम्। यथा—चुत धातोः चोतनं चोतनीयं चुतस्य चौत्यम् (पृष्ठ १२०) एवं रुचधातोः रौच्यम् (पृष्ठ १२०) भिदेः भेद भैद्यम् (पृष्ठ १३१) पुटेः पुट्यं, पौट्यम्, रुटेः रोट्यं रौट्यम् (पृष्ठ १३१) चोदयतेः चौद्यम् (पृष्ठ २५२)। इत्थमेव कस्मिंश्चित् प्राचीने व्याकरणे द्राघिमादयो द्राघतेः, नेदिष्ठादयश्च नेदत्यादेर्निष्पन्नाः स्युः। यथायथा हि लोके यौगिकार्थपरिज्ञानशक्तेरभावः सञ्जातस्तथातथा शब्दा रूढत्वमापन्नाः।

फक्कति । फक्किता । फक्कितम्-निगीर्णम् । फक्का, फक्किका[1] ॥११५॥

८४. तक हसने । सहन इति दुर्गः[2] । तकति ॥११६॥

८५. तकि कृच्छ्रजीवने । आतङ्कति । आतङ्कः ॥११७॥

८६ शुक गतौ । शोकति । के (उ० ३ । ३ । १३५) शुकः[3] । उणादौ (२।२८) शुक्रशुक्लौ ॥११८॥

८७ बुक्क भाषणे । भषण इत्येके[4] । बुक्कति, श्वा । बुक्का सुगन्धद्रव्यपिष्टम्[5] ॥११९॥

८८. खर्ख हसने । खर्खति । खर्खा भगास्यम् । खक्खेति दुर्गः । खक्खटो वृद्धः ॥१२०॥

८९. ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः । ओखति । एङि पररूपम् [६।१।९४] प्रोखति । ओखाञ्चकार । उवोखेति

अत एव पाणिनिना यौगिकत्वेन प्रतिज्ञाता पाचकयाजकादयः शब्दा अप्युत्तरकाले रूढत्वेन स्वीकृताः । अतएव च कातन्त्रीयकृद्व्याख्यानारम्भे दुर्गसिंहेनोक्तम्—"वृक्षादिवदमी रूढा कृतिना न कृता कृतः । कात्यायनेन ते सृष्टा विबुद्धिप्रतिपत्तये" ॥ इति ॥

१. इदं क्वचित् ।

२. पुरुषकारे (पृष्ठ ४७) तु "क्षीरस्वामी सहन इत्युक्त्वा हसन इति दुर्गः" इत्येवं विपरीतमुद्धृतम् ।

३. अत्राह सायणः — 'अस्मिन् (शुक धातौ) हि सति शुकवल्कोल्काः (उ० ३।४२) इति शुकेः कनि मलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन क-प्रत्ययेनैव सिद्धत्वात्, तथा शुकेरविधानेनापि शुक शब्दसिद्धौ ऋज्रेन्द्रादौ शुकेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयते' इति । मधुकादिपदसिद्धिं प्रमाणी-कृत्य धातूनामनार्षत्ववचनं युक्तं स्याद्धि बहूनामविगीतत्वेन पठितानां सायणेन स्वीकृतानां च धातूनामनार्षत्वं सिद्ध्येत । एवमेव सर्वैः प्राचीनैः पाणिनीयैरितरैश्च वैयाकरणैरविगीतत्वेन भ्वादौ पठितस्य कमः सायणेन अयाथाख्यानं कृतम् (एतद्विषये तत्प्रकरण एव विस्तरेण वक्ष्यते) । तस्माच्चिन्त्योऽयं पन्थाः ।

४. इदं पुरुषकारे (पृष्ठ ४६) उद्धृतम् । ५. क्वचित् ।

भ्रान्तः[1] । मा भवान् ओखिखत्[2] । ऋदित्त्वादेवौदित्त्वं नास्ति साहचर्यात्[3] ॥१२१-१२५॥

१०. शाखृ श्लाखृ व्याप्तौ । शाखति, अशशाखत् । शाखा । शाखोटो[4] वृक्षः ॥१२६, १२७॥

११. उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः । ओखति, प्रोखति । उखा स्थाली । उखिरिदन्तोऽप्यार्यः, न्यूङ्खा षोडशाः षोडशोऽन्त्याद्यमनुस्मृतः । मखति । मखः । मङ्खति । मङ्खो बन्दी । द्विर्णखिर् णोपदेशाविकल्पार्थः—प्रनखति, प्रणखति । रखति । इदनुबन्धत्वाद् रङ्खतीत्येके । प्रेङ्खति । प्रेङ्खा । वल्गति । वल्गः, वल्गा । रङ्गति । रङ्गः । लङ्गति । लङ्गः खञ्जने पक्षिविशेषेऽयं रूढः । लङ्घिकम्प्योरुपतापशरीरविकारयोः (६।४।२४ वा०) नलोपाद् विलगितः पशुः । अङ्गति । अङ्गम् । अङ्गेर्नलोपश्च (उ० ४।५०) इत्यग्निः । अङ्गिमदिमन्दिभ्य आरन् (उ० ३।१३४) अङ्गारः । ऋतन्यञ्जि (उ० ४।२) इत्यङ्गुलिः । धमेर्गेरिश्च शो वा (प्र० प० १।४५) इति व्युत्पत्त्यन्तरेण निरूढादीनां प्रकृतिप्रत्ययौ यथाकथंचिद् कल्पनीयौ इति ज्ञाप्यते[6] ।

१. कोऽत्र भ्रान्त इति न ज्ञायते । इत्यादिग्रहणस्वादाना भवितव्यम् ।

२. 'ओखिखत्' पाठा० । अयं चापपाठः ।

३. ऋकारौकारयोरित्त्वेऽनर्थको धातुः स्यात् ।

४. 'शाखोटकः' पाठा० ।

५. द्र० काशिका १।२।३४ ॥ षोडश न्यूङ्खसंज्ञका ओकारा आश्वलायनश्रौतसूत्रे (७।११) व्याख्याताः । ते तत्रैव द्रष्टव्याः । कथमुखिरिदर्थ इति तु न व्यक्तीकृतं स्वामिना ।

६. उणादौ निरूढानामेव शब्दानां स्वरवर्णानुपूर्विज्ञानार्थं व्युत्पादनमित्याधुनिकानां वैयाकरणानां मतम् । स्वामिदयानन्दसरस्वती तु स्वोणादिकोशव्याख्यायां प्रतिपदं यौगिकार्थं रूढार्थं च प्रदर्शितवान् । तेन तन्मते उणादौ न केवलं निरूढपदानामेव व्युत्पादनम् । नैगमरूढिभवं हि सुसाधु, नैगमा रूढिभवाश्च कथं साधवः स्युरिति वदता महाभाष्यकारेण उणादौ न केवलं रूढानामेव व्युत्पादनमपि तु नैगमाना-

घङ्गिर्गतिवैकल्ये रूढः—घङ्गति, घङ्गः। मङ्गेरलच् (दश० उ० ८।१२३) मङ्गलम्। तगिः स्खलने रूढः—तङ्गति। इङ्गति, इङ्गितम्। आलिङ्गति, लिङ्गम्। चुरादौ लिगि चित्रीकरणे (१०।१८३)—लिङ्गयति। द्रमिडानाम् रिखिरपि[1]—रिङ्खति, रिङ्खणम् स्खलनम्[2]। श्रगीति च चन्द्र (च० धा० १।३८) श्रङ्गति ॥१२८–१५५॥

९२. त्वगि कम्पने च। त्वङ्गति ॥

९३. युगि जुगि वुगि[3] वर्जने। युङ्गति। जुङ्गति। जोङ्गनी सुवर्णकारभाण्डम्। भुगि भर्जन इत्येके ॥१५६–१५८॥

९४. दघि पालने च। चकाराद् वर्जने च—दङ्घति ॥१५९॥

९५. घग्घ हसने। घग्घति। घग्घरी कलशी[4]। गादिरित्येके—गग्घति। कण्ठो ह्यावप्याह ॥१६०॥

९६. शिघि आघ्राणे। आघ्राणं गन्धोपादानम्। शिङ्घति। शाणको लूशिङ्घिभ्यः (द० उ० ३।२७) शिङ्घाणकः पीनसः[5] ॥१६१॥[6]

९७. उदात्ता उदात्तेतः ॥

[ सेट आत्मनेपदिनः ]

९८. वर्च दीप्तौ। इत ईङ्गान्ता (१।११२) विंशतिः, सेटः आत्मनेपदिनश्च। वर्चते, वर्चिता। सुवर्चिका टङ्कनम्, सुवर्चला शाकम्। असुन् (द० उ० ९।४९) वर्चः—अशुचितेजसो ॥

९९. षच सेचने। सचते, असीषिचत्। मितनिगमिसिविमसि (तु० उ० १।६९) इति तुन्—सक्तुः। षच समवाये (धा० सू० १।२८५ व्याख्या)

मपि, ते च नैगमा यौगिका एव, न रूढा इत्युभयमपि प्रतिपादितम्। अत्र विशेषोऽस्मत्सं पादितायां दशपाद्युणादिवृत्तेरुपोद्घाते (पृष्ठ २०,२१) द्रष्टव्यः।

१. 'द्रमिडास्तु रिखमपि पठन्ति' इति सायण आह (धा० वृ० पृष्ठ ५९)।

२. 'लेखनम्' पाठा०। ३. 'वुगि' इति मैत्रेयसायणादयः।

४. 'कलशिः' पाठा०। ५. प्रतिश्यायस्तु पीनस इत्यमर (२।७।११)

६. पूर्वप्रघट्टकान्ययायां ११४ धातुसंख्यायामेतत्प्रघट्टकस्य ८२ सूत्रन्याख्योक्तायां ४५ धातुसंख्यायाः सम्मेलने (११४+४५=) १५९ संख्या भवति।

भस्मात्—सचति, सचिवः[1] ॥१६३॥

१००. लोचृ दर्शने । लोचते, अलुलोचत् । आलोचितः, लोचनम् । लोचक—स्त्रीशिरोवस्त्रम्, शिरस्त्रश्च । चुरादौ भासार्थः (१०।१९७) आलोचयति, आलोचना ॥१६४॥

१०१. शच व्यक्तायां वाचि । तालव्यादिः । शचते । शची ॥

१०२. श्वच श्वचि गतौ । श्वचते, श्वञ्चते[2] ॥१६६, १६७॥

१०३. कच बन्धने । कचते । कचः, काचः । काचरः । कच शब्द उदासेन्[3]—कचाति खच इति लौकिकोऽस्ति[4] ॥१६८॥

१०४. कचि दीप्तिबन्धनयोः । कञ्चते, कञ्च्यते । काञ्चनम् । काञ्चिकम् । काञ्ची । प्रायः कचिरिदित् परस्त्वनिदिदित्येके[5] ॥

१०५. मच मुचि कल्कने । कल्कनं दम्भः कथनञ्च[6] । मचते । मुचेति चन्द्रः (चु० च० धा० १।२५६) मोचते । मुञ्चते[7], मुञ्च्यते । तुदादौ मुच्लृ मोक्षणे (६।१३१) मुञ्चति, मुच्यते ॥१७०, १७१॥

---

परमत्र १६१ जायते । यतोऽत्र कौचिद् द्वौ धातू अधिकौ पठितौ ।

१. चौरतरक्रियया नाम कश्चिन् सावात् पठ्यते । 'षच समवाये' (१।२८५) इत्यस्य व्याख्याऽत्र द्रष्टव्या । सायणस्तु डुपचष् पाके (१।०१८) इत्यस्मादनन्तरं 'षच समवाये' इति पठति (धा० वृ० पृष्ठ० २०२) ।

२. इतोऽग्रे 'शचि श्वचीति कौशिक.' इत्यधिक. क्वचित् पाठः ।

३. अस्मिन्नपु परस्मैपदिषु मान्तेषु धातुषु 'कच' धातुः चौरतरक्रियमानत्वाद्ध च धातुवृत्तिषु न पठ्यते ।

४ धातुपाठेऽपठितोऽपि लोके प्रयुज्यत इत्यर्थः । अपरे लौकिकशब्दस्य प्राकृत इत्यर्थं प्रतिजानते । तन्न, संस्कृतशब्दानां साधुत्वान्वाख्याने प्राकृतानामुपभ्रंशभूतानां शब्दानामन्वाख्यानस्य प्राप्तेरसमवात् ।

५. सायणस्तु 'कचि काचि दीप्तिबन्धनयो.' इत्येव पठति । मैत्रेयस्तु काचि न पपाठ । काचन काची इत्युभयमन्येषामपि दृश्यते (६।३।१२७) इति दीर्घं चमाह (धातुप्रदीप पृष्ठ १९) ।

६. पाठोऽयं धातुवृत्तौ (पृष्ठ ६१) उद्धृतः । मैत्रेयस्तु कल्कनं दम्भः शाठ्यं चेत्याह (धा० प्र० पृष्ठ १९), दीक्षितस्तु कथने चेत्याह (सि० कौ०) ।

७. उद्धृतमिदं पुरुषकारे (पृष्ठ २९) ।

घङ्गिरिति रैकल्ये रूढ.—चङ्गति, चङ्ग । मङ्गेरलच् (दश० उ० ८।१२३) मङ्गलम्। तगिः स्खलने रूढ.—तङ्गति । इङ्गि, इङ्गितम् । आलिङ्गति, लिङ्गम् । चुरादौ लिगि चित्रीकरणे (१०।१८१)—लिङ्गयति । द्रमिडानाम् रिखि-रपि[1]—रिङ्खति, रिङ्खणम् स्खलनम्[2] । अगीति च चन्द्र (च० धा० १।३८) अङ्गति ॥१२८–१५५॥

९२. त्वगि कम्पने च । त्वङ्गति ॥

९३. युगि जुगि वुगि[3] वर्जने । युङ्गति । जुङ्गति । जोङ्गनी सुवर्णकारभाण्डम् । भुगि मर्जन इत्येके ॥१५६–१५८॥

९४. दघि पालने च । चकाराद् वर्जने च—दङ्घति ॥१५९॥

९५. घग्घ हसने । घग्घति । घग्घरी कलशी[4] । गाघ्रिरित्ये-के—गग्घति । कण्ठो ह्यावप्याह ॥१६०॥

९६. शिघि आघ्राणे । आघ्राणं गन्धोपादानम् । शिङ्घति । भाषको लुरशिङ्घिभ्यः (द० उ० ३।२७) शिङ्घाणकः पीनसः[5] ॥१६१॥

९७. उदात्ता उदात्तेतः ॥

[ सेट आत्मनेपदिनः ]

९८. वर्च दीप्तौ । इत ईजान्ता (१।११२) धिदाति, सेट आत्मनेपदिनश्च । वर्चते, वर्चिता । सुवर्चिका टङ्कनम्, सुवर्चला शाकम् । असुन् (द० उ० ९।४९) वर्च.—अशुचितेजसो ॥

९९. षच सेचने । सचते, असीषिचत् । मितनिगमिसचिमसि (उ० उ० १।६९) इति तुन्—सक्तव । षच समवाये (धा० सू० १।२८५ व्याख्या)

---

अपि, ते च नैगमा यौगिका एव, न रूढा इत्युभयमपि प्रतिपादितम् । अत्र विशेषोऽस्मत्स पादितायां दशपाद्युणादिवृत्तेरुपोद्घाते (पृष्ठ २०, २१) द्रष्टव्य. ।

१. 'द्रमिडास्तु रिखमपि पठन्ति' इति सायण आह (धा० वृ० पृष्ठ ५९) ।

२ 'लेखनम्' पाठा० ।

३ 'वुगि' इति मैत्रेयसायणादय ।

४ 'कलशि.' पाठा० ।

५ प्रतिश्यायस्तु पीनस इत्यमर (२।७।५१)

६. पूर्वग्रन्थप्रकान्त्यायां ११४ धातुसङ्ख्यायामेतद्ग्रन्थप्रकस्य ८३ सूत्रव्या ख्योक्तायां ४५ धातुसङ्ख्याया सम्मेलने (११४+४५=) १५९ सङ्ख्या भवति ।

(द्र० ३।३।१९) भर्गो रुद्रः । इंदित्वाद् (द्र० ७।२।१४) भृक्तः[1] । भृष्टम भ्रस्जेः (६।४) रूपम । अबीभृजत, अबभ्रजंत । ऋदुपधाच्चाक्लृपिचृतेः (३।१।११०) क्यप्—भृज्यम् । अवश्यभर्ज्यम् एव आवश्यक (७।३।६५) इति कुत्वाभावः । उणादौ भर्जुरम्योपः ॥१७६, १७७॥

१९१. एजृ भ्रेजृ भ्राजृ दीप्तौ । एजते । एङि पररूपम् (६।१।९४) प्रेजते । मा भवानेजिजत इत्यत्र नित्यत्वादभ्यासहृस्वात् द्विर्वचने कृते ह्रस्वप्रसङ्गाभावात् ऋदित्वं व्यर्थमिति न वाच्यम्, ओणृज्ञापकात्[3] । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—उदेजयः । एजृ कम्पने (१।१४७) अस्माद्रेजति, तथा एजेः खश् (३।२।२८) अङ्गमेजयः । भ्रेजते, भ्राजते, भ्राजभास-भाषदीप (७।४।३) इति विकल्पेनात्वम्[4]—अबभ्राजत् अबिभ्रजत् । भ्राजृ टुभ्राजृ (१।५६४) इति वक्ष्यते, तस्य फणादित्वाद् वैत्वाभ्यासलोपौ प्रयोजनम्—भ्रेजे, बभ्राजे, तथा व्रश्चभ्रस्ज (८।२।३६) इति षः, राजृसहचरितस्य यथा स्यात्—वाभ्राड् । अस्य तु वाभ्राक्[5] । भ्राजभासधुर्वि (३।२।१७७) इति क्विप्—विभ्राट् । नभ्राण्नपात् (६।३।७५) इति प्रकृतिः[6] । भुवश्च (३।२।१३८) इति चकाराद् इष्णुच्[7]—भ्राजिष्णुः । रेजृ इति च पन्नः[8] (धा० भा० १।३६४) ॥१७८–१८०॥

१९२. ईज गतिकुत्सनयोः । ईजते, बीज्यते । ईजीमि दुर्गः—ईज्जते । बीजिर्लौकिका[9] दबीजयत् ॥१८१॥

---

१. श्वीदितो निष्ठायाम् (७।२।१४) इत्यनेनागमाभाव इत्यर्थः ।

२. द्र० अमरक्षीरटीका (वैश्यवर्ग ४७) अम्बूषपदव्याख्याने ।

३. द्विर्वचनात् पूर्वं ह्रस्वत्व प्रवर्तेत यदि शेषः ।

४. नायं विकल्पेनात्वं विधत्ते, तेन 'विकल्पेन ह्रस्वत्वम्' इति वाच्यम् ।

५. मतमिदं सायणेन स्मृतम् (धा० वृ० पृष्ठ ६३) ।

६. नभ्रो नकारस्य प्रकृतिभावः इत्यर्थः ।

७. यथोक्तं काशिकायाम्—'चकारोऽनुक्तसमुच्चयार्थः । भ्राजिष्णुना लोहित-चन्दनेन' इति ।

८. यथोक्तं धातुवृत्तौ—अत्र रेजिरपि क्वचित् पठ्यते, तदन्यार्थमेव (पृ० ६२)।

९. बीजधातुः शास्त्रेऽपठितोऽपि लोके सम्प्रचरति इत्यर्थः । 'संबीजते' इति

१०६. मचि धारणोच्छ्रायपूजनेषु । मञ्चते । मञ्चः । उणादौ मञ्चुका खट्विका । मञ्चिकेति सभ्याः ॥१७२॥

१०७. पचि व्यक्तीकरणे । पञ्चते, प्रपञ्च्यते । अच्—पञ्चः । पञ्चिका[1] न्यासः । पञ्चः । पञ्चाला । घञ्—पङ्कः । चुरादौ पचि विस्तारवचने (१०।१०१) प्रपञ्चयति । एरजण्यन्तानाम्[2] इत्यस्य प्रायिकत्वात् प्रपञ्चः, अस्य तु घञि कुत्वं स्यात् । दुर्गोऽप्युन्तमाह ॥१७३॥

१०८. ष्टुच प्रसादे । स्तोचते । घञि—स्तोकः[3]॥

१०९. ऋज गतिस्थानार्जनोर्जनेषु[4] । ऊर्जनम् प्राणनम् । अर्जते, उपार्जते, आनृजे । अन्ये तृद्रिकोद्रेकार्थं हलादिमेन मन्यन्ते[5]॥

११०. ऋजि भृजी भर्जने । भर्जनं पाकप्रकारः । ऋञ्जते, आनृञ्जे[6] । उणादौ (द्र० ४।२२) ऋञ्जीकम् विरूपवचनम् । भर्जते । घञ्

---

१ पञ्चिका स्थाने पञ्जिका शब्दोऽपि प्रयुज्यते ।

२ महाभाष्ये नैतादृश किञ्चिद् वचनमुपलभ्यते । काशिकाकारोऽपि 'उञ्छादीनां च' (६।१।१६०) सूत्रवृत्तौ 'एरजण्यन्तानाम् इति वचनात्' इत्यत्र स्मरति । मूलमस्य मृग्यम् ।

३ 'स्तौति स्तोकम्' इति क्षीरस्वाम्यमरटीकायाम् (पृष्ठ २४५) । निरुक्ते (२।१) तु 'अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकता तर्कुरि' इति ब्रुवता यास्केन श्च्युतिर् स्तोक इत्यस्मात् स्तोकपदनिष्पत्तिरुक्ता ।

४ ऊर्जनमिति क्षीरस्वामिधनपालशाकटायना' (धातु० वृत्ति पृ० ६२) 'तथैव पुरुषकारे (पृष्ठ ५८) ऽपि । प्रौढमनोरमायां (पृ० ५१९) क्षीरस्वामिमन्ते तु अर्जनेष्विति पेठु' इति मुद्रितोऽपपाठो बोध्यः ।

५ ऋज' स्थाने 'रिज' इत्यर्थः ।

६ 'आनृञ्जे (? आनृञ्जे) इति सम्मतातद्भिन्नयो, तदसत् । नुम्विधावुपदेशिवद्वचनात् । अत एव काश्यपमैत्रेयादय आनृजे (ऋञ्जाञ्चक्रे) सर्वे उदाजह्रु' इति सायण (धा० वृ० पृ० ६२) । मैत्रेयस्त्वाह—'नुमागमनिमित्तादपि यस्य गुरुमत्ता ततोऽप्याम् भवति, यथा इन्दाञ्चकार । केचित्तु आनृञ्जे इति प्रत्युदाहरन्ति । तत्र 'दयायासश्च' (३।१।३७) इत्यामग्रहणेनानित्य आम् इति ज्ञापितम् । तदनित्यत्वात् इति न भवतीति यथाकथञ्चित् समाधेयम्' इति (धा० प्र० पृ० २०) ।

नलोप इष्टः[1]—सङ्कोचकः । एवमपि न धातुलोप आर्धधातुके (१।१।४) इति निषेधः स्यात्, तस्मादेतत् कुचेः (१।१११) रूपम् । चान्द्रमुदित्त्वमतन्त्रम्[2] (च० धा० १।४७), यत् काल सन्निपातपरिभाषायाः प्रयोजनमदात्[3] उदुपधत्वम् अकित्त्वस्य निकुचिते ( महा० १।१।२८ ) इति । यदि चायमुदित् स्यात्, इडागमोऽत्र न स्यात्[4] ॥१८५॥

११८. लुन्च अपनयने । अनुपयुक्तापासने । लुञ्चति । वञ्चि-लुञ्च्यृतश्च (१।२।२४) इति क्त्वा निष्ठा च वा कितौ—लुञ्चित्वा, लुचित्वा, लुञ्चितः, लुचितः ॥१८६॥

११९. अन्चु गतिपूजनयोः । अञ्चति । आनञ्च । अक्त्वा, अञ्चित्वा, उदितो वा (७।२।५६) इट् । अञ्चेः पूजायाम् (७।२।५३) इति क्त्वा-निष्ठयोर्नित्यमिट्—अञ्चित्वा गुरून्, अञ्चितो राजा, अन्यत्र यस्य विभाषा (७।२।१५) इति निष्ठायां नेट्—समक्नौ शकुनेः पादौ, अञ्चोऽनपादाने (८।२।४८) इति नत्वम्, अपादाने तु—उदक्तम् उदकं कूपात् । अनिदितां हल उपधायाः क्ङिति (६।४।२४) इति नलोपो नाञ्चेः पूजायामिति (६।४।३०) नास्ति—अञ्चिता गुरवः । नावञ्चेः (उ० १।१७) इति कुः—न्यङ्कुः[5], न्यङ्क्वादि-त्वात् (द्र० ७।३।५३) कुत्वम् । पृषंग्रुनोरन्यत्र—न्यञ्चुः स्वेदबिन्दुः । उदङ्कोऽनुदके (३।३।१२३) साधुः, उदके तु ल्युट्—उदञ्चनी जलोद्धरणी । ऋत्विग्दधृग् (३।२।५९) इति क्विप्, उगिदचाम् (७।१।७०) इति नुम्—प्राङ् ।

---

१. प्रयोगप्राचुर्यदर्शनादिति शेषः ।

२. धातुवृत्तौ 'अत एव उदित्पाठिनो चन्द्रतरङ्गिणीकारौ प्रयुक्तौ' इति पठ्यते' (पृष्ठ ६४) । अत्र तरङ्गिणीकारस्योल्लेखोऽयुक्तः, क्षीरस्वामिना तुदित्पाठः प्रत्या-ख्यायानुदित्पाठस्य व्यवस्थापनात् ।

३. 'अदात्' पाठा० ।

४. यस्य विभाषा (७।२।१५) इति निषेधात् इति शेषः ।

५. पृषत्सदृशो विकटबहुविषाणः [ मृगविशेषः ] इत्यष्टाङ्गहृदयस्य हेमाद्रि टीकायां, सूत्रस्थान ३।५० । न्यङ्कोर्विकारो नैयङ्कव इति पाणिनीया, न्याङ्कव इत्यापिशलाः । अत्र विशेषः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्याये (पृष्ठ २२) द्रष्टव्यः ।

११३. उदात्ता अनुदात्तेतः ॥

---

[सेटः परस्मैपदिनः]

११४. शुच शोके । इतो वजान्ताः (१।१५८) द्वासप्ततिः सेटः परस्मैपदिनश्च । शोचति, शोचिता । शोकः । शोच्यमिति[1] कुत्वं नेष्टं, ण्यन्तस्य वा रूपम् । चलनशब्दार्थादकर्मकाद्युच् (३।२।१५०) इति युच्—शोचनः । इगुपधात् कित्[2] (चान्द्र उ० १।५२) शुचिः । अर्चिशुचि (उ० २।१०८) इतीस्—शोचिर्दीप्तिः ॥१८२॥

११५. कुच शब्दे तारे । कोचति, कुच सम्पर्चने[4] (धा० सू० १।५९५) इत्यर्थभेदार्थं ज्वलादौ पठिष्यते । उदुपधाद् भावादिकर्मणोरन्यतरस्याम् (१।२।२१) इति कित्त्वं वा—सकुचितं, सकोचितम् ॥१८३॥

११६. क्रुन्च[5] गतौ । क्रुञ्चति । क्रुङ् । क्रुञ्चा । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (३।२।५९) इति निपातनान्नलोपाभावः । प्रज्ञादिभ्योऽण् (५।४।३८) क्रौञ्चः ॥१८४॥

११७. कुन्च गतिकौटिल्याल्पीभावयोः । गतेः कौटिल्ये द्रव्याल्पत्वे च[6] । कुञ्चति, कुञ्चितम् । कुञ्चिका । कुक्[7] । कुञ्चेयमङ्गुलि

---

प्रयोगस्तु जाम्बवतीविजये दृश्यते । यथा—'यमी गिरे, शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः, घर्मालसाङ्गी मधुराणि कूजन् संवीजते पक्षपुटेन कान्ताम्' इति ।

१. 'शोच्यमिति निपातनात्' इति पाठा० । शोच्यपदस्य कुत्वाभावनिपातनादपपाठोऽयम् । 'अशोच्यानन्वशोचस्त्वम्' (गीता २।११) इत्यादिषु शोच्यपदस्य दर्शनात् 'कुत्वं नेष्टम्' इत्येव युक्तः पाठः ।

२. इदं सूत्रं सर्वेषु पाणिनीयोणादिपाठेषु न दृश्यते । चान्द्रपाठेन सहेदं सवदति ।

३. क्रुच गताविति स्वामी (धा०वृ०पृ०६२) । अत्र तु न तथा पाठ उपलभ्यते ।

४. ज्वलादौ (१।५९५) तु 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' इति पठ्यते ।

५. क्रुन्चेत्यादिषु धातुस्वरूपप्रदर्शनार्थं परसवर्णमकृत्वा नकारनिर्देश कृत इति बोध्यम् । प्रयोगावस्थायां तु परसवर्णं भवत्येव ।

६. 'गतो कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी' (पृ० ६२) इत्येव धातुवृत्तौ पाठ उपलभ्यते ।

७. क्विपि नलोपे रूपम् ।

(का० नीति, ४।४१)। चान्तो[1]ऽयमिति शिवः[2]—सञ्चति ॥१९८, १९९॥

१२३. गुजि अव्यक्ते शब्दे । गुञ्जति । गुञ्जितम्, गुञ्जा । अनिदिदित्येके[3]—गोजति । जुगोज ॥२००॥

१२४. अर्च पूजायाम् । अर्चति, आनर्च । अर्चितः । अर्चा । यजयाचरुचप्रवचर्चश्च (७।३।६६) इति कुत्वाभावः, अर्च्यः । येषां मतेऽत्र ऋचेर् (धा० ६।२२) ग्रहणम्,[4] तत्पक्षे अर्क्यः । अर्चिशुचिहुसृपि (उ० २। १०९)—इसीस्—अर्चिः । अर्च्यते इत्यर्कः[5] । चुरादौ (१०।२०३) अर्चयति ॥२०१॥

१२५. म्लेछ अव्यक्तायां वाचि । म्लेच्छति । म्लेच्छनम्, म्लेच्छः । म्लेच्छो ह वा एष योऽपशब्दः, न म्लेच्छितवै, नापभाषितवै[6] । क्षुब्धस्वान्त-ध्वान्त (७।२।१८) इत्यविस्पष्टे म्लिष्टम् साधु, म्लेच्छितमन्यत्र ॥२०२॥

१२६. लछ लाछि लक्षणे । लक्षणं चिह्नम् । लच्छति, लाञ्छति । लाञ्छनम् ॥२०३, २०४॥

१२७. वाछि इच्छायाम् । वाञ्छति । वाञ्छितम्, वाञ्छा ॥

१. 'यति नः सञ्चतो भव' (ऋ० १।४२।७) इत्यादिषु चान्तोऽपि दृश्यते ।

२. अयं महावैयाकरणः शिवस्वामी । उणादि (५।१०) सध्ययं ग्रन्थकर्ता स्मर्यते । शिवस्वामिनो विषये 'संस्कृत व्याकरण शास्त्र का इतिहास'-नाम्नि ग्रन्थे (पृष्ठ ४३९) विस्तरशः उक्तम् । तत्रैव द्रष्टव्यम् ।

३. मतमिदं धातुवृत्तौ (पृष्ठ ९७) पुरुषकारे (पृष्ठ ६०) चोद्धृतम् ।

४ इदं काशिकाकारमतम् (काशिका ७।३।६६) । अर्चतेर्ग्रहणे 'प्रवचर्च' इत्यत्र कथं सन्धिरिति नोक्तं स्वामिना ।

५. घञि रूपम्, उ० ३ । ४० द्रष्टव्यम् ।

६. महाभाष्ये (अ० १ पा० १ आ० १) त्वेवं पठ्यते—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः परा बभूवुः । तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः ।'

७. म्लेच्छितवै=म्लेच्छनाय ।

घञि—पर्यङ्कः, पल्यङ्कः[1] । उदङ्कमिति निपातितम्[2] ॥१८७॥

१२०. वञ्चु, चञ्चु, तञ्चु, त्वञ्चु, म्रुञ्चु[3], म्लुञ्चु गत्यर्थाः। वञ्चति । यङि अभ्यासस्य दीर्घे प्राप्ते नीग्वञ्चुस्रंसुध्वंसु (७।४।८४) इति नीगागमः—वनीवच्यते । उदितो वा (७।२।५६) इति वेट्—वक्त्वा, वचित्वा, [वञ्चित्वा] वञ्चिलुञ्च्यृतश्च (१।२।२४) इति वा कित्त्वम्, वेट्त्वाद् यस्य विभाषा (७।२।१५) इति निष्ठायां नेट्—वक्तः । वञ्चितस्तु चुरादौ वञ्चु प्रलम्भने (१०।१७०) इत्यस्मात् । गृधिवञ्च्योः प्रलम्भने (१।३।६९) तङानौ—बालं वञ्चयते । नेह—अहिं वञ्चयति । स्फायि (उ० २।१३) इति रक् वक्रम्, न्यङ्क्वादिः (द्र०७।३।५३) । घञि चजोः कु घिण्ण्यतोः (७।३।५२) इति कुत्वं नास्ति—वञ्चं वमन्ति वणिजः[4]। चञ्चति । चञ्चा तृणपुरुषः । चञ्चुरलोदिः, चञ्चलश्चपलः । चाचलस्तु चले (धा० १।५६९) रूपम् । तञ्चेस्तक्रम् । म्रोचति । मलिनं म्लोचति, मलिम्लुचश्चौरः । जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (३।१।५८) इत्यङ् वा—अम्रुचत्, अम्रोचीत्; अम्लुचत्, अम्लोचीत् ॥१८८-१९३॥

१२१. ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे । अग्रुचत्, अग्रोचीत्, अग्लुचत्, अग्लोचीत् । घञ्—ग्लोचः, न क्वादेः (७।३।५९) कुत्वाभावः । १९४-१९७॥

१२२. ग्लुञ्चु षस्ज गतौ । न्यग्लुचत्, न्यग्लुञ्चीत् । सज्जति, सिसज्जिषति, सिसज्जयिषति । सज्जः सज्जितो हस्ती । क्वापि तङानौ[5]—प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु (गीता ३।२९), सज्जमानमकार्येष्विति,

1. परेश्च घाङ्कयोः (८।२।२२) इत्यनेन लत्वविकल्पः ।

2. 'उदक च' इत्युणादिसूत्रेण (२।३९) इति शेषः ।

3. इतोऽग्रे 'म्रुञ्चु म्लुञ्चु' इत्यधिकौ क्वचित् । प्रकृतग्रन्थव्याख्यानयोरुदाहरणादर्शनान्नेमौ स्वामिसम्मताविति स्पष्टम् ।

4. द्र० काशिका ७।३।६३ ।

5. अत्राह सायणः—'यत्तोऽस्यात्मनेपदं दूषयन्तो वर्धमानमोऽत्रेयादयः एव दुष्टा.' (धा० वृ० पृ० ६७) । क्षीरस्वामिनात्रत्यात्मनेपदमिह स्वीकृतम्, न तु दूषितम् । अतः सायणीयो लेखश्चिन्त्यः ।

पाठ्यौ तुदादित्वादेवेष्टसिद्धेः[1] ॥२१३॥

१३६. वृज व्रजि,[2] ध्रज ध्वजि गतौ ॥ धर्जति। धरीवृज्यते रीगृदुपधस्य (७।४।९०) इति रीक्। ऋदुपधोऽयमित्येके वेजति । ध्रजति। ध्रजति, ध्वञ्जति । ध्वजेत्येके ध्वजति, ध्वजः, अतो हलादेः (७।२।७) इति सिचि वा वृद्धिः—अध्वजीत्, अध्वाजीत् ॥२१४-२१७॥

१३७. कूज अव्यक्ते शब्दे । कूजति। कूजितम् ॥२१८॥

१३८. अर्ज सर्ज अर्जने । अर्जति। आनर्ज। अर्जिजिषति । अर्जिदृशिकम्यमि (उ० १।१९८) इत्युः—ऋजुः। अर्जेर्णिलुक् च (उ० ३।५८) इत्युनन्—अर्जुनः । अर्जेर्ऋज च (दश० ८।११) इतीपन्—ऋजीषम् पिष्टपचनम्। सर्जति। सर्जिका। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः (उ० १० १।८२) सर्जूः ॥२१९, २२०॥

१३९. गर्ज शब्दे । गर्जति। गर्जितं स्तनितम् ॥२२१॥

१४०. तर्ज भर्त्सने । तर्जति। चुरादौ (१०।१३२) तर्जयते ॥

१४१. कर्ज खर्ज व्यथने । कर्जति। खर्जति। कृषिचमि (उ० १।८२) इत्यूः—खर्जूः ॥२२३, २२४॥

१४२. खर्ज मार्जने च । खर्जपिञ्जादिभ्य ऊरोलचौ (उ० ४।९०) खर्जूरः ॥

१४३. अज गतिक्षेपणयोः । अजति, अजेर्व्यघञपोः (२।४।५६) आर्धधातुके—संविवाय, संवीय । उदात्तत्वं त्वार्धधातुके वलादौ

१. इदमत्रावधेयम्—भ्वादौ पाठाद् उन्धति उध्रति इत्यनयोः शसिपोऽनु-दात्तत्वाद् उन्धतः उध्रतः इत्यनयोश्च सार्वधातुकानुदात्तत्वाद् धातुस्वरो भवति, तुदादौ पाठात् शस्वरः स्यात्। तस्मात् स्वरभेदार्थमुभयत्र पाठः कर्तव्य एव।

२. अत्राह सायणः—'तरङ्गिणीकारयथमंत्रतास्तु (? ?) याचौ भज भजी इति दन्त्योष्ठ्यादी पठ्यते, सर्वत्र तवर्गादी एव।' (धा० वृ०-पृष्ठ ६९)। भट्टोजिदीक्षितो-ऽपि सायणपाठमेवानूदितवान्, (द्र० प्रौ० मनो० पृष्ठ ५६०) क्षीरतरङ्गिण्यां तु नैता-दृश. पाठ उपलभ्यते।

१२८. आछि आयामे । आञ्छति, आञ्छ्यते । दोर्दण्डाञ्छितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः[1] । आञ्छ, आञ्छतुः आञ्छुः, तस्माद् ग्रहणात् (द्र० ७।४।७१) नुडभावः[2] ॥२०६॥

१२९. ह्रीछ लज्जायाम् । ह्रीच्छति, जिह्रीच्छ ॥२०७॥

१३०. हुर्छा कौटिल्ये । हूर्छति, र्वोरुपधायाः (८।२।७६) इति दीर्घः । निष्ठायाम् आदितश्च (७।२।१६) इतीड् नास्ति—हूर्णः, राल्लोपः (६।४।२१) रदाभ्यां निष्ठातो नः (८।२।४२) विभाषा भावादिकर्मणोः (७।२।१७) इति वेट्, हूर्छितमनेन, हूर्णम्, प्रहूर्छित, प्रहूर्णः । क्विप्—हूः हुरौ ॥२०८॥

१३१. मुर्छा मोहसमुच्छ्राययोः । मूर्छति, मूर्छा । न ध्याख्यापृमूर्छिमदाम् (८।२।५७) इति निष्ठानत्वं नास्ति, मूर्तः । क्तिन् निष्ठावत् (द्र० का० ३।३।९४) मूर्तिः, मूर्छितमनेन, मूर्तम्, प्रमूर्छित, प्रमूर्तः । संमूर्छित इति तारकादित्वात् (द्र० ५।२।३६) इतच् ॥२०९॥

१३२. स्मुर्छा विस्मृतौ[3] । स्मूर्छति । स्मूर्छा । स्फुर्छा विस्तृताविति दुर्गः—स्फूर्छति, स्फूर्णः ॥२१०॥

१३३. युछ प्रमादे । युच्छति ॥२११॥

१३४. उछि उञ्छे । उञ्छ उच्चयनम् । उञ्छति, उञ्छाञ्चकार । उञ्छितः । शिलोञ्छनम्, शिलोच्चयनमित्यर्थः ॥२१२॥

१३५. उछि विवासे । विवासो विनाशः समाप्ति[4]रित्यर्थः । उच्छति । उष्टः । 'रजन्या व्युष्टायामुच्छति जनधामानि तनयः[5]' । पृ(त्ता)विह न

1. अनुपलब्धमूलमिदम् ।

2. अयं भावः—तस्मात् पदेन पूर्वसूत्र (७।४।७०) विहितस्य दीर्घस्य परामर्शात् नात्र नुडागमः । अत्र तु स आर्षिक एव दीर्घ आकारः, न तु 'अत आदेः' सूत्रविहितः ।

3. 'विस्तृतौ' पाठा० ।

4. इद धातुवृत्तौ (पृष्ठ ६९) उद्धृतम् ।

5. अनुपलब्धमूलम् ।

पाठ्यौ तुदादित्वादेवेष्टसिद्धेः[1] ॥२१३॥

१३६. ध्रज ध्रजि,[2] ध्वज ध्वजि गतौ ॥ धर्जति। वरीवृज्यते रीगृदुपधस्य (७।४।९०) इति रीक्। इदुपधोऽयमित्येके वेजति। ध्रञ्जति। ध्वजति, ध्वञ्जति। ध्वजेत्येके ध्वजति, ध्वजः, अतो हलादेः (७।२।७) इति सिचि वा वृद्धिः—अध्वजीत्, अध्वाजीत् ॥२१४–२१७॥

१३७. कूज अव्यक्ते शब्दे। कूजति। कूजितम् ॥२१८॥

१३८. अर्ज सर्ज अर्जने। अर्जति। आनर्जे। अर्जिजिषति। अर्जिदृशिकम्यमि (उ० १।२८) इत्युः—ऋजुः। अर्जेर्णिलुक् च (उ० ३।५८) इत्युनन्—अर्जुनः। अर्जेर्ऋज च (दश० ६।२१) इतीपन्—ऋजीषम् पिष्टपचनम्। सर्जति। सर्जिका। इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्... (उ० १।८२) सर्जूः ॥२१९, २२०॥

१३९. गर्ज शब्दे। गर्जति। गर्जितं स्तनितम् ॥२२१॥

१४०. तर्ज भर्त्सने। तर्जति। चुरादौ (१०।१३२) तर्जयते ॥

१४१. कर्ज खर्ज व्यथने। कर्जति। खर्जति। कपिचमि (उ० २।८२) इत्यूः—खर्जूः ॥२२३, २२४॥

१४२. खर्ज मार्जने च। खर्जपिञ्जादिभ्य ऊरोलचौ (उ० ४।९०) खर्जूरः ॥

१४३. अज गतिक्षेपणयोः। अजति, अजेर्व्यघञपोः (२।४।५६) आर्धधातुके—संविवाय, संवीय। उदात्तस्य त्वार्धधातुके वलादौ

---

१. इदमनात्रधेयम्—भ्वादौ पाठाद् उब्जति उम्भति इत्यनयोः शब्विपोरनु- दात्तत्वात् उब्जत. उम्भतः इत्यनयोश्च ससार्वधातुकानुदात्तत्वाद् धातुस्वरो भवति, तुदादौ पाठात् शस्वरः स्यात्। तस्मात् स्वरभेदार्थमुभयत्र पाठः कर्तव्य एव।

२. यथाह सायणः—'तरङ्गिणीकाश्यपसंमतास्तु (? ऽ) धाजौ ध्रज ध्रजी इति दन्त्योष्ठ्यादी पठ्येते, सर्वत्र तवर्गादी एव।' (धा० वृ० पृष्ठ ६९)। भट्टोजिदीक्षितो- ऽपि सायणपाठमेवानूदितवान् (प्र० मौ० मनो० पृष्ठ ५६०) चौखम्बादिसंस्करणेषु तु नैता- दृश पाठ उपलभ्यते।

घीभावस्यानित्यत्वे लिङ्गम्, वी ह्यनुदात्तः। प्राजिता रथस्य प्रवेता[1]। घञपाविति किम्? समज्यते। वा यौ (२।४।५७) वा—प्राजनो[2] दण्डः; प्रवयणो द्वावाल्यये। वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश् (३।२।२८ वा०) वातमजा मृगाः। अजतीत्यजः छागः। अजा व्यजनम्। समुदोरजः पशुषु—(३।३।६९) इत्यप्—समजः पशुसङ्घः, उदजः पशुप्रेरणम्, अन्यत्र घञ्—समाजः, उदाजः। अजिव्रज्योश्च (७।३।६०) इति कुत्वाभावः। सजाव्रां समजनिषद (३।३।९९) इति क्यप्—समज्या सभा; संज्ञात्वाद् वीभावो नास्ति। गोचरसंचर (३।३।११९) इति व्यजः साधुः। अजेरज (च उ० २।४८) इतीनच्—अजिनम्। अज्यतिभ्याम् (उ० ४।११०) इण् आजिर्युद्धम्। पादे च[3] (उ० ४।१२१) पदाजिः। अजिरशिशिर (उ० २।१४५) इत्यजिरम्। बहुलं संज्ञाछन्दसोः घञ्नबघकगाथविचक्षणाजिराद्यर्थम् (२।४।२४ वा) इति वीभावो नास्ति। अजिवृरीभ्यो निच्च (उ० ३।३८) इति णुः—वेणुः। रास्नासास्ना (उ० ३।१५) इति वीणा ॥२२५॥

१.१४४. कज मदे। कजति ॥२२६॥

१.१४५. खज मन्थे। मन्थो विलोडनम्। खजति। खजेराकन् (तु० उ० ४।१३)—खजाको मन्थः, खजाका दर्वी, खजो विद्रव्यपाचकानां मन्थनदण्डः ॥२२७॥

१.१४६. खजि गतिवैकल्ये। खञ्जति। खञ्जः खोडः, खञ्जनोदकं सर्पपथ। खञ्जनः, खञ्जरीटः पक्षी ॥२२८॥

१.१४७. एजृ कम्पने। एजति। एजेः खश् (३।२।२८) अङ्गमेजयः। एजृ दीप्तौ (१।१११) तङानी[4]—एजते ॥२२९॥

---

१. 'एवं हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति। सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति' इत्यादि महाभाष्यम् (२।४।५६) अत्रानुसन्धेयम्।

२. 'प्राजनम्' पाठा०।

३. हस्तलेखेषु 'पदे च' इत्येवं पठ्यते।

४. 'तङानौ' इति हस्तलेखेषु पठ्यते। प्रायेण मन्यकर्ता 'तङानी' 'तङानौ' इति पदद्वयं व्यवहृत। अत्रायं विवेकः—यदा तङ्प्रत्ययः आनप्रत्ययश्चास्य धातो-

१४८. टुओस्फूर्जा वज्रनिर्घोषे। वज्रनिर्घोषोऽशनिनिर्घोषः। स्फूर्जति। स्फूर्जः। दीर्घोच्चारणं दीर्घस्यानित्यत्वार्थम्[1]। ओदितश्च (८।२।४५) इति निष्ठानत्वम्—स्फूर्णः, चोः कुः (८।२।३०) आदितश्च (७।२।१६) इति नेट्। विभाषा भावादिकर्मणोः (७।२।१७) स्फूर्जितमनेन स्फूर्णम् प्रस्फूर्जितः प्रस्फूर्णः। द्वितोऽथुच् (३।३।८९)—स्फूर्जथुः ॥२३०॥

१४९. क्षि क्षये[2]। क्षयति। क्षेता, लक्ष्यानुरोधादिण् नास्ति क्षयति[3] च—

पाठमध्येऽनुदात्तानामुदात्तः कथितः क्वचित्।
अनुदात्तोऽप्युदात्तानाम् पूर्वेषामनुरोधतः ॥[4]

क्षियः, निष्ठायामण्यदर्थे (६।४।५९-६०) दीर्घः, क्षियो दीर्घात् (८।२।४६) इति निष्ठानत्व क्षीणः। वा क्रोशदैन्ययोः (६।४।६१) क्षितः क्षीणः। तुदादौ। क्षि निवासगत्योः (६।१०७) क्षियति, क्र्यादौ क्षिष् हिंसायाम् (९।३६) क्षिणाति, स्वादौ च क्षि चिरि जिरि दाश दृ हिंसायाम् (५।३१) क्षिणोति ॥२३१॥

१५०. क्षीज अव्यक्ते शब्दे। क्षीजति, चिक्षीज ॥ २३२॥

१५१ लज लजि भर्त्सने। लजति लञ्जति। भासार्थं-चुरादौ (१०।१९७) लञ्जयति[5] ॥२३३, २३४॥

---

भवति इत्यर्थो विवक्षितः, तदा इनि प्रत्यये 'तडानी' इति धातुविशेषणत्वेन प्रयुज्यते यदा तु 'तङ्प्रत्यय आनप्रत्ययश्च प्रदर्श्यते इत्यर्थो विवक्षितो भवति तदा 'तङानौ' इति प्रयुज्यते।

१. उपधायां च (८।२।७८) इत्यनेन दीर्घो भविष्यत्येव, यतः स्फूर्जेति दीर्घोच्चारणं दीर्घस्यानित्यतां ज्ञापयति।

२. क्षि क्षये, क्षि ऐश्वर्ये इत्येक इति क्षीरस्वामी इति पुरुषकारे (पृ० २३)।

३. 'क्षयति' इत्यस्य कः कर्त्तेति न ज्ञायते अनन्तरमुद्धृतः श्लोकः मन्येऽस्मिन्नुपरिष्टान्नोपलभ्यते।

४. एतेन ज्ञाप्यते यत् प्राक्पाणिनीयेषु धातुपाठेषु उदात्तानुदात्तधातूनां सांकर्यमासीत्, पाणिनिना यथासम्भवं स दोषो दूरीकृत इति।

५. यथोक्तं पुरुषकारे—'लञ्जयेदिति क्षीरस्वामिनः पक्षे' (पृ० ६१)।

१५२. लाज लाजि भर्जने[1] च । लाजति, लाञ्जति, लाज्यते, लाञ्ज्यते । लाजाः, अजिनज्योश्च (७।३।६०) इति चात् कुत्वाभावः । चत्वारो भर्त्सने इति चन्द्रः (च० धातु १।७७) ॥२३५, २३६॥

१५३. जज जजि युद्धे । जजति, जञ्जति[2] ॥२३७, २३८॥

१५४. तुज तुजि हिंसायाम् । तोजति, तुञ्जति ॥२३९, २४०॥

१५५. तुजि पालने च । तुञ्ज्यत इति तुञ्जः, घञ् । तुञ्जिता, भूः । चुरादौ भासार्थः (१०।१९७) तथा तुजि पिजि लुजि हिंसाबलादाननिकेतनेषु (१०।२८) तुञ्जयति, तुञ्जो निकेतनम् ॥

१५६. गज गजि[3], गृज, गृजि[4], मज, मुजि[5], शब्दार्थाः । गजति, गजित्वा । गञ्जति, गञ्जित्वा । गञ्जा मदिरागृहम् । गञ्जः कोशः । गर्जति, गर्जितम्, गर्जः । गृञ्जति । गृञ्जनम् मूलविशेषः । मजति, मुञ्जति । मुञ्जस्तृणम् । मृज मृजीत्यप्याहुः[5]—मोजति, मृञ्जति ॥२४१–२४६॥

---

1. 'लज लजि भर्त्सने,' 'लाज लाजि भर्जने च इति तु क्षीरस्वामी' इति पुरुषकारे ( पृ० ६१ ) ।

2. अस्मादेव धातोः घञि 'जञ्ज'—शब्दो निष्पन्नो भवति । कुत्वं च 'चजोः' (७।३।५२) इत्यनेन । धातुप्रदीपे शब्दोऽयं निर्दिष्टः ( पृ० २५ ) । स च युद्धार्थकः । आधुनिकाः भाषातत्त्वविदः शब्दमिमं फारसीभाषीयं मन्यन्ते, तदसत् । विशेषस्तत्र 'संस्कृत व्याकरणशास्त्र का इतिहास' नाम्नि ग्रन्थे ( पृष्ठ ३७ ) द्रष्टव्यः ।

3. 'गज गजि इत्यत्र क्षीरस्वामी गृज गृजि इत्यप्याह—गर्जति गृञ्जतीति' इति पुरुषकारे ( पृष्ठ ५८ ) पाठः । 'मृजमृञ्जीति स्वामिचन्द्रौ' इति धातुवृत्तौ ( पृष्ठ ७३ ) ।

4. 'मुज मुञ्जीति क्षीरस्वामी चन्द्रश्च' इति पुरुषकारे (पृष्ठ ५७) । धातुवृत्तौ (पृष्ठ ७३) स्वामिचन्द्रयोर्मते 'मृज मृजि' इति पाठः प्रदर्शितः । मुद्रिते चान्द्रधातुपाठे तु 'मुज मुजि' इति पाठ उपलभ्यते (चा० धा० सू० १।८०) ।

5. 'मृज मृजीत्यप्याहुः' इति पुरुषकारे (पृष्ठ ५७) पाठः ।

१५७. गज मदने च । मदनं मदोत्पत्तिः । गजति । अचि—गजो हस्ती । चुरादौ गज मर्च मार्जे [शब्दार्थाः] (१०।९९) इति गाजयति ।

१५८. वज व्रज गतौ । वजति । वाजो वेगपक्षी । व्रजति, वव्राज । वदव्रज (७।२।३) इति वृद्धिः—अव्राजीत् । व्रजयजोर्भावे क्यप् (३।३।९८) व्रज्या, परिव्रज्या । गोचरादौ (द्र० ३।३।११९) व्रजः साधुः । ण्यति (द्र० ३।१।१२४) व्राज्यम् । यजियाच्योश्च (७।३।६६) इति कुत्वाभावः । क्विब् वचि (उ० २।५७) इति क्विब्दीर्घौ—परिव्राट्, व्रश्च (८।२।३६) इति षः । परिव्राजकः । चुरादौ वज मार्गसंस्कारगत्योः (१०।७१) वाजयति ॥२४७, २४८॥

१५९. उदात्ता उदात्तेतः ।

[अथ सेट आत्मनेपदिनः]

१६०. अतट अतिक्रमहिंसनयोः । इतः शाड्न्ताः(१।१९१) पञ्चत्रिंशत् सेट आत्मनेपदिनश्च । अतिक्रम उल्लङ्घनम् । क्विपि तकारश्रवणार्थं तोपधोऽयम् पठितः, ष्टुत्वं न कृतं सन्देहप्रादुर्भावात्[2] । अट्टते, अट्टिट्टिषते । अट्टः, अट्टनम् । क्विपि-अत् । दोपधत्वपक्षे न न्द्राः द्विरुच्यन्ते[3]—अट्टिट्टिषते । अन्ये तु अद्द[4] इत्याहुः—अड्डते अड्डिड्डिषते ॥२४९॥

१६१. वेष्ट वेष्टने । वेष्टनम् ग्रन्थनं लोटनं परिहाणिश्च[5] वेष्टते, अवेष्टत । प्रवेष्टो बाहुः । वेष्टितः । विभाषा वेष्टिचेष्ट्योः (७।४।९६) इति णौ चङि अभ्यासस्यात्वम्—अववेष्टत, अविवेष्टत ॥२५०॥

१६२. चेष्ट चेष्टायाम् । चेष्टा ईहा । चेष्टते अचचेष्टत, अचिचेष्टत ॥२५१॥

---

१. काशकृत्स्नधातुपाठीयकन्नडटीकायाम् 'अदि अति क्रमहिंसनयोः' इति पाठः । अन्दते, अन्तते इति च तयोरुदाहरणे (क० पृष्ठ ९०) । वर्णक्रमविरोधादत्र पाठभ्रंशः प्रतीयते । २. मतमिद पुरुषकारे (पृष्ठ ६१) स्मृतम् ।

३. नन्द्राः संयोगादयः (६।१।३) सूत्रेणेति शेषः ।

४. 'डान्तपाठः प्रकरणविरोधादुपेक्ष्यः' इति धातुवृत्तिः (पृष्ठ ७३) ।

५. 'परिधाहम्' पाठा० ।

१६३. गोष्ट लोष्ट संघाते । गोष्टते, लोष्टते, अलुलोष्टत् । उणादौ (३।७२) लोष्टो मृत्पिण्डः ॥२५२॥

१६४. घट्ट चलने । घट्टते । घट्टिवन्दिविदिभ्यः (३।२।१०७ वा०) युच्-घट्टना । अरघट्टः । उद्घट्टनम् । चुरादौ (१०।८३) घट्टयति ॥२५३॥

१६५. अठि गतौ । अण्ठते ॥२५४॥

१६६. वठि एकचर्यायाम् । एकस्य चर्या सहायत्वेनागमनम् । वण्ठते । वण्ठो[1] दृढद्रव्यो योद्धा ॥२५५॥

१६७. मठि कठि शोके । शोकोऽत्राध्यानम्[2] । [ मण्ठते ], उत्कण्ठते । उत्कण्ठा । चुरादौ (१०।२३५) उत्कण्ठयति ॥२५६,२५७॥

१६८. मुठि पलायने[3] । मुण्ठते ॥२५८॥

१६९. हेठ विबाधायाम्[4] । हेठते, जिहेठे । णौ चङ्युपधाया ह्रस्वः (७।४।१) अजीहिठत् । णौ—हेठयति । हेठना शाठ्यम् ॥२५९॥

१७०. एठ च । एठते[5] ॥२६०॥

१७१. हिडि गत्यनादरयोः । हिण्डते । युच् (३।२।१४९) हिण्डनः ॥२६१॥

१७२. हुडि संघाते । हुण्डते । हुण्डिका मुद्रा ॥२६२॥

१७३. कुडि दाहे । कुण्डते । कुण्डम् । कुण्डी भाण्डम् । कुण्डो जारजातः । उणादौ (१।१०६) कुण्डलम् । चुरादौ कुडि रक्षणे (द्र० १०।४१) कुण्डयति ॥२६३॥

---

१. 'ननु चायमिह एक एव वण्ठरण्डाकल्प' इति महाभाष्यप्रयोगे (३।१।२०) वण्ठो भृतमार्य इति नागोजिभट्टः ।

२. आध्यानमुत्कण्ठापूर्वस्मरणम् ।

३ 'पालने' इति मैत्रेयसायणौ । 'पलायने' इति काशकृत्स्नचन्द्रौ ।

४ 'विबाधन-शाठ्यम्' इति धातुवृत्तिकारः (पृष्ठ ७३) । 'स्थैर्ये' 'हेठते स्थिरो भवति' इति काशकृत्स्नीयधातुपाठकन्नडटीकायाम् (पृष्ठ ६६) ।

५. 'त्रिपूर्वोऽयमिति स्वामिकाश्यपौ, मैत्रेयादयस्तु केवलमेवोदाजह्रुः' इति धातुवृत्तिः (पृष्ठ ७४) । क्षीरतरङ्गिण्यां तु न त्रिपूर्वः पाठो दृश्यते ।

१७४ वडि विभाजने । विभाजनं भागीकरणं वर्णभावश्च । वण्डते । वण्डनम्, वण्डः । चुरादौ (१०।४३) वण्डयति । वटि इत्येके-परस्मैपदी—वण्टति, वण्टयते । वण्टो नागः । नन्दी तु वटि विभाजने वडि वेष्टने, इति भङ्ग्या पठति[1] ॥२६४॥

१७५ मडि च । चकाराद् विभाजने । पृथक्सूत्रादर्थान्तरेऽपि[2] । मण्डते । मण्डो रसाग्रम् । मण्डकः । मण्डलम् । मण्डूरं[3] लोहमलम् । मण्डपः । णेरित्नुच् (द०उ० ३।२९) मण्डयित्नुः । शलिमण्डिभ्यामूकण् (द०उ० ४।४२) मण्डूकः । मडि भूषायाम् (धा० १।२१९) परस्मैपदी—मण्डति ॥२६५॥

१७६. भडि परिभाषणे । भण्डते । भण्डः, भाण्डम् । चुरादौ भडि कल्याणे (१०।४७) भण्डयति, भण्डना ॥२६६॥

१७७. पिडि संघाते । पिण्डते, पिण्डयते । पिण्डो गोलः । पिण्डी । चुरादौ (१०।१२०) पिण्डयति ॥२६७॥

१७८. मुडि मज्जने[4] । मज्जनं शुद्धिर्न्यग्भावश्च[5] । मुण्डते । मुण्डः । मुडि खण्डने (१।२२३) परस्मैपदी—मुण्डति । मुण्डमिश्र (३।१।२१) इति णिच्—मुण्डयति ॥२६८॥

१७९. तुडि तोडने । तोडनं हिंसा । तुण्डते, तुण्डयते । तुण्डम् । उणादौ (द० ४।११७) तुण्डिः ॥२६९॥

१८०. हुडि वरणे[6] । वरणं स्वीकारः । हुण्डते । हुण्डो मेषः ॥

---

१. 'नन्दी तु वडि विभाजने, मडि वेष्टने इति भङ्ग्या पठति' इति धातुवृत्तौ (पृष्ठ ७४) पुरुषकारे (पृष्ठ ७१) च पाठः । काशकृत्स्नधातुपाठीयकन्नडटीकायां (पृष्ठ ६६) तु 'वडि मडि वेष्टने' इति पाठः । वाहीक ( पञ्जाब ) देशीयभाषायां विभाजनार्थिका 'वण्डना' क्रिया प्रयुज्यते । तेन 'विभाजने' इत्यप्यर्थः प्रामाणिक एव ।

२. पुरुषकारे (पृष्ठ ७१) उद्धृतमिदम्, धातुवृत्तौ (पृष्ठ ७४) च स्मृतम् ।

३. 'मण्डूलम्' पाठा० ।

४. 'मार्जने' इति चन्द्रमैत्रेयसायणाः । 'मज्जने' इति काशकृत्स्नधातुपाठीयकन्नडटीकायां (पृष्ठ १००) पाठः । 'मज्जन स्नाने' इत्यपि तत्रैव ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ७०) ।

६. 'हरणे' इति मैत्रेयः (धा० प्र० पृष्ठ २०) । यथार्थं विशेष—काशकृत्स्न-

१८१. स्फुडि विकसने[1] । स्फुण्डते ॥२७१॥

१८२. चडि कोपे । चण्डते । चण्डः, चण्डा, चण्डी[2] । पतिचण्डिभ्यामालच् (उ० १।११६) चण्डालः । चुरादौ (१०।४५) चण्डयति ॥२७२॥

१८३. शडि रुजायां संघाते च । तालव्यादिः । शण्डते । शण्डोऽन्त्यजादिर्मुलामोगः । सनोतेर् (धा० सू० ८।२) बाहुलकात् षत्वे डः (द्र० उ० १।११३)—षण्ड उत्सृष्टो गौः ॥२७३॥

१८४. तडि ताडने । तण्डते, वितण्डा । तण्डुना प्रोक्तं ताण्डवम्[3] । तण्डुलः मृद्गुदितनिताडिभ्य उलच् तण्ड च (तु० उ० ५।१) इति कुशकाशावलम्बनम्[4] ॥२७४॥

१८५. पडि गतौ । पण्डते । पण्डितः । पाण्डुः पाण्डुरोगो हरिणवर्णश्च । नगपांसुपाण्डुभ्यो रः (५।२।१०७ काशिका) पाण्डुरः । पाण्डु-स्त्वौणादिकः (द्र० उ० १।२८) । पण्डः क्लीबः ॥२७५॥

१८६. कडि मदे । कण्डते । कण्डूः । काण्डः । कण्डुरा स्नायु-संघातः । कण्डोलः पिटकः ॥२७६॥

---

चन्द्रधातुपाठोपरिवद्धातुस्थाने 'क्रुडि मर्दे' इति धातुः पठ्यते । यथात्र क्रुडे कुडि इत्याधारात् तथैव गृह्णाति गुण्णाति इत्यत्र स्वतन्त्रौ 'ग्रह-ग्रम' धातू द्रष्टव्यौ । निरुक्तकारस्तु 'गृम' इति मेने । तथा द्युक्तम् "गर्भो गृभेः" (नि० १० । २३) ।

१. 'स्फुडि विकसन इति केचित् पठन्ति' इति धातुवृत्तिः (पृष्ठ ७४) ।

२. या स्वयं चण्डते सा चण्डा, चण्डस्य स्त्री (या न स्वयं चण्डते) तु चण्डीति त्रिमेकः ।

३. 'तण्डुः, तत्प्रोक्तं ताण्डवम्' पाठा० ।

४. तडि ताडने इत्यस्मादेतोणादेः तण्डुले सिद्धे कुशादिभ्य उलच् तण्डादेश-विधानं तु संज्ञाशब्देषु स्वरूपमेव प्रमाणमिति कुशकाशावलम्बनमिति नाम्ना वैयाकरणाः (द्र० श्वेतवनवासी उ० वृ० पृ० १) । तडि (तण्ड) धातोर्न केवलं ता-डनमेवार्थः अपि तु हृङ् हुट् तङ् तड (पु०) इत्येतैः धातुभिः ...शेषवद् महान्तः, तेन हृङ् हुट् तङ् तड (पु०) इत्येतैः धातुभिर्वर्णसाम्यात् तडि (तण्ड) धातो-रपि इत्यर्थोऽस्य पूर्वसाधारणाय इत्यालम्बनम् । इत्येतावत्यत्र ।

१८७. खडि मन्थे । खण्डते । खण्डितः । खण्डः । चुरादौ खड खडि भेदे (१०।४०) खण्डयति ॥२७७॥

१८८. खुडि गतिवैकल्ये । खुण्डते । खोडः पृषोदरादिः (द्र० ६।३।१०९) । चुरादौ खुडि खण्डने (१०।४३) खुण्डयति ॥२७८॥

१८९. हेडृ अनादरे । हेडते । हेडस्तिरस्कारः । असुनि (द्र० उ० ४।१८८) सान्तः । अचि (द्र० ३।१।१३४) हेडोऽदन्तः। गुरोश्च हलः (३।३।१०३) इति हेला[1] । अजिहेडत । घटादौ हेड वेष्टने (१।५२६) हेडति । हिडयति ॥२७९॥

१९०. घाडृ आप्लाव्ये । आप्लाव्यमाप्लावनम । घाडते । घाडोऽद्यः । घाल्कः[2] । उणादौ घडवा[3] । घले (१।३२९) रित्यके ॥२८०॥

१९१. द्राडृ ध्राडृ विशरणे । द्राडते, ध्राडते ॥२८१,२८२॥

१९२. शाडृ श्लाघायाम् । शाडते, शालते[4] । शाला । शालिः । गुणशाली । शालूकमुत्पलादिकन्दः । शलेर् (१।२२८) वा शालिमयिङ्भ्यामूकण् (तु० उ० ४।४२) ॥२८३॥

१९३. उदात्ता अनुदात्तेतः ॥

[ अथ सेटः परस्मैपदिनः ]

१९४. शौडृ गर्वे[5] । इतो गड्यन्ताः (१।२५३) सप्ततिः सेटः

---

१. हेला इति तु डलयोरेकत्वस्मरणात् इति भव्यानां मतम् । वस्तुतस्तु 'डलयोरेकत्वस्मरणात्, डळयोरेकत्वस्मरणात्, रलयोरेकत्वस्मरणात्, इत्यादिवचनानां 'समानार्थकौ उभयथावर्णविशिष्टौ स्वतन्त्रौ धातू अवगन्तव्यौ' इत्यर्थोऽनुसंधेयः । तेन हेड हेल इति द्वौ स्वतन्त्रौ धातू । एवमेव ईड ईळ इत्यपि द्रष्टव्यौ । अस्मिन् धातुपाठे त्वन्यतरदेवोपदिश्यते लाघवार्थम् । अत एव प्राचीने काशकृत्स्नधातुपाठे (पृष्ठ १७०) 'ईड ईल स्तुतौ' इत्युभौ धातू पठ्येते ।

२. डलयोरेकत्वस्मरणादिति शेषः । अत्र पूर्वधातोष्टिप्पणी द्रष्टव्या ।

३. 'वडं वलं वा वाति वडवा' इत्यमरटीकायां (पृष्ठ १८२) क्षीरस्वामी ।

४. डलयोरेकत्वस्मरणात् । अत एव गुणेन शाल्यते गुणशाली इति निर्वचनमाहुः । अत्रापि पूर्वतमधातोष्टिप्पणी द्रष्टव्या ।

५. 'शौण्डृ गर्वे—शौण्डति, शौण्डीरः' इति काशकृत्स्नधातुपाठे, द० पृष्ठ १४।

परस्मैपदिनश्च । शौटति । अशुशौटत् । कॄगॄशॄकटिपटिशौटिभ्य ईरन् (उ० ४।३०) शौटीरः ॥२८४॥

१९५. यौटृ सम्बन्धे[1] । सम्बन्धः श्लेषः । यौटति । अयुयौटत् ॥२८५॥

१९६. म्रेटृ म्लेटृ उन्मादे[2] । म्रेटति । एनं मेडृ इति पठन्ति आम्रेडितम्[3] । म्लेटति । मेटृ इति दौर्गाः—अमिमेटत् ॥२८६, २८७॥

१९७. कटे वर्षावरणयोः । वृष्ट्यावावरणे चार्थे । कटति । कटः । ह्म्यन्तक्षण (७।२।५) इति सिच्यतो वृद्धिर्नास्ति—अकटीत् । कटः । कटीरः । कटुः । कृकदिकडिकटिभ्योऽम्बच् (उ० ४।८२) कटम्बः । वरट् (तु० उ० ३।१) कट्वरः, कट्वरी तक्रव्यञ्जनम् । कटकम् । काटो घञि (द्र० ३।३।१९) ॥२८८॥

१९८. अट पट गतौ । अटति । अटनः । पदपरुषंशूर्णोतीनाम् उपसङ्ख्यानात् (द्र० ३।१।२१ वा) यङ्—अटाट्यते वृथावलोकः । अटाट्या । उणादौ अटविः (द्र० उ० ४।१३४ वृ०) अटवी[4] । पटति । पटः । पटीरः । पटुः । तनट् (तु० उ० ३।१५०) पट्टनम् । पटनः । कपिकपिडकटिपटिभ्य ओलः (तु० उ० १।६७) पटोलः । पटहस्तु, पटे हन्यत इति डः । चुरादौ पट वट ग्रन्थे (१०।२४४) अदन्तः—पटयति, तथा पट भाषार्थः (१०।२६७) पाटयति ॥२८९, २९०॥

१९९. रट परिभाषणे । रटति, रटिता ॥२९१॥

२००. लट बाल्ये । बाल्य बालक्रिया । लटति । ललाटः । लटकः । लाटः । लाटकः । अशुप्रुषिलटि (उ० १।१५१) इति लट्वा भ्रमरकः ॥२९२॥

---

१. यौण्टृ सम्बन्धे—यौण्डति, यौण्डीरः' इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ १५)। २. मेड म्रेडृ उन्मादे—मेडति, मेडीरः; म्रेडति म्रेडीरः' इति काशकृत्स्नपाठीयकन्नडटीका (पृष्ठ १५)।

३. 'आम्रेडितं द्विस्त्रिरुक्तम्' (१।५।१६) इत्यमरव्याख्याने 'द्विर्भूतं पूर्वाचार्यसंज्ञैषा, अतश्च म्रेडृ उन्मादे इति पेठुः' इत्याह स्वामी (पृष्ठ ४५)।

४. 'अटनि.' पाठा०।

२०१. शट रुजाविशरणगत्यवसादनेषु[1] । चतुर्ष्वर्थेषु । शटति । शाटी । शाटकः । तालव्यादिः ॥२९३॥

२०२. वट वेष्टने । रज्जुं वटति । वटः । वटि । वटकम् । वाट.। वाटी वृत्तिः । वटुः । वटाकरो रज्जुः । वट भट परिभाषणे (१५।२७) मित्—वटयति । वट वट ग्रन्थे (१०।२४२) अदन्तः ॥२९४॥

२०३. खिट उत्त्रासे । उत्त्रासो भयोद्गतिः । खेटति । आखेटः । खेटो ग्रामोऽधमश्च । चुरादौ (१०।२५९) खेटयति । खड्ग-खेटकौ हेती ॥२९५॥

२०४. शिट षिट अनादरे । एतौ तालव्यमूर्धन्यादी । शेटति । सेटति । सिषेट ॥२९६॥

२०५. जट झट संघाते[2] । जटति । जटा । झटति, उज्झटति । झटोऽचि (द्र० ३।१।१३४) । घञि (द्र० ३।३।१८) झाटः षण्डः ॥२९७,२९८॥

२०६. भट भृतौ । भृतिर्वेतनम् । भटति । भटः । भाटिः । भाटकम् । भटित्रम् ॥२९९॥

२०७. तट उच्छ्राये । तटति । तटम् । तटाकम् । ताटकः ।

२०८. खट काङ्क्षे । काङ्क्षास्त्यस्येति काङ्क्षः । कांक्षा-विशिष्टे धात्वर्थे । खटति । खटस्तृणम् । खेटशब्दः हस्तकः[3] । खटि-का । शशुपुधिलटि (उ० १।१५१) इति क्वन्—खट्वा ॥३०१॥

२०९. नट नृतौ । नटति । नटः । नताविल्येके[4] । घटादित्वात् (१।५२८) नटयति, अनीनटत् । चुरादौ नट अवस्यन्दने (१०।१२) उन्ना-टयति नाटकम् ॥३०२॥

---

१. अत्र काशकृत्स्नधातुपाठे 'शट विवाधे, वट विशरणगत्यवसादनेषु' इति [illegible] धातू पठितौ (पृष्ठ १६) । अत्र सम्भवत उभयोर्धात्वोः सङ्करः सञ्जातः स्यात् ।

२. संघातो मिश्रीभावः संहननं च । जट धातुर्मिश्रीभावे, झट धातुः संहनने वर्तते । तस्यैव वाहीक (पंजाबी) भाषायां 'झटका' पदं प्रयुज्यते ।

३. सन्दिग्धोऽयं पाठः ।

४. अत्र कदाचित् 'नृताविल्येके' पाठः स्यात् । अत एव पुरुषकारे (पृष्ठ ६६) 'नटी नृत्ताविति च क्षीरस्वामी' इत्युक्तम् । अयं णोपदेश इति मैत्रेयपुरुषकारसाय-णादयः । धातुवृत्तिः (पृष्ठ ७८) अत्रानुसंधेया ।

परस्मैपदिनश्च । शौटति । अशुशौटत् । कृशॄपृकटिपटिशौटिभ्य ईरन् (उ० ४।३०) शौटीरः ॥२८४॥

१९५. यौटृ सम्बन्धे[1] । सम्बन्धः श्लेषः । यौटति । अयुयौटत् ॥२८५॥

१९६. म्रेटृ म्लेटृ उन्मादे[2] । म्रेटति । एतं मेडृ इति पठन्ति आम्रेडितम्[3] । म्लेटति । मेटृ इति दौर्गाः—अमिमेटत् ॥२८६, २८७॥

१९७. कटे वर्षावरणयोः । वृष्टावावरणे चार्थे । कटति । कटः । ह्म्यन्तक्षण (७।२।५) इति सिच्यतो वृद्धिर्नास्ति–अकटीत् । कटः । कटीरः । कटुः । कृकदिकडिकटिभ्योऽम्बच् (उ० ४।८२) कटम्बः । घरट् (तु० उ० ३।१) कट्वरः, कट्वरी तक्रव्यञ्जनम् । कटकम् । काटो घञि (द्र० ३।३। १९) ॥२८८॥

१९८. अट पट गतौ । अटति । अटनः । अट्यर्तिसूत्रिमूत्रिसूचिसूत्र्यशूर्णोतीनाम् उपसंख्यानात् (द्र० ३।१।२२ वा) यङ्—अटाट्यते वृथाचलोकः । अटाट्या । उणादौ अटविः (द्र० उ० ४।१३४ वृ०) अटवी[4] । पटति । पटः । पटीरः । पटुः । तनट् (तु० उ० ३ । १५० ) पट्टनम् । पटनः । कपि-कपिडकटिपटिभ्य ओलः ( तु० उ० १ । ६७ ) पटोलः । पटहस्तु, पटे हन्यत इति डः । चुरादौ पट वट ग्रन्थे ( १०।२४४ ) अदन्तः—पटयति, तथा पट भाषार्थः (१०।१६७) पाटयति ॥२८९, २९०॥

१९९. रट परिभाषणे । रटति, रटिता ॥२९१॥

२००. लट बाल्ये । बाल्यं बालक्रिया । लटति । ललाटः । लटकः । लाटः । लाटकः । भशुष्पुषिलटि (उ० १।१५१) इति लट्वा भ्रमरकः ॥२९२॥

---

१. यौण्डृ सम्बन्धे—यौण्डति, यौण्डीरः' इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ १५) । २. मेड म्रेडृ उन्मादे—मेडति, मेडीरः; म्रेडति म्रेडीरः' इति काशकृत्स्नपाठीयकन्नडटीका (पृष्ठ १५) ।

३. 'आम्रेडितं द्विस्त्रिरुक्तम्' (१।५।१६) इत्यमरव्याख्याने 'द्विःपूते पूर्वान्त्यसंज्ञैषा, अतश्च म्रेडृ उन्मादे इति पेठुः' इत्याह स्वामी (पृष्ठ ४५) ।

४. 'अटविः' पाठा० ।

२०१. शट रुजाविशरणगत्यवसादनेषु[1] । चतुर्ष्वर्थेषु । शटति । शाटी । शाटकः । तालव्यादिः ॥२९३॥

२०२. वट वेष्टने । रज्जुं वटति । वटः । वटिः । वटकम् । वाटः । वाटी वृत्तिः । वटुः । वटाकारो रज्जुः । वट भट परिभाषणे (१।५२७) मित्—वटयति । वट वट ग्रन्थे (१०।२४२) अदन्तः ॥२९४॥

२०३. खिट उत्त्रासे । उत्त्रासो भयोद्गतिः । खेटति । आखेटः । खेटो ग्रामोऽधमश्च । चुरादौ (१०।२५९) खेटयति । खड्गखेटकौ हेती ॥२९५॥

२०४. शिट षिट अनादरे । पत्तौ तालव्यमूर्धन्यादी । शेटति । सेटति । सिषेट ॥२९६॥

२०५. जट झट संघाते[2] । जटति । जटा । झटति । उज्झटति । झटोऽचि (द्र० ३।१।१३४) । घञि (द्र० ३।३।१८) झाटः षण्डः ॥२९७,२९८॥

२०६. भट भृतौ । भृतिर्वेतनम् । भटति । भटः । भाटिः । भाटकम् । भटित्रम् ॥२९९॥

२०७. तट उच्छ्राये । तटति । तटम् । तटाकम् । ताटकः ।

२०८. खट काङ्क्षे । काङ्क्षास्त्यस्येति काङ्क्षः । काङ्क्षाविशिष्टे धात्वर्थे । खटति । खटस्तृणम् । खेटशाबुहर्हं हस्तकः[3] । खटिका । शशुभुखिशटि (उ० १।१५१) इति क्तन्—खट्वा ॥३०१॥

२०९. नट नृतौ । नटति । नटः । नताविल्येके[4] । घटादित्वात् (१।५२८) नटयति, अनीनटत् । चुरादौ नट अवस्यन्दने (१०।१२) उन्नाटयति नाटकम् ॥३०२॥

---

१. अत्र काशकृत्स्नधातुपाठे 'शाट निवासे, वट विशारदगत्यवसादनेषु' इति द्वौ धातू पठितौ (पृष्ठ १६) । अत्र सम्भवतः उभयोर्धात्वोः सकारः सजातः स्यात् ।

२. संघातो मिश्रीभावः संहननं च । जट धातुर्मिश्रीभावे, झट धातुः संहनने वर्तते । तस्यैव वाहीक (पञ्जाबी) भाषायां 'झटका' पदं प्रयुज्यते ।

३. सन्दिग्धोऽयं पाठः ।

४. अत्र कदाचित् 'नृताविल्येके' पाठः स्यात् । अत एव पुरुषकारे (पृष्ठ ६६) 'नटौ नृताविति क्षीरस्वामी' इत्युक्तम् । अथ वोपदेश इति मैत्रेयपुरुषकारमाधवादयः । धातुवृत्तिः (पृष्ठ ७८) अत्रानुसंधेया ।

परस्मैपदिनश्च । शौटति । अशुशौटत् । कृशॄपृकटिपटिशौटिभ्य ईरन् (उ० ४।३०) शौटीरः ॥२८४॥

१९५. यौटृ सम्बन्धे[१] । सम्बन्धः श्लेषः । यौटति । अयुयौटत् ॥२८५॥

१९६. म्रेटृ म्लेटृ उन्मादे[२] । म्रेटति । एतं मेडृ इति पठन्ति आम्रेडितम्[३] । म्लेटति । मेटृ इति दौर्गाः—अमिमेटत् ॥२८६, २८७॥

१९७. कटे वर्षावरणयोः । छायावरणे चार्थे । कटति । कटः । ह्म्यन्तक्षण (७।२।५) इति सिच्यतो वृद्धिर्नास्ति-अकटीत् । कटः । कटीरः । कटुः । शकादिकडिकटिभ्योऽम्बच् (उ० ४।८२) कटम्बरः । घरट् (तु० उ० ३।१) कट्वरः, कट्वरी तक्रव्यञ्जनम् । कटकम् । काटो घञि (द्र० ३।३। १९) ॥२८८॥

१९८. अट पट गतौ । अटति । अटनः । शकन्ध्वादिषु(?) अट्यर्तिसूत्रिमूत्रिसूचिशूर्णोतीनाम् उपसंख्यानात् (द० ३।१।२२ वा) यङ्—अटाट्यते वृथापर्यटनम्(?) । अटाट्या । उणादौ अटविः (द्र० उ० ४।१३४ वृ०) अटवी[४] । पटति । पटः । पटीरः । पटुः । तनट् (तु० उ० ३ । १५० ) पट्टनम् । पटनः । कपिकपिडकटिपटिभ्य ओलः (तु० उ० १ । ६७ ) पटोलः । पटद्वस्तु, पटे हन्यत इति ड्वः । चुरादौ पट वट ग्रन्थे ( १०।२४४ ) अदन्तः—पटयति, तथा पट भाषार्थः (१०।१६७) पाटयति ॥२८९, २९०॥

१९९. रट परिभाषणे । रटति, रटिता ॥२९१॥

२००. लट बाल्ये । बाल्यं बालक्रिया । लटति । ललाटः । लटकः । लाटः । लाटक । पशुपुषिलटि (उ० १।१५१) इति लट्वा भ्रमरकः ॥२९२॥

---

१. यौण्ट्ट सम्बन्धे—यौण्टति, यौण्टीरः' इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ १५)। २. मेड म्रेडृ उन्मादे—मेडति, मेडीरः; म्रेडति म्रेडीरः' इति काशकृत्स्नपाठीयकन्नडटीका (पृष्ठ १५)।

३. 'आम्रेडितं द्विस्त्रिरुक्तम्' (१।५।१६) इत्यमरव्याख्याने 'द्विभूते पूर्वाचार्यसंज्ञेषा, अतश्च म्रेडृ उन्मादे इति पेठुः' इत्याह स्वामी (पृष्ठ ४५)।

४. 'अटनि.' पाठा०।

२०१. शट रुजाविशरणगत्यवसादनेषु[1] । चतुर्ष्वर्थेषु । शटति । शाटी । शाटकः । तालव्यादिः ॥२९३॥

२०२. वट वेष्टने । रज्जुं वटति । वटः । वटिः । वटकम् । वाटः । वाटी वृत्तिः । वटुः । वटाकरो रज्जुः । वट भट परिभाषणे (१५।२७) मित्—वटयति । पट वट ग्रन्थे (१०।२४२) अदन्तः ॥२९४॥

२०३. खिट उत्त्रासे । उत्त्रासो भयोद्गतिः । खेटति । आखेटः । खेटो ग्रामोऽधमश्च । चुरादौ (१०।२५९) खेटयति । खड्गखेटकौ हेती ॥२९५॥

२०४. शिट षिट अनादरे । पतौ तालव्यमूर्धन्यादी । शेटति । सेटति । सिषेट ॥२९६॥

२०५. जट झट संघाते[2] । जटति । जटा । झटति, उज्झटति । झटोऽस्त्रि (द्रु०३।१।१३४) । घञि (द्रु०६३।१८) झाटः षण्डः ॥२९७,२९८॥

२०६. भट भृतौ । भृतिर्वेतनम् । भटति । भटः । भाटिः । भाटकम् । भटित्रम् ॥२९९॥

२०७. तट उच्छ्राये । तटति । तटम् । तटाकम् । ताटकः ।

२०८. खट काङ्क्षे । काङ्क्षास्यास्येति काङ्क्षः । काङ्क्षाविशिष्टे धात्वर्थे । खटति । खटस्तृणम् । खेटकाग्रहह्हं हस्तकः[3] । खटिका । अशुप्रुषिलटि (उ० १।१५१) इति क्वन्—खट्वा ॥३०१॥

२०९. नट नृत्तौ । नटति । नटः । नताक्षित्येके[4] । घटादित्वात् (१।५२८) नटयति, अनीनटत् । चुरादौ नट अवस्यन्दने (१०।१२) उन्नाटयति नाटकम् ॥३०२॥

---

१. अत्र काशकृत्स्नधातुपाठे 'शट निवासे, वट विशरणगत्यवसादनेषु' इति द्वौ धातू पठितौ (पृष्ठ १६) । अत्र सम्भवत उभयोर्धात्वोः संकरः संजातः स्यात् ।

२. संघातो मिश्रीभावः संहननं च । जट धातुर्मिश्रीभावे, झट धातुः संहनने वर्तते । तस्यैव बाह्लीक (पंजाबी) भाषायां 'झटका' पदं प्रयुज्यते ।

३. सन्दिग्धोऽयं पाठः ।

४. अत्र कदाचित् 'नृताक्षित्येके' पाठः स्यात् । यत एव पुरुषकारे (पृष्ठ ६६) 'नृतौ नृताक्षिति च क्षीरस्वामी' इत्युक्तम् । अयं वोपदेश इति मैत्रेयपुरुषकारसायणादयः । धातुवृत्तिः (पृष्ठ ७८) अत्रानुसंधेया ।

जल्पभिक्ष (३।२।१५५) इति षाकन्–लुण्टाकः । रुठि लुठि इत्येके[1] [रुण्ठति, लुण्ठति][2] लुण्ठिः । चुरादौ (१०।२६) लुण्ठयति ॥३२१,३२२॥

२२६. स्फटि स्फुटिर्[3] विशरणे[4] । स्फण्टति । स्फट इति नन्दिस्वामिनौ[5]—वस्त्रं स्फटति । स्फाटितम् । कर्पूरस्फटः । स्फटिकम् । स्फोटति, अस्फुटत्, अस्फोटीत् । स्फोटः, आस्फोटः, विस्फोटः । कुटादौ स्फुट विकसने । (६।७९) स्फुटति–स्फुटः, अस्फुटीत् । चुरादौ चट स्फुट भेदे (१०।१६८) स्फोटयति । स्फुटयतीति स्फुटं करोति (द्र० धा० सू० १०।२९६) इत्यर्थे ॥३२३,३२४॥

२२७. पठ व्यक्तायां वाचि । पठति । नौ गदनद (३।३।६४) इति घा अप्–निपठः, निपाठः । निपठिति, विभुव (७।२।६) इति निषेधे प्राप्तेऽप्रहादीनाम् (७।२।६ वा०) इतीट् ॥३२५॥

२२८. वठ स्थौल्ये । वठति । वठरोऽतीक्ष्णधीः ॥३२६॥

२२९. मठ मदनिवासयोः[6] । मठति । मठः । मठरोऽधम-बाहुलकादरप्रत्ययः; अनेरप् ठ च (उ० ५।६८) इति विरिमित्र्यां पिन्च (उ० ५।२९) इत्युणादावसुप्यादर्शनात् ॥३२७॥

२३०. कठ कृच्छ्रजीवने । कठति । कठः । कठिचकिभ्यामोरः (उ० १।६५) कठोरः । बहुलमन्यत्रापि (उ० २।४९) इतीनच्–कठिनः ॥३२८॥

२३१. अठ गतौ । अठति ॥३२९॥

---

१. इद धातुवृत्तावुद्धृतम् (पृष्ठ ८०) पुरुषकारे (पृष्ठ १४) च ।

२. पुरुषकारे (पृष्ठ १४) अस्य पाठस्योद्धृतत्वादावश्यकत्वाच्चास्माभिः प्रवर्धितः ।

३. अथाह सायणः—'स्वामिकाश्यपौ तु स्फट स्फुठि स्फुटिर् इति त्रीन् धातून् पठतः' इति (धा० पृष्ठ ८०) । क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते ।

४. काशकृत्स्नधातुपाठे तु 'स्फुटिर् विशरणे विकासे च' इति पठ्यते (पृष्ठ २०) ।

५. 'नन्दिस्वामी' पाठा० ।

६. 'मठ कठ मदनिवासयोः' इति पाठो मैत्रेयस्य । अन्येषां 'मठ मदनिवासयोः । कठ कृच्छ्रजीवने' इति (धातु० पृष्ठ ८१) । काशकृत्स्नधातुपाठे तु 'मठ निवासे, कठ कृच्छ्रजीवने' इति पाठः (पृष्ठ २१) ।

२३२. रठ परिभाषणे। रठति ॥ ३२९ ॥

२३३. हठ प्लुतिशठत्वयोः[1]। प्लवने कीलबन्धने चार्थे। हठ बलात्कारे इति च चान्द्राः (चा० धा० १।११७) हठति। हठः॥

२३४. उठ उपघाते[2]। ओठति। उवोठ। ऊठुः। रुठ लुट इत्यपि दौर्गाः[3]—रोठति, लोठति ॥ ३३१ ॥

२३५. पिठ हिंसासंक्लेशनयोः। पेठति। पिठरं स्थाली। पिठिरम्। पीठम्, पीड. (धा० ४।३२) ठग् वा[4] ॥ ३३२ ॥

२३६. शठ कैतवे[5]। शठति। शठः। चुरादौ शठ श्वठ असंस्कारगत्योः (१०।२७) शाठयति ॥ ३३३ ॥

२३७. शुठि[6] गतिप्रतिघाते[7]। शुण्ठति। शुठ इति दुर्गः—शोठति।

२३८. कुठि च। कुण्ठति कुण्ठः। कुण्ठेर्नलोपश्च (सर० कण्ठा० २।३।४३) कुठारः ॥ ३३५ ॥

२३९. लुठि[8] आलस्ये गतिप्रतिघाते च[9]। लुण्ठति[8] ॥३३६॥

---

१. काशकृत्स्नधातुपाठे 'हठ बलात्कारे' इत्येव पाठः (पृष्ठ २१)।

२. 'उपसंघाते' पाठा०।

३. पुरुषकारे (पृष्ठ ६८) धातुवृत्तौ (पृष्ठ ८१) च स्मृतम्। अत्र धातुवृत्तौ (पृष्ठ ८१) 'तथा च स्वामी—लुठतीति प्रयोगदर्शनात् तुदादौ पाठ इति' इत्युद्धृतः पाठः क्षीरतरङ्गिण्यां नोपलभ्यते।

४. 'वा' क्वचिन्न।

५. अन्यत्र 'कैतवे च' इति चकारविशिष्टः पाठः। स्वामिनः चकाररहितः पाठः पुरुषकारे (पृष्ठ ७०) धातुवृत्तौ (पृष्ठ ८१) च स्मृतः। काशकृत्स्नधातुपाठेऽपि चकारो न पठ्यते (पृष्ठ २२)।

६. मैत्रेयक्षीरस्वाम्यादयः 'शुठ' इत्येव पठन्ति। तथैव काशकृत्स्नधातुपाठेऽपि (पृष्ठ २२)। पुरुषकारे तु 'शुठ गतिप्रतिघाते, शठ इति क्षीरस्वामी' इत्यन्यथा पाठ उपलभ्यते (पृष्ठ ६९)।

७. "प्रतिघाते इति धनपालः। तथा च 'कुठि च' इत्युत्तरपाठौ कुण्ठत्यादौ प्रतिहतिभावं प्रतीयते, 'प्रतिरोध इत्यर्थः' इति च स एवाह" इति पुरुषकारः (पृष्ठ ६९), इत्यनेन सायणः (धातुवृत्तिः पृ० ८१)। काशकृत्स्नधातुपाठे (पृष्ठ २२) तु 'शुठि शोषणे' इति पठ्यते। शुण्ठ्यादौ तदर्थस्यैव प्रतीयमानत्वात्।

८. अन्यत्र धातुप्रदीपादिषु 'लुठि...लुण्ठति' पाठ.।

९. 'प्रतिघाते' पाठा०।

२४०. शुठि शोषणे । शुण्ठति । शुण्ठी । एनं कौशिको नाध्यैष्ट । चुरादौ (१०।९७) शुण्ठयति ॥३३७॥

२४१. रुठि लुठि गतौ । रुण्ठति । लुण्ठति । चुरादौ स्तेये (१०।२६) लुण्ठयति ॥ ३३८,३३९ ॥

२४२. चुड्ड हावकरणे । हावो भावसूचनम् । चुड्डति । चुड्डम् भगम्[1] । चुल्लिः ॥ ३४० ॥

२४३. अड्ड अभियोगे । अड्डति । न न्द्राः संयोगादयः द्विरुच्यन्ते—अड्डिडिषति । अद्दोपधात्वे अडिड्डिषति । क्विपि च विशेषः—अड्डनम् अद्, दोपधात्वेऽत्त । चड्डेर् (१।२४२) अप्येवम् इति पञ्जिका[2]—चुड्, चुत् ।

२४४. क्रीड्ट विहारे । क्रीडति । अचिक्रीडत् । क्रीडोऽनुसम्परिभ्यश्च (१।३।२१) इत्यात्मनेपदम्—अनुक्रीडते, परिक्रीडते । समोऽकूजने (१।३।२१ वा०) इति वक्तव्येन नेह—संक्रीडन्ति शकटानि ॥३४२॥

२४५. तुड्ड तोडने[3] । तोडनं द्रावणम् । तूडति । तुड्ड इति दुर्ग—तोडति ॥ ३४३ ॥

२४६. हुड्ड हूड्ड हौड्ड गतौ[4] । हूडति । हूडोऽज्ञः । होडति । होडः । हौडति ॥ ३४४-३४६ ॥

२४७. रौड्ड अनादरे । रौडति ॥ ३४७ ॥

२४८. लौड्ड उन्मादे । लौडति ॥३४८॥

२४९. अड उद्यमे । व्यडति । व्यडः[5] । तदपत्यं व्याडिः ।

---

१. 'भग': पाठा० ।

२. 'पञ्जिकाकारः' पाठा० ।

३. तुड्ड इति मैत्रेयसायणचन्द्रादय । तुड (तुड्ड) इति स्वामिशाकटायनौ (धा० वृ० पृ० ८२)

४. उद्धृतं पुरुषकारे (पृष्ठ ७१) । 'हुड्ड' धातु नाधीयाते चन्द्रमैत्रेयौ, हौड्ड धनपालशाकटायनौ । 'हौड्ड' स्थाने 'होड्ड' पठन्ति चन्द्रमैत्रेयसायणादय । पुरुषकारे (पृष्ठ ७१) 'होड्ड इति चन्द्र' इति पाठदर्शनात् 'हौड्ड' इति मुद्रितचान्द्रपाठोऽयुक्तः ।

५. 'व्यडो वृश्चिकजाङ्गुलम्, तेन तैद्रूप्यं लक्ष्यते । विशिष्टोऽस्त्यौदर्यमस्य व्यडः, इति धा० वृ० पृ० ८२ ।

व्याडः, व्यालः[1] ॥ २४९ ॥

२५०. लड विलासे । लडति । लडन्नपि दशन्नपि लडना ललना प्रमदा लाडयति । लडयोरैकत्वाल्[2] लालयति बालम् । लज्ञ ईप्सायाम् (१०।१२६) वा[3] । ललितः । परिलललने ललितम् । जिह्वोन्मथनयोः (१।५५१) इति मित्—लडयति । चुरादौ लड उपसेवायाम् (१०।७) उपलाडयति ॥ २५० ॥

२५१. कडि मदे । कण्डति । कण्डूः । आद्यो (१।१८६) ऽनुदात्तेत्—कण्डते । कड इति दुर्गः[4]—कडति । कडिनं लेखनचर्म, घशिन्नादिभ्य इत्नौ (उ० ४।१७१) । कृकदिकटिकडिभ्योऽम्बच् (तु० उ० ४।८२) कडम्बः शाकम् । कडङ्करो बुसम् । कडारः—गडेः कड च (दश० उ० ८।६५) इति । कलत्रम् —गडेरादेश्च कः (उ० ३।१०६) ॥२५१॥

२५२ कड्ड कार्कश्ये । कड्डति कल्लोलः । कद्द[5] इत्येके ॥२५२॥

२५३. गडि वदनैकदेशे । गण्डगतसंहननक्रियायामित्यर्थः । गण्डति[6] । गण्डः । इनि—गण्डिः, गण्डी । सास्त्यस्य गाण्डिवम् गाण्डीवम्—गाण्ड्यजगात् संज्ञायाम्[7] (५।२।११०) वः । गण्डिका, गण्डिः । गण्डूपदः क्रिमि ॥ २५३ ॥

२५४. उदात्ता उदात्तेतः ।

---

१. डलयोरैकत्वस्मरणात् । चिन्त्यमिद मतम् । नहि डलयोः पृथक्स्थान॰॰प्रयत्नसाध्ययोर्वर्णयोरैकत्व शक्यते प्रतिज्ञातुम् । एवमेव डळयोरैकत्व, रलयोरैकत्वं, बवयोरैकत्व च द्रष्टव्यम् । एभिर्नियमैर्निष्पादिताः प्रयोगा वस्तुतस्तद्विशिष्टवर्णवद्भ्यो धातुभ्यो निष्पन्ना । आसन् पुरा एतादृशाः पृथगेव धातवः । तथा च दृश्यते काशकृत्स्नधातुपाठे (पृष्ठ १७०) 'ईड ईळ (१, ईळ) स्तुतौ इति पृथग्द्वौ धातू । उत्तरकालिकैस्तु वैयाकरणैर्भेदा भाषाया प्रयोगादर्शनाद् ग्रन्थस्य संक्षेपकरणाद्वा केचन धातवो धातुपाठे न निबद्धास्तदा तत्समानार्थका वर्णभिन्ना अपि प्रयोगा एतादृशैर्नियमैर्निष्पादिताः ।

२. एतत्पृष्ठस्या पूर्वा टिप्पणिर्द्रष्टव्या । स्मृतमिद सिद्धान्तकौमुद्याम् (भाग ३ पृष्ठ १२६)।

३. उद्धृतमिद पुरुषकारे (पृष्ठ ७२), तत्र लड इति पाठः । ४ स्मृतमिद धातुवृत्तौ (पृष्ठ ८२) । ५. 'कड' पाठा॰ । ६. अत्र न्यायमञ्जरी (पृष्ठ ४१४) द्रष्टव्या ।

७. गाण्ड्यजकात् इत्युभयथा संहितायास्तुल्यत्वाद् उभाभ्या गाण्डिगाण्डीशब्दाभ्या वः।

## [अथ सेट आत्मनेपदिनः]

२५५. तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः । इतः स्तुभान्ताः (१।२७८) षट्त्रिंशत् सेट आत्मनेपदिनश्च । तेपते, स्तेपते, अतितेपत्, अतिष्टेपत् । क्त्विति विशेषः—तिपित्वा[1] तेपित्वा, स्तिपित्वा स्तेपित्वा । तेपिता, गणकृतमनित्यम्[2] ( पु० सीरदेव परि० वृत्ति सं० १२१ ) इति तेप्ता ॥२५४-२५७॥

२५६. तेपृ कम्पने च ॥२५८॥

२५७. ग्लेपृ दैन्ये । ग्लेपते, अजिग्लेपत् ॥२५९॥

२५८. टुवेपृ कम्पने । वेपते, वेपिता, अविवेपत् । अथुच्—(पु० अ० ३।३।८९) वेपथुः । न माभूपूकमिगमि (८।४।३४) इति कृत्यस्यो णत्वं नास्ति—प्रवेपनम् । वेपितुह्योर्ह्रस्वश्च (उ० २।५२) विपिनम् ॥२६०॥

२५९. केपृ गेपृ ग्लेपृ च । चकारात् कम्पने, गतौ [च] सूत्रविभागात्[3] । केपते, गेपते, ग्लेपते ॥२६१-२६३॥

२६०. मेपृ रेपृ लेपृ गतौ । मेपते, रेपते, लेपते, अलिलेपत् । तुदादौ लिप उपदेहे (६।१३४)—लिम्पते, लिम्पति, अलीलिपम् । रेट् च इति कौशिकः ॥२६४-२६६॥

२६१. रेपृ शब्दे च ॥२६७॥

२६२. त्रपूष् लज्जायाम् । त्रपते । स्वरतिसूतिसूयति ( ७।२।४४ ) इति वेट्—त्रपिता, त्रप्ता । तॄफलभजत्रपश्च (६।४।१२२) इत्येत्वाभ्यास-लोपौ—त्रेपे । षिद्भिदादिभ्योऽङ् (३।३।१०४)—त्रपा । यासुट्परस्मै… (३।१।१२६)

---

१. अत्र धातुवृत्तिर्द्रष्टव्या, पृष्ठ ८२ ।

२. उदात्तगणे पाठाद् इड्रूपं यत्कार्यं प्राप्नोति तदनित्यमिति भावः ।

३. उद्धृतमिद धातुवृत्तौ (पृष्ठ ८२) सिद्धान्तकौमुद्यां (भाग ३ पृष्ठ १२७) च । अनूदितं च प्रौढमनोरमायाम् (पृष्ठ ५६७) । वस्तुतस्त्वत्र देहलीदीपन्यायेन चकारात् पूर्वसूत्रनिर्दिष्टं कम्पनम्, उत्तरसूत्रनिर्दिष्टा च गतिः सङ्ग्राह्या । काशकृत्स्नधातु-पाठे तु ' केपृ गेपृ ग्लेपृ गतौ च' इति स्पष्टमेव गतिर्निर्दिश्यते ।

४. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८३) प्रौढमनोरमायां (पृष्ठ ५६७) च ।

इति ण्यत्–अपकाप्यम् । अलङ्कृञ्निराकृञ् (३।२।१३६) इतीष्णुच्–अपत्रपिष्णुः । शॄस्वृस्निहि (उ० १।११) इत्युः– त्रपुः ॥२६८॥

२६३ कपि चलने । कम्पते । चलनशब्दार्थाद् (३।२।१४८) युच्–कम्पनः । नमिकम्पि (३।२।१६७) इति रः—कम्प्रः । निगरणचलनार्थेभ्यश्च (१।३।८७) इति णौ परस्मैपदम्—कम्पयति । मृगिकम्प्योः शविधिः[1] कम्पया । कम्पितः । लक्षिकम्प्योरुपतापशरीरविकारयोः (६।४।२४ वा०) इति नलोपः-निकपितः । कुण्ठिकम्प्योर्नलोपश्च (श्वेत० उ० ४।१५४, दश० उ० १।७२ कपाट)—कपिः । कपिवपिडकटिपटिभ्य ओलः (तु० उ० १।६६) कपोलः ।

२६४ रबि लबि अबि शब्दे । रम्बते । कै रम्बते—करम्बः । स्वर्पे रक्तकरम्बितम्, कथञ्चिद् ईरयञ्ज् वा । लम्बते । अम्बते । अम्बा, शूशक्यम्बिभ्यः क्लः (तु० उ० ४।१०८) अम्बलम् ॥२७०–२७२॥

२६५ लबि अवस्रंसने च । उल्लम्बते, विलम्बते, अव-लम्बते, आलम्बत इत्यनेकार्थत्वम् उपसर्गद्योतितम्, [एवम्] अन्यत्रापि उदाहार्यम् । आलम्बिका स्वर्णमाला । प्रालम्बं कण्ठाद् ऋजुलम्बि माल्यम् । लम्बिका जिह्वा । त्रिलम्बिका शकुन्दविलम्बः । नञि च लम्बेः (तु० उ० १।८७) इत्यूः अलाबूः । अलम्बुसा[3] नाम शाकम् ॥२७३॥

२६६. कबृ वर्णे । वर्णनं वर्णः, शुक्लादिश्च । कबते । अचकावत । ण्यत् (द्र० ३।१२४) काव्यम्[4] । इः (द्र० उ० ४।१३९) कविः ।

---

१. नेदं पाणिनीयसम्प्रदाये स्मर्यते । व्याकरणान्तरीयमिदं वचनं 'धगया' शब्दस्तु वार्तिककारेण निपातितः (महा० २।३।१०१) 'कम्पथा' शब्दोऽपि द्रष्टव्यः ।

२. नैतद् वचनं कचिदुपलभ्यते । उणादौ तु ' ... ऽम्बच्' (४।८२) इति पठ्यते ।

३. द्र० 'अलम्बुमाला यात्रा' इति पातञ्जलप्रयोगः (महा० १।... हिकान्ते) ।

४. काव्यम् कविः इत्येतावन्तस्यवर्णपितौ 'कु शब्दे' ... सिध्यतः, न तु 'कबृ वर्णे' इत्यस्माद् वान्तधातोः । बत्रयोरभेदस्तु चिन्त्य ... ।

[अथ सेट आत्मनेपदिनः]

२५५. तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः। इतः स्तुभान्ता (१।२७८) षट्त्रिंशत् सेट आत्मनेपदिनश्च। तेपते, स्तेपते, अतितेपत, अतिष्टेपत। क्त्विति विशेष—तिपित्वा[1] तेपित्वा, स्तिपित्वा स्तेपित्वा। तेपिता, गणकृतमनित्यम्[2] (तु० क्षीरदेव परि० वृत्ति सं० १२१) इति तेप्ता ॥२५४-२५७॥

२५६. तेपृ कम्पने च ॥२५८॥

२५७. ग्लेपृ दैन्ये। ग्लेपते, अजिग्लेपत ॥२५९॥

२५८. टुवेपृ कम्पने। वेपते, वेपिता, अविवेपत। अथुच्—(द्र० अ० ३।३।८९) वेपथुः। न भाभूपूकमिगमि (८।४।३४) इति णत्वं वो पास्य नास्ति—प्रवेपनम्। वेपितुश्चोर्हस्वश्च (उ० २।९२) विपिनम् ॥२६०॥

२५९. केपृ गेपृ ग्लेपृ च। चकारात् कम्पने, गतौ [च] सूत्रविभागात्[3]। केपते, गेपते, ग्लेपते ॥२६१-२६३॥

२६०. मेपृ रेपृ लेपृ गतौ। मेपते, रेपते, लेपते, अलिलेपत। तुदादौ लिप उपदेहे (६।१३९)—लिम्पते, लिम्पति, अलीलिपत्। हेपृ च इति कौशिकः ॥२६४-२६६॥

२६१. रेपृ शब्दे च ॥२६७॥

२६२. त्रपूष् लज्जायाम्। त्रपते। स्वरतिसूतिसूयति (७।२।४४) इति वेट्—त्रपिता, त्रप्ता। तृफलभजत्रपश्च (६।४।१२२) इत्येत्वाभ्यास लोपौ—त्रेपे। षिद्भिदादिभ्योऽङ् (३।३।१०४)—त्रपा। धातुपूर्वपि (३।१।१२६)

---

१. अत्र धातुवृत्तिर्द्रष्टव्या, पृष्ठ ८२।

२ उदात्तगणे पाठाद् इड्रूप यत्कार्यं प्राप्नोति तदनित्यमितिभाव।

३ उद्धृतमिद धातुवृत्तौ (पृष्ठ ८३) सिद्धान्तकौमुद्या (भाग ३ पृष्ठ १२७) च। अनूदितं च प्रौढमनोरमायाम् (पृष्ठ ५६७)। वस्तुतस्तत्र देहलीदीपन्यायेन चकाराद् पूर्वसूत्रनिर्दिष्ट कम्पनम्, उत्तरसूत्रनिर्दिष्टा च गतिः सगृह्येत। काशकृत्स्नधातु-पाठे तु 'केपृ गेपृ ग्लेपृ गतौ च' इति स्पष्टमेव गतिर्निर्दिश्यते।

४. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८३) प्रौढमनोरमाया (पृष्ठ ५६७) च।

इति ण्यत्–अपत्राप्यम् । अलंकृञ्निराकृञ् (३।२।१३६) इतीष्णुच्–अपत्रपिष्णुः । शॄस्वृस्निहि (उ० १।११) इत्युः— त्रपुः ॥२६८॥

२६३ कपि चलने । कम्पते । चलनशब्दार्थाद् (३।२।१४८) युच्–कम्पनः । नमिकम्पि (३।२।१६७) इति रः—कम्प्रः । निगरणचलनार्थेभ्यश्च (१।३।८७) इति णौ परस्मैपदम्—कम्पयति । मृगिकम्प्योः शविधिः[1] कम्पया । कम्पितः । लङ्घिबृंह्योर्नलोपस्तापशरीरविकारयोः (६।४।२४ वा०) इति नलोपः-निकपितः। कुपिठकम्प्योर्नलोपश्च (श्वेत०उ०४।१५४, दश० उ० १।७३ कपाठः)—कपिः । कपिकपिलकटिपटिभ्य ओलच् (तु० उ० १।६६)[2] कपोलः ।

२६४ रबि लबि अबि शब्दे । रम्बते । के रम्बते—करम्बः। स्पर्शे रक्तकरम्बितम्, क्वचिद्[3] इत्यम्बज् वा । लम्बते । अम्बते । अम्बा, सूशक्यम्बिभ्यः क्लः (तु० उ० ४।१०८) अम्बलम् ॥२७०–२७२॥

२६५ लबि अवस्रंसने च । उल्लम्बते, विलम्बते, अवलम्बते, आलम्बत इत्यनेकार्थत्वम् उपसर्गद्योतितम्, [एवम्] अन्यत्रापि उदाहार्यम् । आलम्बिका स्वर्णमाला । आलम्बं कण्ठाद् ऋजु-लम्बि माल्यम् । लम्बिका त्रिकटा । विलम्बिका शकृद्विलम्बः । लम्बि च स्तम्बेः (तु० उ० १।८७) इत्यूः अलाबूः । अलम्बुसा[3] नाम शाकम् ॥२७३॥

२६६. कबृ वर्णे । वर्णनं वर्णः, शुक्लादिश्च । कबते । अचकबत । ण्यत् (द्र० ३।१२४) काब्यम्[4] । इः (द्र० उ० ४।१३९) कबिः ।

१. नेदं पाणिनीयसम्प्रदाये स्मर्यते । व्याकरणान्तरीयमिदं वचनं स्यात् । 'मृगया' शब्दस्तु वार्तिककारेण निपातितः (महा० ३ । ३ । १०१) । तथैव 'कम्पया' शब्दोऽपि ग्रहण्यः ।

२. नैतद् वचनं क्वचिदुपलभ्यते । उणादौ तु 'कुकदिकडिकटिभ्योऽम्बच्' (४ । ८२) इति पठ्यते ।

३. द्र० 'अलम्बुसाना यात्रा' इति पातञ्जलप्रयोगः (महा० १ । १ । प्रथमाह्निकान्ते) ।

४. काव्यम् कविः अत्रैतावन्वस्यवर्णोपेतौ 'कु शब्दे' इत्यस्माद्धातोः सिध्यतः, न तु 'कबृ वर्णे' इत्यस्माद् वान्तधातोः । अनयोरभेदस्तु चिन्त्य इति पुरस्ताद्

कयरः कृष्णः। कबरी केशवेषः[1] ॥२७४॥

२६७. क्लीबृ अधार्ष्ट्ये। क्लीबते, अचिक्लीबत्। क्लीबः। क्लीबितः॥

२६८. क्षीबृ मदे। क्षीबते अचिक्षीबत्। अनुपसर्गात् फुल्लक्षीब (८।२।५५) इति निष्ठायां क्षीबः साधुः, उपसर्गात् प्रक्षीबितः। दिवादौ क्षीबु निरसने[2] क्षीब्यति ॥२७६॥

२६९. शीभृ कत्थने। शीभते। शीभरः कत्थनः ॥२७७॥

२७०. चीभृ च। चात् कत्थने। चीभते ॥२७८॥

२७१. रेभृ शब्दे। रेभते। लुब्धस्वान्तध्वान्त (७।२।१८) इति विरिब्धः स्वरे साधुः। विरेभितोऽन्यः। अभि रभि शब्द इति दुर्गः—अम्भते, अम्भः। रम्भते, रम्भा। करम्भो दधिसक्तवः ॥२७९॥

२७२. ष्टभि स्कभि प्रतिबन्धे। प्रतिबन्धः क्रियानिरोधः। स्तम्भते। स्तम्भः। विष्टम्भः अवादौर्जित्यालम्बनाविदूर्येषु[3] (चान्द्र ६।४।५३॥ सर० क० ७।४।५६) इति षत्वम्—अवष्टम्भते शूरः, दण्डमवष्टम्भते, अवष्टब्धे सेने। उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सत्वम्—उत्तम्भते झरो झरि सवर्णे (८।४।६५) वा लोपः। तिस्तम्भिषते, तिष्टम्भयिषति[4], टपर. षकारोऽयमित्येके[5]—ष्टम्भते [टिष्टम्भे], टिष्टम्भिषते, टिष्टम्भयिषति, विष्टम्भ्यते। विष्टम्भ्यत इति तु स्तम्नातेः। स्कम्भते, स्कम्भ्यते। विष्कम्भ्यत इति स्कम्नातेः। स्तम्भुस्कम्भू सौत्रौ स्नः—स्तम्नाति स्तम्नोति, स्कम्नाति स्कम्नोति (द्र० अ० ३।१।८२)। वे. स्कम्नातेर्नित्यम् (८।३।७७) षत्वम्—विष्कम्भः ॥२८०,२८१॥

---

(पृष्ठ ५९ टि० १)उक्तम्। यच्चात्र कविभिर्दूषणं इप्रत्यय उक्तः। सोऽप्यजन्तादेव भवति, न तु हलन्तात्। तथा चौणादिक सूत्रम्—अच इः (४।१३९)।

१. 'केशपाशः' पाठा०

२. दिवादौ नायं क्षीरस्वामिना पठ्यते। चान्द्रधातुपाठे ॥ 'क्षिबु क्षीबु निरसने' (४।४) इति बान्तः पठ्यते, न तु वान्तः।

३. अवाच्चालम्बनाविदूर्ययोः (अ० ८।३।६८) इति पाणिनीय सूत्रम्।

४. स्तौतिण्योरेव (अ० ८।३।६१) इति षत्वम्।

५. मतमिदं धातुवृत्तौ (पृष्ठ ८४) पुरुषकारे (पृष्ठ ९३) च स्मृतम्।

२७३. जभ जृभि गात्रविनामे । जभते, जृम्भते । जभितः, जृम्भितः जृम्भः, । रधिजभोरचि (७।१।६१) इति नुम् जम्भकः, जम्भनम्, जम्भः । लुपसदचर (३।१।२४) इति भावगर्हायां यङ्, जपजभदहदश (७।४।८६) इति नुक्—जञ्जभ्यते ॥२८२,२८३॥

२७४. शल्भ कत्थने । शल्भते ॥२८४॥

२७५. वल्भ भोजने । वल्भते, वल्भः ॥२८५॥

२७६. गल्भ धार्ष्ट्यें । प्रगल्भते । प्रगल्भः । गल्भक्लीबहोडेभ्यः क्विप् (तु० ३।१।११ वा०) कास्प्रत्ययादाममन्त्रे लिटि (३।१।३५) प्रगल्भाञ्चक्रे[1], प्रजगल्भे[2] ॥२८६॥

२७७. स्रम्भु[3] प्रमादे । प्रमादोऽवलेपः । विस्रम्भते[4], विस्रभ्यते[5] । सम्भु[5] इत्येके ॥२८७॥

२७८. ष्टुभु स्तम्भे । स्तम्भः क्रियानिरोधः । स्तोभो दोषदृढभावार्थं इति दुर्ग. । स्तोभते । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अभिष्टोभते । स्तुब्ध्वा, स्तोभित्वा, स्तुभित्वा । स्तुब्धः । अनुष्टुप् । त्रिष्टुप् । स्तुन्भुः सौत्रोऽस्ति (द्र०अ०३।१।८२)—स्तुभ्नाति, स्तुभ्नोति ।

२७९. उदात्ता अनुदात्तेतः ।

[अथ सेटः परस्मैपदिनः]

२८०. गुपू रक्षणे । इतः शुम्भान्ताः (१।२९२) चतुस्त्रिंशत् सेटः परस्मैपदिनश्च । गुपूधूपविच्छि (सू० ३।१।२८) इत्यायः—गोपायति । आयादय आर्धधातुके वा (३।१।३१) गोप्ता, गोपिता, गोपायिता ।

१. 'प्रगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' इति महाभाष्ये (३।१।११) पत्रोपसर्गविशिष्टपाठादन्योपसृष्टादनुपसृष्टाच्च क्विपि प्रगल्भति गल्भति इत्येव भवतीति धातुवृत्तिकारः (पृष्ठ ८६) । क्षीरस्वामी तु चान्द्रमतम् (१।१।२८) अनुसृत्य निरुपसर्गं पपाठ ।

२. आमः कथं विकल्प इति न स्पष्टीकृतं स्वामिना ।

३. हस्तलेखेषु सर्वत्र तालव्यशकारवान् पाठः ।

४. अत्र पुरुषकारः (पृष्ठ ११७) धातुवृत्तिश्च (पृष्ठ ८६) द्रष्टव्या ।

५. काशिकादिषु 'विच्छ' इति सलुक्पाठः ।

कर्बरः कृष्णः। कबरी केशवेषः[1] ॥२७५॥

२६७. क्लीबृ अधार्ष्ट्ये। क्लीबते,अचिक्लीबत्। क्लीबः। क्लीबित ॥

२६८. क्षीबृ मदे। क्षीबते अचिक्षीबत्। , अनुपसर्गात् फुल्लक्षीब (८।२।५५) इति निष्ठायां क्षीबः साधुः, उपसर्गात् प्रक्षीबितः। दिवादौ क्षीवु निरसने[2] क्षीव्यति ॥२७६॥

२६९. शीभृ कत्थने। शीभते। शीभरः कत्थनः ॥२७७॥

२७०. चीभृ च। चात् कत्थने। चीभते ॥२७८॥

२७१. रेभृ शब्दे। रेभते। लुभ्यस्वान्तध्वान्त (७।२।१८) इति विरिब्धः स्वरे साधुः। विरेभितोऽन्यः। अभि रभि शब्द इति दुर्ग'— अम्भते, अम्भः। रम्भते, रम्भा। करम्भो दधिसक्तवः ॥२७९॥

२७२. ष्टभि स्कभि प्रतिबन्धे। प्रतिबन्धः क्रियानिरोधः। स्तम्भते। स्तम्भः। विष्टम्भः अवाद्दौर्जित्यालम्बनाविदूर्येषु[3] (वा॰ ६।४।५३॥ सर॰ क॰ ७।४।७६) इति षत्वम्—अवष्टम्भते शूरः, दण्डमवष्टम्भते, अवष्टब्धे सेने। उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सत्वम्—उत्तम्भते झरो झरि सवर्णे (८।४।६५) वा लोपः। तिस्तम्भिषते, तिष्टम्भयिषति[4], ष्टपर. षकारोऽयमित्यके[5]—ष्टम्भते [टिष्टम्भे], टिष्टम्भिषते, टिष्टम्भयिषति, विष्टम्भ्यते। विष्टभ्यत इति तु स्तभ्नातेः। स्कम्भते, स्कम्भ्यते। विष्कभ्यत इति स्कभ्नातेः। स्तम्भुस्कम्भू सौत्रौ स्तः—स्तभ्नाति स्तभ्नोति, स्कभ्नाति स्कभ्नोति (द्र॰ अ॰ ३।१।८२)। वे. स्कभ्नातेर्नित्यम् (८।३।७७) षत्वम्—विष्कम्भः ॥२८०,२८१॥

(पृष्ठ ५९ टि॰ १) उक्तम्। ग्रन्थान्तर कविसिद्ध्यर्थं इप्रत्यय उक्तः। सोऽप्यजन्तादेव भवति, न [illegible] हलन्तात्। तथा चौणादिक सूत्रम्—अच इः (४।१३९)।

१. 'केशपाश.' पाठ॰

२. दिवादौ नायं क्षीरस्वामिना पठ्यते। चान्द्रधातुपाठे [illegible] 'क्षिवु क्षीवु निरसने' (४।४) इति वान्तः पठ्यते, न तु बान्तः।

३. अवाच्चालम्बनाविदूर्ययोः (अ॰ ८।३।६८) इति पाणिनीय सूत्रम्।

४. स्तं तिष्योरेव (अ॰ ८।३।६१) इति षत्वम्।

५. मतमिदं धातुवृत्तौ (पृष्ठ ८४) पुरुषकारे (पृष्ठ ९३) च स्मृतम्।

२७३. जभ जृभि गात्रविनामे । जभते, जृम्भते । जम्भितः, जृम्भितः जृम्भः, । रधिजभोरचि (७।१।६१) इति नुम् जम्भकः, जम्भनम्, जम्भः । लुपसदचर (३।१।२४) इति भावगर्हायां यङ्, जपजभदहदश (७।४।८६) इति नुक्—जंजम्भ्यते ॥२८२,२८३॥

२७४. शल्भ कत्थने । शल्भते ॥२८४॥

२७५. वल्भ भोजने । वल्भते, वल्भः ॥२८५॥

२७६ गल्भ धार्ष्ट्ये । प्रगल्भते । प्रगल्भः । गल्भक्लीबहोडेभ्यः क्विप् (तु० ३।१।११ वा०) कास्प्रत्ययादाममन्त्रे लिटि (३।१।३५) प्रगल्भाञ्चक्रे[1], प्रजगल्भे[2] ॥२८६॥

२७७. स्रम्भु[3] प्रमादे । प्रमादोऽवलेपः । विस्रम्भते[4], विस्रभ्यते[4] । स्रन्सु[5] इत्येके ॥२८७॥

२७८. ष्टुभु स्तम्भे । स्तम्भः क्रियानिरोधः । स्तोभो दोषवृद्ध्या- ख्यार्थं इति दुर्गः । स्तोभते । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्— अभिष्टोभते । स्तुब्ध्वा, स्तोभित्वा, स्तुभित्वा । स्तुब्धः । अनुष्टुप् । त्रिष्टुप् । स्तुन्भुः सौत्रोऽस्ति(द्र०अ०३।१।८२)—स्तुभ्नाति,स्तुभ्नोति ।

२७९. उदात्ता अनुदात्तेतः ।

[अथ सेटः परस्मैपदिनः]

२८०. गुपू रक्षणे । इतः शुम्भान्ताः (१।२९२) चतुस्त्रिंशत् सेटः परस्मैपदिनश्च । गुपूधूपविछ[5] (तु० ३।१।२८) इत्यायः—गोपायति । आयादय आर्धधातुके वा (३।१।३१) गोप्ता, गोपिता, गोपायिता ।

---

१. 'अवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' इति महाभाष्ये (३।१।११) अवोपसर्गविशिष्टपाठादन्योपसृष्टादनुपसृष्टाच क्विपि प्रगल्भति गल्भति इत्येव भवतीति धातुवृत्तिकारः (पृष्ठ ८६) । क्षीरस्वामी तु चान्द्रमतम् (१।१।२८) अनुसृत्य निरुपसर्गं पपाठ । २. आमः कथ विकल्प इति न स्पष्टीकृतं स्वामिना ।

३. हस्तलेखेषु सर्वत्र तालव्यशकारवान् पाठः ।

४. अत्र पुरुषकारः (पृष्ठ ११७) धातुवृत्तिश्च (पृष्ठ ८६) द्रष्टव्या ।

५. काशिकादिषु 'विच्छ' इति सतुक्पाठः ।

राजसूयसूर्य (३।१।११४) इति कुप्यं साधु । गुप गोपने (२।६११) तूत्पत्तिचिकीर्षितः[1]—जुगुप्सते गुप्तिज्किद्भ्यः (३।१।५) इति । चुरादौ गुपू भासार्थः (१।१९७) गोपयति, गोपना ॥२८९॥

२८१. धूप सन्तापे । धूपायति, धूपयाञ्चकार, दुधूप । चुरादौ भासार्थः । (१०।१९७) धूपयति ॥२९०॥

२८२. जल्प जप व्यक्तायां वाचि । जल्पति । प्रतिषेधे हसादीनामुपसंख्यानात् ( द्र० १।३।१५ वा ) व्यतिजल्पन्ति । घञि (३।३।१८) जल्पः । जल्पभिक्ष (३।२।१५५) इति जल्पाकः ।

२८३. जप मानसे च । मनोनिर्वर्त्ये वचने । जपति । लुपसदचर (३।१।२४) इति यङ्—जञ्जप्यते, जपजभदह (७।४।८६) इति नुक् । पोरदुपधाद् (३।१।९८) यत्—जप्यम् । स्तम्बकर्णयोरमिजपोः (३।२।१३) अच्—कर्णेजपः । व्यधजपोरनुपसर्गे (३।३।६१) अप्—जपः । जपितः । जपस्त्वादितश्च (७।२।१६) इति चकारस्यानुक्तसमुच्चयार्थत्वादित्याहुः[2] ।

२८४. चप सान्त्वने[3] । चपति । चपस्य विकारः चापः[4] । चपेटः[5] चपटो विपुलः ॥२९३॥

२८५. षप समवाये । सपति । सिषापयिषति । सप्त । सप्तिरश्वः[6] । सचेति चन्द्रः (चा० धा० १।१४०) सचति, सचिव.[7]।

२८६. रप लप व्यक्तायां वाचि । रपति लपति । आलु-

---

१. चिकीर्षित इति सनः आचा सह । उत्पत्त्यवस्थायामेवास्मात् स्वार्थे सन् भवतीति भावः ।

२. तुलनीयम्—'चकारोऽनुक्तसमुच्चयार्थः'—काशिका (का० ७।२।१६) ।

३. 'सान्त्वने' इति सर्वकोशेषु पाठः ।

४. 'चपो वेणोर्विकारश्चापम्' इत्यमरटीकायां स्वामी (पृष्ठ १९२) ।

५ 'खण्डकोपाध्यायस्तस्मै चपेटां ददाति' इति वृत्तिरादेच् (१।१।१) इत्यत्र भाष्ये स्त्रीलिङ्गः ।

६. अमरटीकायां 'सपति समवैति सप्तिः' इति स्वामी (पृष्ठ १८६) । सायणस्तु 'सप्तानामपत्य साप्तिः' इत्युक्तवान् (धा० वृ० पृष्ठ ८७) ।

७. उद्धृतमिदं पुरुषकारे (पृष्ठ ४१) । धातुवृत्तौ (पृष्ठ ८७) पाठो भ्रष्टः ।

पुवपि (३।१।१२६) इति ण्यत् अपलाप्यम्। लपितम्। लपनम् मुखम्। आलापः, अपलापः, प्रलापः ॥३९६,३९७॥

२८७. चुप मन्दायां गतौ। चोपति किञ्चिच्चलति। चोपनम्। उणादौ चुप्पम्[1] निष्पन्दत्वम्[2]। चुपेरच्चोपधायाः (तु० उ० १।११०)–चपलः। इत्थं च्यात्र विपरीतार्थावगमादिममभिप्रायं न विद्मः, यथाकथञ्चित् नाम्नां व्युत्पत्तिः कार्येति चेत् तर्हि च्परेर् (२।२८४) पत्वाभ्यासेन साध्यताम् ॥

२८८ तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ हिंसार्थाः। तोपति तुम्पति। प्रात् तुम्पतेर्गतौ[3] सुट् प्रस्तुम्पति गां वत्सः। त्रुफ त्रुम्फ इति चन्द्रः (चा० धा० १।१४२) अधिकौ पठति ॥३९९-४०४॥

२८९. पर्फ[4] रफ रफि अर्ब वर्ब कर्ब खर्ब गर्ब घर्ब शर्ब पर्व सर्व चर्व भर्व नर्व[5] गतौ। पञ्चदशैते गत्यर्थाः। पर्फादींस्त्रीन् हिंसार्थे कण्वः पठति। गर्बेत्यनार्षः, ओष्ठ्योऽत्र बः, पवर्गप्रस्तावात्। अर्बेत्यादौ रेफस्थाने नकारं कौशिको मन्यते। एकः शर्बस्तालव्यादिः, अपरः षोपदेशः, अन्यो दन्त्यादिः। अर्वा[6] अश्वः। पर्पटः, पर्परी कुत्सिताः केशाः। कर्वटो ग्रामचतुःशतीमध्ये पुरम्[7]। कर्बुरश्चित्रो वर्णः। खर्बः[8], गर्बः[8], शर्बः[8], सर्बः[8]। चर्वणम् ॥४०५-४१९॥

२९०. चुम्बि वक्त्रसंयोगे। नमस्तुङ्गशिरश्चुम्बि (हर्षचरित ५।२) इत्युपचारात्। चुम्बति। चुम्बितम्। चुम्बनम् ॥४२०॥

२९१ सृभु सृम्भु हिंसार्थौ। सर्भति। सृम्भति। एतावप्यषोपदेशौ, सृजम् (६।१।६४ भाष्ये) इत्यनेनानर्थकस्यापि ग्रहणात्[8] ॥४२१,४२२॥

---

१. बाहुलकात् प. इति भावः।

२. 'निष्कर्मत्वम्' पाठा०। तुलनीयम्—हैमोणादि० ३०१।

३. 'प्रात्तुम्पतेर्गवि' इति सर० कण्ठा० ६।२।२७२ ॥ प्रात्तुम्पतौ गवि कर्तरि इति पारस्करादिगणसूत्रम्। (द्र० काशिका ६।१।१५७)।

४. 'पर्प' 'बफ' पाठान्तरे।

५. 'तर्व' पाठा०।

६. दन्त्योष्ठ्यवकारवन्त एते, तथैव च कोशेषु पठ्यन्ते। ओष्ठ्यबकारवतां पाठे कारणं मृग्यम्।

७. 'ग्रामचतुःशतीमुख्यपुरम्' पाठा०।

८. स्मृतमिदं धातुवृत्तौ (पृष्ठ ८८)। नैतादृशं भाष्यव्याख्यानमन्यत्र दृष्टम्।

२९२ शुम्भ भाषणे हिंसायां च[1] । भासन इति दुर्ग.[1] । शुम्भति । शुम शुम्भ शोभार्थो (६।३३) इत्यस्य शुम्भते[2] । षोपदेशोऽयमिति शुष्ठ, सावष्टम्भनिशुम्भशुम्भनैनमद्भूगोले (द्र० मालतीमाधव,५।२३) इत्यादिदर्शनात्, सुम्भति । कुपुम्भम् ॥४२३॥

२९३. उदात्ता उदात्तेतः ।

[अथ सेट आत्मनेपदिनः]

२९४. घिणि घुणि घृणि ग्रहणे । इतः कम्वन्ताः (१।३००) दृश सेट आत्मनेपदिनश्च । घिण्णते, घिण्णितः । घुण्णते[4] । घृण्णते ॥

२९५. घुण घूर्ण भ्रमणे । घोणते । घोणः । घुणाक्षरम् । घुणावर्तोऽरघट्टः । घूर्णते । तुदादौ ( ६ । ४८ ) परस्मैपदिनौ इतः— घुणति, घूर्णति ॥४२७, ४२८॥

२९६. पण व्यवहारे स्तुतौ च । चक्रपाणि पणायति, आय व्यवधानात् तङ् नास्ति[5] । गुपूधूपविच्छपणिपनिभ्य आयः (तु० ३।१।२८) इति स्तुत्यर्थेन पनिना साहचर्यात् व्यवहारार्थस्य पणेरायो नास्ति[6] । व्यवहृपणो (२।३।५७) इति षष्ठी—शतस्य पणते । न चोपलेभे वणिजा

१ 'शुम्भ भाषणे········ ··· दुर्ग.' इत्येव पुरुषकार उदाजहार (पृष्ठ ९८) । अत्र धातुवृत्तिरपि द्रष्टव्या (पृष्ठ ८८)।

२. तुदादौ परस्मैपदिषु पाठात् 'शुम्भति' इति युक्तम् ।

३ 'निशुम्भसम्भ्रम' इति पाठो मुद्रिते ।

४ इतोऽग्रे 'घुणण ' इति क्वचिदधिकम् ।

५. धातुवृत्तौ क्षीरस्वामिनो मते 'पणायते' इत्यात्मनेपदमुक्तम् (पृष्ठ ९०), परन्त्वत्र तदभावो विधीयते । काशकृत्स्नधातुपाठे तु 'पण पन व्यवहारे स्तुतौ च' इति पठ्यते । तस्य कन्नडटीकायां 'पणते पणायते, पनते पनायते' इत्येवमुभाभ्यां सार्वधातुके आयविकल्प आत्मनेपद चोदाहियते (पृष्ठ १०८) ।

६. वृत्तिकारादयोऽप्यत्रैवानुकूला । तथापि निघण्टावर्चतिकर्मसु (३।१४) 'पणायति पणते' इत्युभयपाठदर्शनात् स्तुत्यर्थादपि पणतेरायविकल्पो द्रष्टव्यः । तथा सति काशकृत्स्नीय पूर्वोक्तं व्याख्यानं युक्तमेव ।

पणायाम् (भट्टि० ३।२७) इति तु भट्टिर्भ्रान्तः[1]। अवद्यपण्य (३।१।१०१) इति पणितव्ये पण्यः साधुः। नित्यं पणः परिमाणे (३।३।६६) इत्यप्—पणः। गोचरसञ्चर (३।३।११९) इत्यापणः साधुः। याहि पणिपनि (उ० २।४५) इतीकन्—आपणिकः। पणेरिज्यादेश वः (उ० २।७०) इति वणिक्। अशिपणाय्यो (उ० ४।१३२) इति पाणिः ॥४२९॥

२९७. पन च। चकारात् स्तुतौ। पनायते[2] हरिम्। अत्र अवयवेऽपि कृत लिङ्ग समुदायस्य विशेषकं भवति (महा० ३।१।५) इत्याय-व्यवधानेऽप्यात्मनेपदम्[2]। अत्यविचमि (उ० ३।११७) इत्यसच्—पनसः॥

२९८. भाम क्रोधे। भामते भामिनी ॥४३१॥

२९९. क्षमूष् सहने। क्षमते। क्षन्ता, क्षमिता। क्षान्तः। क्षमा। दिवादौ (४।१००) क्षाम्यति। क्षान्तिः ॥४३२॥

३००. कमु कान्तौ। कान्तिभिलाषः। उत्पत्तिकारितो[4]ऽयम्। कमेर्णिङ् (३।१।३०)—कामयते। आयादय आर्धधातुके वा (३।१।३१) इति चक्रमे, कामयाञ्चक्रे। कमनम्, कामनम्। कान्तिः। कामना। कमित्वा, कान्त्वा, कामयित्वा। कान्तः, कामितः। अचीकमत, कमेश्चङि उपसंख्यानात् (तु० ३।१।४८ भा०) अचकमत। तु काममनसोरपि (६।१।१४४ काशिका) इति कर्तुकामः। शीलिकामिभक्षाचरिभ्यो णः (३।२।१ वा०) मांसकामा स्त्री। लषपतपद (३।२।१५४) इत्युकञ्—दास्याः कामुकः,

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८६)। काशकृत्स्नपाठानुसारं तु व्यवहारेऽप्यायो भवति, तथा सति न भट्टिर्भ्रामेति शक्यते वक्तुम्। वणिक्पदनिर्वचने (उ० २।७०) पाणिपदनिर्वचने (उ० ४) च 'पणायति व्यवहरति' इत्येव निर्दिशन् स्वामिदयानन्दोऽप्यनेनैवानुकूलः।

२. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २ पृष्ठ १४०)। निघण्टावर्चतिकर्मसु (३।१४) 'पनायते' इत्यात्मनेपदं श्रूयते। यथा तु वैयाकरणानां मतं तथा पनायतेरार्धधातुके आयप्रत्ययाभावेऽनुदात्तत्वस्य चरितार्थत्वादात्मनेपदेन न भवितव्यम्। ३. 'कोपे' पाठा०।

४ कारित इति णे. प्राचां संज्ञा, उत्पत्त्यवस्थायामेव णयन्त इत्यर्थः। काशकृत्स्नीयकन्नडटीकायामत्रापि 'कमते कामयते' इत्येवं सार्वधातुके णिङो विकल्पो दृश्यते। एतत्पृष्ठस्था प्रथमा टिप्पण्यपि द्रष्टव्या।

न लोकाव्यय (२।३।६९) इति निषेधे प्राप्ते कमेरनिषेधायाम् (२।३।६९ वा०) इति षष्ठी। नोदात्तोपदेशस्य (७।३।३४) इति निषेधे प्राप्ते यवमिकमिचमी नाम् (७।३।३४ वा०) इति वृद्धिः—कामी। नमिकम्पि (३।२।१६७) इति रः—कम्रः। युजपीष्यते—(द्र० ३।२।१५७ भा०) कमनः। कमिमनि-जनि (उ० १।७३) इति क्तुः। कमेरठः (उ० १।१०२). कमठ। कलस्त्वपश्च (उ० १।१०६) इति कमलम्। वृतृवदि (उ० ३।६२) इति सः—कंसः। उणादौ कम्बलः, कोमलः, कमला, कामला। चतिकमिभ्रमि (उ० ३।१३२) इत्यरः—कमरः। कमेरथोपधायाः (तु० उ० ३।१३८) कुमारः। यतः कृकमिकस (८।३।४६) इति सत्वम्—अयस्कामः। न भाभूपूकमिगमि (८।४।३४) इति कृत्यचो न णत्वम्—प्रकमनम्, प्रकामनम् ॥४३३॥

३०१. उदात्ता अनुदात्तेतः।

---

[अथ सेटः परस्मैपदिनः]

३०२. अण रण वण भण क्रण कण व्रण भ्रण ध्वण शब्दार्थाः। एते शब्दनक्रियार्थाः। इतः क्रम्यन्ता (१।३।१६) त्रयस्त्रिंशत् सेटः परस्मैपदिनश्च। अणति। क्वुन् शिल्पिसंज्ञयोः (उ० २।३२) अणको नापितः। इञ् (द्र० उ० ४।१२४) आणिः, अक्षाग्रकीलकः, अणिरित्यमरसिंहः (२।८।५७)। अण्डम्। अणश्च (उ० १।८) इत्युः—अणु। अणो डश्च (श्वेत० उ० १।८४) इति णित्वाद् आडुः—आलुका। रणति। घञर्थे कविधानम् (३।३।५८ वा०) इत्यप् वक्तव्यः, रणन्त्यस्मिन्निति रणः। रण-भण कण गतौ मित्त्वं स्मर्यते[1] रणयति, अन्यत्र राणयति। वणति। उल्बणः, उल्वणः उदूखलोलूखलवत्[2] पृषोदरादित्वात् (६।३।१०९) लत्वं वा। वणत्यस्मिन् ज्या—बाणः। बण्यतेऽसाधनया वा—इञ्—बाणिः, बाणी[3]। भणितं सुरतकूजिते रूढम्, एवं क्वणितम् आर्ते, क्वणितं वीणादौ, रणितं नूपुरादौ, कूजितं विहगादौ,

---

१. नेदमस्माभिः क्वचिदुपलब्धम्।

२ यथा उदूखल उलूखलशब्दयोरुपसर्गदकारस्य विकल्पेन लत्वं तथैव उल्बण उल्वणशब्दयोरपि द्रष्टव्यमिति भावः।

३. कृदिकारादक्तिनः (४।१।४१ गणसूत्रम्) इति ङीष्।

बृंहितं गजे, हेषितं हये, वाशितं पशुषु, गर्जितं मेघादौ, गुञ्जितं भ्रमरादौ, गृञ्जितम् सिंहादौ, इत्यादि प्रतिधातुरयम् कियद् व्याचक्ष्महे वयम्, लोकात् सूरिभिरह्यताम्, लक्ष्यमूलं हि लक्षणम् । मणिः । मणिको महाकुम्भः । कणति । कणः, कणिका, कङ्कणः, कणूकः, कण्ठः । अशूप्रुषि (उ० १।१५१) इति क्वन्—कण्वं पापम् । काण्डम् । कणति । कणो मीलने च (३।३।६५) इति घञ्—निकणः निकाणः, कणः काणः, प्रकणः प्रकाणः, उपकणः उपकाणः । पीयुकणिभ्यां कालन् ह्रस्वः संप्रसारणं च (दु० उ० ३।७६)—कुणालम् । कणेः सम्प्रसारणं च (उ० ३।१४३) कुणपः । ग्रणति ग्रणः । चुरादौ व्रण गात्रविचूर्णने (१०।३२२) अदन्तः—व्रणयति । मूर्धन्यान्तो ध्वणिर् लोके नास्ति ॥४३४–४४२॥

३०३. ओणृ अपनयने । ओणति । मा भवान् ओणिणत् । एतदेव ऋदित्वं ज्ञापकम्—नित्यमन्तरङ्गं च द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति, अन्यथा द्विर्वचने कृते उपधाया अभावाद्ह्रस्वो न प्राप्नोति, किम् ऋदित्वेन कृतं स्यात्, अतो मा भवानटिटदित्यादौ ह्रस्व' सिद्धः ॥४४३॥

३०४. शोणृ वर्णगत्योः । शोणति । शोणो लोहितः । शोणितं रुधिरम् । गतौ—शोणो नदः ॥४४४॥

३०५. श्रोणृ संघाते । श्रोणिः । श्रोणः पङ्गुः ॥४४५॥

३०६. श्लोणृ च ॥४४६॥

३०७. पैणृ[1] गतिप्रेरणश्लेषणेषु । पैणति[1] अपिपैणत्[1] ॥४४७॥

३०८. ध्वन भण धण शब्दे । ध्वनति । ध्वनम् । संध्वननं वशीकरणम् । भणति । भाणः अलङ्कारे सुप्रसिद्धः । धणति । कौशिकस्तु दन्त्यान्त्यमाह । उस् (द्र० उ० २।११८) धनुः[2] । वनिप्–धन्वा[3] कृषिचमि (उ० १।८२) इत्यूः—धनूः राशिः ॥४४८–४५०॥

---

१. 'पेणृ', 'पेणति', 'अपिपेणत्' इति पाठा० ।

२. उणादिवृत्तिकारास्तु धन धान्ये इत्यस्माद् 'धेनुः, धन्व, धनुः' शब्दान् व्युत्पादयन्ति ।

३. उणादौ (१।१५६) कनिन्प्रत्ययान्तो निपात्यते ।

३०९. कनी दीप्तिकान्तिगतिषु । दीप्तिः प्रकाशः। कान्तिः शोभा। कनति। कनीनिका। कनकम्। अघ्न्यादौ (द्र० उ० ४।१११) कन्या[1]। कान्तः ॥४५१॥

३१० स्तन ध्वन शब्दे ।[2] स्तनति । स्तनितम् । स्तनः । स्तानयति। चुरादावदन्तः स्तनगदी देवशब्दे[3] (१०।२४७) मेघः स्तनयति। अभिनिसः स्तनः शब्दसंज्ञायाम्(८।३।८७)षत्वम्—अभिनिःष्टानो[4] विसर्गः[5]। ध्वनति। ध्वानः, ध्वनिः। तुन्दस्वान्तध्वान्त (७।२।१८) इति ध्वान्तं तमश्चेत्, ध्वनितमन्यत्। चुरादौ अदन्तः (१०।१७४) ध्वनयति ॥४५२, ४५३॥

३११. वन षण भक्तौ । भक्तिर्भजनम्। वनति। वनम् उदकम्[6]। वनिता। ऋतन्यञ्जि (उ० ४।२) इति वनिष्ठु पुष्पान्त्रम्। उणादौ—वानरः, वानीरो वेतसः। तनादौ वनु याचने (८।८) वनुते, वनोति[7]। सनति। सनो ये विभाषा (६।४।४३) आत्वम्—सायते सन्यते। कथं सन्यात्? ये इत्यदन्ते ये परे विधानात्[8] सनीवन्तर्ध (७।२।४९) इति

---

१. अस्मादेव धातोः कन्यार्थक कनीना शब्दः, यस्य 'कानीन' इति ताद्धित रूपम्। विशेषस्त्वत्र अस्मदीये 'संस्कृत व्याकरण शास्त्र का इतिहास' (भ० १ पृष्ठ २५) पुस्तके द्रष्टव्यः।

२. 'ष्टन ध्वनेति क्षीरस्वामी' इति पुरुषकारः (पृष्ठ ९०)। अजन्तदन्त्यपराः सादयः षोपदेशाः (अ० ६।१।६४) इति भाष्यवचनात् षोपदेश एवायम्। क्षीरतरङ्गिण्यां कदाचित् पाठभ्रंशो जातः स्यात्।

३ 'मेघ शब्दे' पाठा०।

४. 'अभिनिष्टान' इति सार्वत्रिको विभक्तिरहितोऽपपाठः।

५. चन्द्रस्तु 'अभिनिष्टानो वर्णे' (७।४।७३) इति सूत्रयन् वर्णमात्रस्य संज्ञामाह।

६. 'उदकम्' इति क्वचिन्न। निघण्टौ (१।१२) उदकनामसु पठितः। काशकृत्स्नीयधातुपाठस्य कन्नडटीकायामपि तथैव।

७ तौदादिको वनिरनुदात्तेत्, न स्वरितेत्, तेन 'वनोति' इति पाठभ्रंशो द्रष्टव्यः।

८. धातुपारायणकारस्याप्येतदेव मतम्। अन्ये तु याशुट्यपि 'सायात् सन्यात्' आत्वविकल्पमिच्छन्ति। द्र० धातुवृत्तिः पृष्ठ १४।

षेट्—सिसनिषति, स्तौतिण्योरेव षण्यभ्यासाद् (८।३।६१) इति नियमात् षत्वं नास्ति। सिषासति सनोतेरनः (८।३।१०८) इति षत्वम्। दृसनिजनि (उ० १।३) इति ञुण्—सानुः। खनिकष्यज्यसि (उ० ४।१३९) इति सनिः। न क्तिचि दीर्घश्च (६।४।३९) सातिः[1] लोपश्चास्यान्यतरस्याम् (६।४।४५) सातिः सन्तिः। तनादौ षणु दाने (८।२) सनुते सनोति ॥४५४,४५५॥

३१२. अम गत्यादिषु। ज्वली दीप्तिकान्तिगतिषु (१।३०६) इयं गतिः, स्तन ध्वन शब्दे (१।३१०) अयं शब्दः। वन षण भक्तौ (१।३११) इयं भक्तिः—एते गत्यादयोऽर्थाः। अमति न कम्यमिचमाम् (१।५७७) इति न मित्त्वम्—आमयति। रुष्यमत्वरसंघुषास्वनाम् (७।२।२८) इति निष्ठायां वेट्—अभ्यमितः अभ्यान्तः। अकमः। अमेः सन् (उ० ५।२१) असः। अमेर्द्वीराश्लो वा (दश० उ० ।४५) अङ्गुरिः अङ्गुलिः। अर्जिदृशि (उ० १।२८) इत्यन्धुः कूपः। अन्धयतेस्तु (१०।३१०) तु युक्तः। अमितम्योर्दीर्घश्च (उ० २।१६) इत्याम्रः। हसिमृग्रि (उ० ३।८६) इति तन्—अन्तः। अमिचि-मिदिशसिभ्यः क्त्रः (उ० ४।१२३) अन्त्रम्। अमिनक्षियजिवधिपतिभ्योऽत्रन् (तु० उ० ३।१०४) अमन्त्रम् पात्रम्। अमेरिन्नन्[2] अमिन्नोऽरिः। ष्ट्रन् (दश० उ० ४।१५८) अन्त्रम् ॥४५६॥

३१३. द्रम हम्म मीमृ गतौ। द्रमति। ह्म्यन्तक्षण (७।२।५) इति सिचि वृद्धिर्नास्ति—अद्रमीत्। दन्द्रम्यते। लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् (३।१।२४) इति यङन्ताद् युच्—दन्द्रमणः। द्रामिमस्योरुच्च (दश० उ० ८।११३) द्रुमलं मानभाण्डम्। हम्मतिः सुराष्ट्रेष्विति भाष्यात् (पस्पशाह्निक) ह्रियंस्थो मकारः ॥४५७-४५९॥

३१४. मीमृ शब्दे च। मीमति, अमिमीमत् ॥४६०॥

---

१. 'न क्तिचि दीर्घश्च (६।४।३९) सूत्रं तु दीर्घत्वस्य प्रतिषेध शास्ति। तस्मादस्यात्र निर्देशश्चिन्त्यः। आत्वं, पक्षेऽनुनासिकस्य लोपश्च 'लोपश्चास्यान्यतरस्याम् (६।४।४५) इत्यनेनैव विधीयेते तेन सातिः सतिः सन्तिः इति त्रीणि रूपाणि भवन्ति।

२. प्रकृतिप्रत्ययनिर्देशोऽयम्। सूत्रं तु 'अमेर्द्विषति चित्' (उ० ४।१७४) द्रष्टव्यम्।

**३१५. चमु छमु जमु झमु अदने।** चमति, विचमति। ष्ठिवुक्लम्वाचमां शिति[1] (७।३।७५) इति दीर्घः—आचामति। न कम्यमिचमाम् (१।५५७) इति मित्त्वं नास्ति—आचामयति। ऋहलोर्ण्यत् (३।१।१२४) इति ण्यत्—आचाम्यम्। नोदात्तोपदेशस्य मान्तस्यानाचमेः (७।३।३४) इति वृद्धिनिषेधाभावः—आचामकः। कषिचमि (उ० १।८१) इत्यूः—चमूः। अत्यविचमि (उ० ३।११७) इत्यसच्—चमसः। कृदादयश्च (उ० ५।४१) इति चमरः। उदितो वा (७।२।५६) इट्—चान्त्वा चमित्वा। आचान्तः, आचामः। आच्छमति। आच्छामः। जमति। इदुपधोऽयमित्येके[2]—जेमनम्, जेमः। झमति ॥४६१-४६५॥

**३१६. क्रमु पादविक्षेपे।** पाद न्यासेऽर्थे। क्रमः परस्मैपदेषु (७।३।७६) इति दीर्घः—क्रामति। वृत्तिसर्गतायनेषु (१।३।३८) इत्यात्मनेपदम्—ऋग्वस्य क्रमते बुद्धिः, न प्रतिहन्यत इत्यर्थः, युद्धाय क्रमते, उत्सहत इत्यर्थः, शास्त्राणि क्रमन्ते, स्फीतीभवन्तीत्यर्थः। आङ उद्गमने (१।३।४०) आक्रमते नमोऽर्कः। ज्योतिरुद्गमन इति वक्तव्यात् (म० १।३।४० वा०) नेह—आक्रमति धूमो हर्म्यतलम्[4]। वेः पादविहरणे (१।३।४१) साधु विक्रमतेऽश्वः, नेह—विक्रामत्यजितसन्धिः। प्रोपाभ्यां समर्थाभ्याम् (१।३।४२) प्रक्रमते भोक्तुम्, उपक्रमते। अनुपसर्गाद् वा (१।३।४३) क्रमते क्रामति। स्नुक्रमोरनात्मनेपदनिमित्ते (७।२।३६) इतीट्—प्रक्रमितुम्, चिक्रमिषति, चिक्रमिषा, चिक्रमिषुः, नेह—प्रचिक्रंसते। उदितो वा (७।२।५६) इट्—क्रमित्वा क्रान्त्वा, अनिट् पक्षे क्रमश्च क्त्वि (६।४।१८) इति वा दीर्घः क्रान्त्वा। उणादौ क्रमुकः। नित्यं कौटिल्ये गतौ (३।१।२३) यङ्—चङ्क्रम्यते। यजजपदशां यङः (३।२।१६६) इति युच्—चङ्-

१. अयं काशिकासम्मतः पाठः। अन्यत्र 'ष्ठिवुक्लमुचमां शिति' इत्येव पठ्यते।

२. धातुवृत्तौ स्मृतम् (पृष्ठ ९५)। अस्यैव 'जिमु' धातो राजस्थान (मारवाडी) भाषायाम् 'जीमना' पदं प्रयुज्यते।    ३. 'पद०' इति पाठा०।

४. 'हर्म्यतलात्' इति महाभाष्ये पाठान्तरम्। अत्र नागेशीय उद्योतो द्रष्टव्यः (१।३।४०)।

क्रमणः। घञि चोदात्तोपदेशस्य (७।३।३४) इति वृद्धिर्नास्ति—क्रमः, उपक्रमः। जनसनखन (३।२।६७) इति विट्, विड्वनोः (६।४।४१) आत्—दूरक्राः। क्रमितमिशतिस्तम्भाम् अत इच्च (उ० ४।१२१) इति किः—क्रिमिः, बाहुलकात् सम्प्रसारणञ्च—कृमिः। शकधृषज्ञाग्ला (३।४।६५) इति तुमुन्—प्रक्रमते भोक्तुम्॥ ४६६॥

३१७. उदात्ता उदात्तेतः॥

---

## [ अथ सेट आत्मनेपदिनः ]

३१८. अय वय पय मय चय तय नय[1] गतौ। इतो रेडृपर्यन्ता (१।३३६) एकोनचत्वारिंशत्[2] सेट आत्मनेपदिनश्च। अयते। उपसर्गस्यायतौ (८।२।१९) इति लत्वम्—पलायते पल्ययते, येन नाव्यवधानम्[3] इत्येकेन वर्णेन व्यवधानमाश्रीयते, नेह—प्रत्ययते। दयायासश्च (३।१।३७) इति लिट्याम्—पलायाञ्चक्रे। वयते। वयुन् (दश० उ० ४।१८८) वयो बाल्यादि, पक्षी च। वयो णित् (दश० उ० ९।४६) वायसः। पयते। पयः। मयते। मेङोऽपि (१।३८०) मयते। चयते। घञ्—चायः। चिनोतेः (५।२)—चयः। नयते। लिटि—नेये। णीञ् प्रापणे (१।६४०) नयति, नयते, निनाय, निन्ये॥४६७—४७३॥

३१९. तय रक्षणे च। तयते। तायी जिनः॥४७४॥

३२०. दय दानगतिरक्षणहिंसादानेषु। दयते। अधीगर्थदयेशां कर्मणि (२।३।५२) षष्ठी—मातुर्दयते। दय्यते। दयिता। दयाञ्चक्रे

---

१. 'नय' सर्वहस्तलेखेष्वपपाठः, 'णय' इति तु धातुवृत्त्यादिषु सार्वत्रिकः पाठः। 'णय रक्षणे च' इति काशकृत्स्नीयः पाठः (पृष्ठ १०)। मैत्रेयोऽपीत्थमेवाह (धा० प्र० पृष्ठ ३६)।

२. 'एकोनपञ्चाशद्' पाठः। अयुक्तमिदम् एकोनचत्वारिंशद्धातूनामेवोपलम्भात्।

३. 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनं प्रामाण्यात्' इति हस्तः पाठः। द्र० काशिका ८।२।१९॥

(३।१।३७) इति लिट्याम्— दयाञ्चक्रे । स्पृहिगृहिपतिदयि (३।२।१५८) इत्यालुच्—दयालुः । भिदादित्वाद् (द्र० ३।३।१०४) दया । दयितम् । देङ् रक्षणे (१।६८१) मातरं दयते, दीयते, दाता ॥४७५॥

३२१. रय गतौ । रयते रयः । निरयः ॥४७६॥

३२२. ऊयी तन्तुसन्ताने । ऊयते । ऊयिता । ऊयाञ्चक्रे श्वीदितो निष्ठायाम् (७।२।१४) नेट्—ऊतः ॥४७७॥

३२३. पूयी विशरणे दुर्गन्धे च । पूयन्ते[1] यवाः । व्रणः पूयते । पूयिता । पूतः, पूतिः ॥४७८॥

३२४. क्नूयी शब्दे उन्दने च । उन्दनं क्लेदनम् । क्नूयते । क्नूयिता । क्नूतः । न यः (३।२।१५२) इति युज् नास्ति, अतस्तच्छील्यादौ कर्तरि तृन् एव—क्नूयनशीलः क्नूयिता । अर्तिह्रीब्ली (७।३।३६) इति णौ पुक्—क्नोपयति । चेले क्नोपेः (३।४।३३) इति णमुल्—चेलक्नोपं वृष्टो देवः ॥४७९॥

३२५. क्ष्मायी विधूनने । क्ष्मायते । क्ष्मापयति । क्ष्मातः ॥

३२६. स्फायी ओप्यायी वृद्धौ । स्फायते । स्फायो वः (७।३।४१) इति णौ वत्वम्—स्फावयति । निष्ठायां स्फायः स्फी (६।१।२२) स्फीतः । ईदित्वं स्फायेरादेशानित्यत्वे लिङ्गम्[2]—स्फातः । उणादौ फेनः, स्फिरो बहुः । स्फायी (उ० २।१३) इति रक्—स्फारम् । प्यायते । दीपजनबुध (३।१।६१) इति कर्तरि वा चिण्—अप्यायि.

१. 'विपूयन्ते' पाठा० ।

२. अयं भावः—यदि निष्ठाया नित्यं 'स्फी' भावः स्यात्तर्हि ईदित्वमनर्थकं स्यात् । ईदित्वस्य तु 'श्वीदितो निष्ठायाम्' (७।२।१४) इति निष्ठायामिट्प्रतिषेध एव फलं, नान्यत् । तस्मादिदर्थं सञ्ज्ञापयति 'स्फी' भावोऽनित्य इति । तथा सति 'स्फानीभवति' इति प्रयोगोऽप्युपपद्यते । एवं च सति 'स्फानीभवति इत्येतदपि क्तिन्नन्तस्यैव रूपं, न निष्ठान्तस्य' इति काशिकावचनं (६।१।२७) तत् क्लिष्टकल्पनामात्रम् । धातुवृत्तिकारस्तु अनुदात्तेत्त्वार्थमीदित्करणमाह (पृष्ठ ६१) तदप्यसत्, अनुदात्तेत्त्वार्थन्त्वन्यत्रैवाद्यकारस्यानुबन्धत्वकल्पनया शक्यत्वात् ।

अप्यायिष्ट। पीनः, प्यानः। पी (६।१।२८) स्वाङ्गे[1], ओदितश्च (८।२।४५) इति निष्ठानत्वम्। अन्धूधसोराङीति वक्तव्यात् (६।१।२८ वा०) आपीनोऽन्धुः आपीनमूधः। नेह—आप्यानश्चन्द्रमाः। लिड्यङोश्च (६।१।२९) इति पी—आपिप्ये, आपेपीयते। कृत्यच (८।४।२९) इति प्राप्ते न भाभूपूकमिगमि (८।४।३४) इति णत्वं नास्ति—प्रप्यानः ॥४८१, ४८२॥

३२७. तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। तायते। अततायत्। दीपजनबुधपूरि (३।१।६१) इति कर्तरि वा चिण्—अतायि, अतायिष्ट। तप रक्षणे (१।२१६) तपते, अतीतपत् ॥४८३॥

३२८. शल चलनसंवरणयोः। शलते। शलतीति—शल हुल पत्लृ गतौ (१।५७८) तथा शल श्लल आशुगमने (१।३६७)। इण् भीकापा (उ० ३।४३) इति शल्कः। काष्ठत्वक्। शलिपटिपतिभ्यो नित् (दश० उ० ३।३१) शलाका। कृशृशलि (उ० ३।१२२) इत्यभच्—शलभः। शलिमण्डि-भ्यामूकण् (त्रु० उ० ४।४२) शालूकः। शललं शलश्च श्वाविल्लोम। सानसिवर्णसिपर्णसितण्डुलाङ्कुराचषालेल्वलधिष्ण्यशल्याः (उ० ४।१०७) इति शल्यम्। शल्यकः श्वावित् ॥४८४॥

३२९. वल संवरणे। वलते अपोद्धलितः। वालाः केशाः। वाल्मीकम्। ज्वलादौ वल प्राणने[2] (१।५०५) वलति। चुरादौ मित्त्व (१०।८०)—वलयति। शुकवल्कोल्काः (उ० ३।४२) इति वल्कः। इन् (दश० उ० १।४६)—वलिस्त्वक्सङ्कोचः। वलेर्गुश्च[3] (त्रु० उ० २।१०) इति वल्गुः। वलिमलितनिभ्यः कयन् (उ० ४।९९)—वलयः। वल्मीकं

१. स्वाङ्ग एव 'पी' भाव इति लभ्यत्र न दृष्टम्, व्यवस्थितविभाषया क्वचिल्लभ्यु शक्यते। अत्र काशिका (६।२।२८) द्रष्टव्या।

२. ज्वलादिस्थं 'वल प्राणने' धातुं दन्त्योष्ठ्यादिं मत्वेहोदाजहार क्षीरस्वामी, तदीयामरटीकायाः 'वल्यते बालः, ज्वलादित्वाण्णो वा, ज्वलिति कसन्तेभ्यो णः (३।१।१४०)' इति वचनादपीदमेव प्रतीयते। अत इहैवोत्तरत्र 'अथ दन्त्योष्ठ्यादिः, बल प्राणन इत्योष्ठ्यादिरित्याहुः' इति मतान्तरे ज्वलादिस्थमोष्ठ्यादिमाह। उज्ज्वलदत्तोऽपि 'वलेर्गुक् च' (उ० १।२०) इत्यत्र दन्त्योष्ठ्यादिवल्गुपदसिद्धये ज्वलादिस्थमुदाहृतवान्। वस्तुतस्त्वयं दन्त्योष्ठ्यादिः, ज्वलादिस्थस्त्वोष्ठ्यादिरेव।

३. 'वलेर्गुक् च' इत्येव शुद्धः पाठः।

(द्र०उ० ४।२५) पटलप्रान्तः। अयं दन्त्योष्ठ्यादिः, बल प्राणने त्वोष्ठ्यादिरित्याहुः—बलम्, बलिरूपहारः, बालः, बलाका, बल्वजः। वल वल्ल इति दुर्गः, तथोपक्रमात्। वल्लूर शुष्कमांसम्। वल्लवो गोधुक्। वल्लभः प्राणप्रियः। वल्ली, वल्लरी, वल्ला ॥४८५॥

३३०. मल मल्ल धारणे। मलते। मल्यते। माला। मालती तरुभेदः। मलम्। मलयः। मालयति। चुराद्यन्तात् मलयतीति मल्ढिः। ये-गन्धमल्लिः परिमलः[1]। मल्लते। मल्लः। मल्लक पात्रम्। मल्लिका मल्लीपुष्पम् ॥४८६, ४८७॥

३३१. भल भल्ल परिभाषणहिंसादानेषु। भलते। ऊकः—(द्र० उ० ४।४०) भलूक ऋक्षः। भल्लते उलूकादौ (द्र० उ० ४।४१) भल्लूकोऽच्छभल्लः। भल्ल. क्षुरप्रः। भल्लिः। भलन्दः। चुरादौ भल आभण्डने (१०।१४८) तङानौ[2]—विभालयते। भालूकः ॥४८८, ४८९॥

३३२. कल शब्दसंख्यानयोः। कलते। आकलते, सङ्कलते, परिकलते, प्रत्याकलते, विकलते। अच्—कलः। कल्यते-कालः, घञ्। कलनीयम्। कल्यम्। काल्यं प्रभातम्, काले साधु वा। कलितम्। कलिः। कलिका। कर्दिकडेरमच् (तु० उ० ४।८४)—कलमः। पृकलिभ्यामुपच् (दश० उ० ९।१५)—कलुषः। उणाद्रौ—कलमषम्, कल्माष। कल्योऽघ्न्यादौ (द्र०उ० ४।१११) कलासु साधुर्वा। कलायः सतीनक। कलितं व्याप्त गहनञ्च। कललं शुक्रशोणितमलम्। चुरादौ कल संख्याने (१०।२१२) अदन्त.—कलयति। कलना, कला बाहुलकात्। कल किल पिल क्षेपे (१०।६०) इत्यस्मात् कालयति, कालः, कालनम्, कालना, कालिः। कालिका तु मेघजालं, मनोज्ञादौ (द्र० गण० ५।१।१३३)॥

३३३. कल्ल अशब्दे। अशब्दे तूष्णीम्भावे[4]। कल्लते। कल्लः। कल्लोलः ॥४९१॥

---

१. अनुपजन्धमलम्। 'सुरभिमाल्यगन्धादिपरिमर्दनोत्पन्नो हृद्यो गन्ध परिमल' इति अमरटीकायां (पृष्ठ ४०) क्षीरस्वामी।

२. 'तङादौ' पाठ०। 'तङानौ' शुद्ध पाठान्तरं द्रष्टव्यम्। अत्र पूर्वा टिप्पणी (पृ० ४४ टि० ४) अवलोकनीया।    ३ 'कर्दिकड्योर०' पाठ०।

४. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १००) सिद्धान्तकौमुद्यां (भाग २ पृष्ठ १५१) च।

३३४. तेवृ देवृ देवने । तेवते, अतितेवत् । देवते, अदिदेवत् । अर्तिकमिभ्रमि (उ० ३।१३२) इत्यरः—देवरः । शकादिभ्योऽटन् उ० ४।८१) देवटः ऊर्णावृत्तिः । वृषादिभ्यश्चित् ( उ० १।१०८ ) देवल । दिवादौ (४१) दीव्यति । चुरादौ दिवु परिकूजने (१०।१५३)—देवयते, आकुस्मात् (१०।१२३) तङ्, अदीदिवत, तथा दिवु मर्दने ( १०।१७० ) परिदेवयति ॥४९२, ४९३॥

३३५. षेवृ[1] गेवृ पेवृ सेवृ केवृ खेवृ ग्लेवृ पेवृ प्लेवृ मेवृ म्लेवृ सेवने । सेवते, सिषेवे, असिषेवत् । अषोपदेशत्व सिसेवे, असिसेवत् । परिनिविभ्य सेव (८।३।७०) इति षत्वम्—निषेवते । सद्व्यवायेऽपि (८।३।७१) इति पर्यषेवत । स्तौतिण्योरेव षण्यभ्यासात् ( ८।३।६१ ) इति नियमे प्राप्ते स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) इति षत्वम्—निषिषेविषते । केवते, उणादौ युक्तम्[2], वृषादिभ्यश्चित् (उ० १।१०८) इति कलच्—केवल ॥४९४–५०४॥

३३६. रेवृ प्लुतिगतौ । प्लुतिभिर्गतौ । रेवते । रेवा नर्मदा । रेवती तु रीडो (४।२८) रूपम् ॥५०५॥

३३७. उदात्ता अनुदात्तेतः ।

---

[ अथ सेटः परस्मैपदिनः ]

३३८. मव्य बन्धने । इतोऽवान्ता (१।३९२) अष्टाशीतिः सेटः परस्मैपदिनश्च । मव्यति । मव्य.[3] ॥५०६॥

३३९. सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः । ईर्ष्या कामजमसहनम्[4] । क्रुधद्रुहेर्ष्या (१।४।३७) इति सम्प्रदानम्—चैत्रायेर्ष्यति । ईर्ष्यतेस्तृतीयस्य

---

१ 'षवृ' इति सर्वकोशेषु पाठः । 'गेवृ' इति तु युक्त पाठ , स्यात् ।

२. अस्पष्टार्थोऽयम् । कदाचिदत्र 'केवृ धातु केवलशब्द एव प्रयुज्यते, स चौणादिक , ततश्चाय धातुरौणादिक एव, इत्यभिप्राय स्यात् ।

३. 'मव्य ' क्वचित् । ४. 'असहिष्णुत्वम्' पाठा० ।

(६।१।२ वा) एकाचो द्विर्वचनम्—ईर्ष्यियिषति। व्यञ्जनस्य इत्येके[1]—ईर्ष्यियियिषति। ण्यन्ताच्चङि तृतीयैकाचोऽभावाद् द्वितीयस्यैव द्वित्वम्, तृतीयाभावेन वार्तिकाप्रवृत्तेः, ततश्च हलादिःशेषाद् (द्र० ७।४।६०) अभ्यासे यकार एव श्रूयते—ऐर्षिष्यत्। व्यञ्जनस्येति पक्षे यकारस्यैव द्वित्वम्—ऐर्ष्यियत् ॥५०८-५०९॥

३४०. हय गतिकान्त्योः। हयति। हयः ॥५१०॥

३४१. शुच्यी अभिषवे। अभिषवो ऽवक्लेदनाद्‌यणम्, परिवासनम्। स्नानमिति चान्द्राः[2]। शुच्यति। लिट्—शुशुच्य। शुक्तः[3]—यस्य हलः (६।४।४९) इति यलोपः। शुच्यो[4] इति दुर्गः ॥५११॥

३४२. हर्य गतिकान्त्योः। हर्यति। हर्यतः कन्यन् हिर च (उ० ५।४४) हिरण्यम् ॥५१२॥

३४३. अलँ[5] भूषणपर्याप्तिनिवारणेषु। पर्यातियत्र सानुनासिक इतीत्संज्ञार्थः। अलति। अलकापुरी। अलकाः केशाः, मथुन् शिल्पिसंज्ञयोः (उ० २।३२)। अलिन्दः। अलिकं ललाटम्। अलीकम्। अलिर्भ्रमरः, आलिश्च। आलिः सखी, पङ्क्तिश्च। अलर्को योगिभः श्वा। अलकाकम् अलकाकन्तु रलयोरैक्यात्[6] ॥५१३॥

३४४. ञिफला विशरणे। फलति, प्रतिफलति, उत्फलति। तृफलभजत्रपश्च (६।४।१२२) इति लिट्येत्वाभ्यासलोपौ—फेलुः।

---

१. 'ईर्ष्यतेस्तृतीयस्य द्वे भवतः' इति वार्तिकव्याख्याने 'कश्चिदाह—एवमपि—ईर्ष्यियिषति। अपर आह व्यञ्जनस्येति—ईर्ष्यियियिषति' इति माधव(७।१।१)॥

२. चान्द्रधातुपाठव्याख्याने पूर्णचन्द्र:—'षु अभिषवः स्नानं क्लेदः' (द्र० चान्द्र धातुपाठ २४ टिप्पणी)।

फलकं—फलर् शिल्पिसंघयोः (उ० २।१३२)। फलहकस्तृणादौ। चरफलोश्च, उपरस्यातः (७।४।८७-८८) चम्फुल्यते। ति च (७।४।८९) वर्तमाने श्रीतः क्तः (३।२।१८७) प्रफुल्तः। अनुपसर्गात् फुल्लक्षीव (८।२।५५ वा०) इति के फुल्लः साधुः। उत्फुल्लसम्फुल्लौ वक्तव्यात् (द्र० ८।२।५५ वा०) उपसर्गे प्रफुल्लः, यादितश्च (७।२।१६) इतीण् नास्ति। विभाषा भावादिकर्मणोः (७।२।१७) फुल्लमनेन फलितमनेन, प्रफुल्लः प्रफलितः। फलिपाटि (उ० १।१८) इति फल्गुरसारः[1]। फल्गुनी। फल निष्पत्तौ (१।३५) इत्यस्मात् फलिनः। फुल्ल विकसने (१।३।५७) फुल्लितः ॥५१४॥

३४५. मील ४मील निमेषणे। निमेषणं सङ्कोचः। मीलति। प्रमीला तन्द्री। मीलनम्। भ्राजभास[भाष][2]दीप (७।४।३) इत्युपधाह्रस्वो वा—अमिमीलत् अमीमिलत्। लौकिकात्[3] मिलेः—मिलति, मेलनम्। श्मील स्थाने स्मीलेति चान्द्राः(चा० धा० १।१६२)॥५१५,५१६॥

३४६. पील प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्[4]। पीलति। पीलनम्। क्त्वा—नेड् वशि कृति (७।२।८)—पिपील्यात्। खरशाद्कु (उ० १।३७) इति बाहुलकात् पीलुः[5]। पिपीलकः, पिपीलिका ॥५१७॥

३४७. णील वर्णे। वर्णोपलक्षितायाम् क्रियायाम्। यथा—श्वेत नीलति मरकतकान्त्या[6]। प्रणीलति। नीलम्, नीली, नीलः[7], नीलङ्गुः क्रिमिः ॥५१८॥

---

१. 'फल्गु असारम्' पाठा०।    २. द्रष्टव्यः १।३७५ धातुसूत्रे।

३. सायणादयस्तुदादौ 'मिल श्लेषणे' इति पठन्ति। क्षीरस्वामी तु 'हिल हावकरणे' (६।६७) सूत्रव्याख्याने दुर्गमतेन मिल धातु पठति, न स्वमतेन। अत एवात्र लौकिकात्—लोकप्रसिद्धात् तु शास्त्रपठितात् इति विशेषणमुपादत्ते।

४. 'रोधः' पाठा०।

५. पीलुः हस्ती (काश० धातु० कन्नडटीका पृष्ठ ५५) तदस्यास्तीति पीलुवान् हस्तिपकः। तस्यैव 'पीलवान्' इत्यपभ्रंशः। पीलुरिति हस्त्यर्थे म्लेच्छप्रसिद्ध इति कुमारिलभट्टः (तन्त्रवार्तिक १।३।९)। मीमांसाशास्त्रीयार्यम्लेच्छप्रसिद्धार्थाधिकरणविषये विशेषविचारः 'संस्कृत व्याकरण शास्त्र का इतिहास' इत्यत्र द्र०(पृष्ठ २६)।

६. अनुपलब्धमूलम्।    ७. 'नील कुट्टिमः' पाठा०।

(६।१।२ वा) यकाचो द्विर्वचनम्—ईर्ष्यियिषति । व्यञ्जनस्य इत्येके[1]—ईर्ष्यियिषति । ण्यन्ताच्चङि तृतीयैकाचोऽभावाद् द्वितीयस्यैव द्वित्वम्, तृतीयाभावेन वार्तिकाप्रवृत्तेः, ततश्च हलादिशेषाद् (द्र० ७।४।६०) अभ्यासे यकार एव श्रूयते—ऐर्षिष्यत् । व्यञ्जनस्येति पक्षे यकारस्यैव द्वित्वम्—ऐर्ष्यियत् ॥५०८-५०९॥

३४०. हय गतिकान्त्योः । हयति । हयः ॥५१०॥

३४१. शुच्यी अभिषवे । अभिषवो द्रवेणाद्रयणम्, परिवासनम् । स्नानमिति चान्द्राः[2] । शुच्यति । लिट्—शुशुच्य । शुक्तः[3]—यस्य हलः (६।४।४९) इति यलोपः । चुच्यी[4] इति दुर्गः ॥५११॥

३४२. हर्य गतिकान्त्योः । हर्यति । हर्यतः कन्यन् हिर च (उ० ५।४४) हिरण्यम् ॥५१२॥

३४३. अलॅ[5] भूषणपर्याप्तिनिवारणेषु । पचतिवत् सानुनासिक इतीत्संज्ञार्थः । अलति । अलकापुरी । अलकाः केशाः, वुन् शिल्पिसंज्ञयोः (उ० २।३२) । अलिन्दः । अलिकं ललाटम् । अलीलम् । अलिर्भ्रमरः, आलिश्च । आलिः सखी, पङ्क्तिश्च । अलर्को रोगितश्वा । अलक्तकम् अरक्तकन्तु रलयोरैक्यात्[6] ॥५१३॥

३४४. ञिफला विशरणे । फलति, प्रतिफलति, उत्फलति । तृफलभजत्रप[श्च] (६।४।१२२) इति लिट्येत्वाभ्यासलोपौ—फेलु ।

१. 'ईर्ष्यतेस्तृतीयस्य द्वे भवतः' इति वार्तिकव्याख्याने 'कश्चिदाह—एवाप इति—ईर्ष्यिषिषति । अपर आह व्यञ्जनस्येति—ईर्ष्यियिषति' इति भाष्यम् (७।१।३) ॥

२. चान्द्रधातुपाठव्याख्याने पूर्णचन्द्र —'अभिषवः स्नानविशेषः' (द्र० चान्द्र धातुपाठ पृष्ठ ६ टिप्पणी) ।

३ श्वीदितो निष्ठायाम् (७।२।१४) इतीण्निषेधः, सायणस्तु 'शुच्य' इति पठित्वा 'शुच्यित' इत्युदाहरति (धा० वृ० पृष्ठ १०३) ।

४. ईदित्वान्निष्ठाया चुक्तः । अनीदित्वे चुच्यित । काशकृत्स्नीये धातुपाठे तूभयोरीदित्व दृश्यते (पृष्ठ ४२) ।

५. 'अल' इति सायणादय. । आदित्त्वे 'आदितश्च' (७।२।१६) इतीण्निषेधे 'अल्त' । सायणादि मते 'अलित.' इति भेदः । ६. 'एकत्वात्' पाठा० ।

फलकं—क्वुन् शिल्पिसंज्ञयोः (उ० २।१३२)। फलहकस्तृणादौ। चरफलोश्च, उत्परस्यातः (७।४।८७-८८) पम्फुल्यते। ति च (७।४।८९) वर्तमाने ञीतः क्तः (३।२।१८७) प्रफुल्ल। अनुपसर्गात् फुल्लक्षीब (८।२।५५ वा०) इति क्ते फुल्लः साधुः। उत्फुल्लसम्फुल्लौ वक्तव्यात् (द्र० ८।२।५५ वा०) उपसर्गे प्रफुल्लः, आदितश्च (७।२।१६) इतीण् नास्ति। विभाषा भावादिकर्मणोः (७।२।१७) फुल्लमनेन फलितमनेन, प्रफुल्लः प्रफलितः। फलिपाटि (उ० १।१६) इति फल्गुरसारः[1]। फल्गुनी। फल निष्पत्तौ (१।३५) इत्यस्मात् फलितः। फुल्ल विकसने (१।३।५७) फुल्लितः ॥५१४॥

३४५. मील श्मील निमेषणे। निमेषणं सङ्कोचः। मीलति। प्रमीला तन्द्री। मीलनम्। भ्राजभास[भाष][2]दीप (७।४।३) इत्युपधाह्रस्वो वा—अमिमीलत् अमीमिलत्। लौकिकात्[3] मिलेः—मिलति, मेलनम्। श्मील स्थाने क्ष्मीलेति चान्द्राः (चा० धा० १।१६२) ॥५१५,५१६॥

३४६. पील प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्[4]। पीलति। पीलनम्। क्तसु—नेड् वशि कृति (७।२।८)—पिपील्वान्। खरुशङ्कु (उ० १।३७) इति बाहुलकात् पीलुः[5]। पिपीलकः, पिपीलिका ॥५१७॥

३४७. णील वर्णे। वर्णोपलक्षितायाम् क्रियायाम्। यथा—श्वेत नीलति मरकतकान्त्या[6]। प्रणीलति। नीलम्, नीली, नीलः[7], नीलङ्गुः क्रिमिः ॥५१८॥

---

१. फल्गु असारम्' पाठा०। २. द्रष्टव्यः १।३७५ धातुसूत्रे।

३. सायणादयस्तुदादौ 'मिल श्लेषणे' इति पठन्ति। क्षीरस्वामी तु 'हिल हावकरणे' (६।६७) सूत्रव्याख्याने दुर्गमतेन मिल धातु पठति, न स्वमतेन। अत एवात्र लौकिकात्=लोकप्रसिद्धात् न तु शास्त्रपठितात् इति विशेषणमुपादत्ते।

४ 'रोधः' पाठा०।

५. पीलु हस्ती (काश० धातु० कन्नडटीका पृष्ठ ५५) तदस्यास्तीति पीलुवान् हस्तिपकः। तस्यैव 'पीलवान्' इत्यपभ्रंशः। पीलुरिति हस्त्यर्थे म्लेच्छप्रसिद्ध इति कुमारिलभट्टः (तन्त्रवार्तिक १।३।९)। मीमांसाशास्त्रीयार्यम्लेच्छप्रसिद्धार्थाधिकरणविषये विशेषविचारः 'संस्कृत व्याकरण शास्त्र का इतिहास' इत्यत्र द्र०(पृष्ठ ३६)।

६. अनुपलब्धमूलम्। ७. 'नील कुट्टिम.' पाठा०।

(६।१।३ वा) यकाचो द्विर्वचनम्—ईर्ष्यियिषति । व्यञ्जनस्य इत्येके[1]—ईर्ष्यिषिषति । ण्यन्ताच्चङि तृतीयैकाचोऽभावाद् द्वितीयस्यैव द्वित्वम्, तृतीयाभावेन वार्तिकाप्रवृत्तेः, ततश्च हलादिःशेषाद् (द्र० ७।४।६०) अभ्यासे यकार एव श्रूयते—ऐर्षियिषत् । व्यञ्जनस्येति पक्षे षकारस्यैव द्वित्वम्—ऐर्ष्यिषत् ॥५०७-५०९॥

३४०. हय गतिकान्त्योः । हयति । हयः ॥५१०॥

३४१. शुच्यी अभिषवे । अभिषवो ऽन्धेनाद्रवणम्, परिवासनम् । स्नानमिति चान्द्राः[2] । शुच्यति । लिट्—शुशुच्य । शुक्तः[3]—यस्य हलः (६।४।४९) इति यलोपः । शुच्यो[4] इति दुर्गः ॥५११॥

३४२. हर्य गतिकान्त्योः । हर्यति । हर्यतः कयन् हिर च (उ० ५।४४) हिरण्यम् ॥५१२॥

३४३. अलँ[5] भूषणपर्याप्तिनिवारणेषु । पचतिवत् स्यात्तु-नासिक इतीत्संज्ञार्थः । अलति । अलकापुरी । अलकाः केशाः, वुन् शिल्पिसंज्ञयोः (उ० २।३२) । अलिन्दः । अलिकं ललाटम् । अलीकम् । अलिर्भ्रमरः, आलिश्च । आलिः सखी, पङ्क्तिश्च । अलर्को रोगितः श्वा । अलक्तकम् अरक्तकन्तु रलयोरैक्याव्[6] ॥५१३॥

३४४. ञिफला विशरणे । फलति, प्रतिफलति, उत्फलति । तृफलभजत्रप[श्च] (६।४।१२२) इति लिट्येत्वाभ्यासलोपौ—फेलुः ।

---

१. 'ईर्ष्यतेस्तृतीयस्य द्वे भवतः' इति वार्तिकव्याख्याने 'कश्चिदाह—एवाच इति—ईर्ष्यियिषति । अपर आह व्यञ्जनस्येति—ईर्ष्यिषिषति' इति भाष्यम्(७।१।३) ॥

२. चान्द्रधातुपाठव्याख्याने पूर्णचन्द्र—'अभिषवः स्नानविशेषः' (द्र० चान्द्र धातुपाठ पृष्ठ ६ टिप्पणी) ।

३. श्वीदितो निष्ठायाम् (७।२।१४) इतीण्निषेधः, सायणस्तु 'शुच्य' इति पठित्वा 'शुच्यित' इत्युदाहरति (धा० वृ० पृष्ठ १०३) ।

४. ओदित्ताभिप्रायो युक्तः । यतोऽदित्वे शुच्यित । काशकृत्स्नीये धातुपाठे शुभर्दीदिन दृश्यते (पृष्ठ ४२) ।

५. 'अल' इति सायणादयः । आदित्त्वे 'आदितश्च' (७।२।१६) इतीण्नि-षेधे 'अल्त.' । सायणादि मते 'अलित' इति भेदः । ६. 'एकत्वात्' पाठा० ।

फलकं—क्वुन् शिल्पिसंज्ञयोः (उ० २।१३२)। फलहकस्तूणादौ। चरफलोश्च, उत्परस्यातः (७।४।८७-८८) पम्फुल्यते। ति च (७।४।८९) वर्तमाने क्तः (३।२।१८७) प्रफुल्लः। अनुपसर्गात् फुल्लक्षीव (८।२।५५ वा०) इति क्ते फुल्लः साधुः। उत्फुल्लसम्फुल्लौ वक्तव्यात् (द्र० ८।२।५५ वा०) उपसर्गे प्रफुल्तः, यादितश्च (७।२।१६) इतीण् नास्ति। विभाषा भावादिकर्मणोः (७।२।१७) फुल्लमनेन फलितमनेन, प्रफुल्लः प्रफलितः। फलिपाटि (उ० १।१८) इति फल्गुरसारः[1]। फल्गुनी। फल निष्पत्तौ (१।३५) इत्यस्मात् फलितः। फुल्ल विकसने (१।३।५७) फुल्लितः ॥५१४॥

३४५. मील श्मील निमेषणे। निमेषणं सङ्कोचः। मीलति। प्रमीला तन्द्री। मीलनम्। भ्राजभास[भाष][2]दीप (७।४।३) इत्युपधाह्रस्वो वा—अमिमीलत् अमीमिलत्। लौकिकात्[3] मिलेः—मिलति, मेलनम्। श्मील स्थाने क्ष्मीलेति चान्द्राः (चा० धा० १।१६२)॥५१५,५१६॥

३४६. पील प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्[4]। पीलति। पीलनम्। क्तसु—नेड् वशि कृति (७।२।८)—पिपील्वान्। खरशाङ्कु (उ० १।३७) इति बाहुलकात् पीलुः[5]। पिपीलकः, पिपीलिका ॥५१७॥

३४७. णील वर्णे। वर्णोपलक्षितायाम् क्रियायाम्। यथा—श्वेत नीलति मरकतकान्त्या[6]। प्रणीलति। नीलम्, नीली, नीलः[7], नीलङ्गुः क्रिमिः ॥५१८॥

---

1. फल्गु असारम्' पाठा०। 2. द्रष्टव्यः १।३७५ धातुसूत्रे।

3. सायणादयस्तुदादौ 'मिल श्लषणे' इति पठन्ति। क्षीरस्वामी 'हिल हावकरणे' (६।६७) सूत्रव्याख्याने दुर्गमतेन मिल धातु पठति, न स्वमतेन। अत एवात्र लौकिकात्=लोकप्रसिद्धात् तु शास्त्रपठिताद् इति विशेषणमुपादत्ते।

4. 'रोधः' पाठा०।

5. पीलु' हस्ती (काश० धातु० कृष्णटीका पृष्ठ ५५) तदस्यास्तीति पीलुवान् हस्तिपकः। तस्यैव 'पीलवान्' इत्यपभ्रंशः। पीलुरिति हस्त्यर्थे म्लेच्छप्रसिद्ध इति कुमारिलभट्टः (तन्त्रवार्तिक १।३।९)। मीमांसाशास्त्रीयार्यम्लेच्छप्रसिद्धार्थाधिकरणविषये विशेषविचारः 'संस्कृत व्याकरण शास्त्र का इतिहास' इत्यत्र द्र० (पृष्ठ ३६)।

6. अनुपलब्धमूलम्। 7. 'नील कुट्टिमः' पाठा०।

३४८. शील समाधौ । समाधिरैकाग्र्यम् । परिशीलति । अनुशीलितः । शीलिकामि (३।२।१ वा०) इति णः—मांसशीलः । शैलूषो नटः, बाहुलकात् । शिलूषापत्यमित्येके । चुरादौ (१०।२६३) शीलयति ॥५१९॥

३४९. कील बन्धे । कीलति । उत्कीलितः । कीलकः । कीला[1] । कीलालम् । कीलिर्धात्वर्थे[2] । णिच्—कीलयति ॥५२०॥

३५०. कूल आवरणे ।[3] अनुकूलति । कूल्यतेऽम्भसा कूलम् । कुल संस्त्याने (१।५७०) अस्मात् कुलम् । करोतेर्ह्रं च (तु० ६।१।१२ वा०) इति चकारात्—कुकूलं तुषाग्निः ॥५२१॥

३५१. शूल रुजायाम् । शूलति । अच्—शूलम् ॥५२२॥

३५२. तूल निष्कर्षे । निष्कर्षो वस्तुनिःसारणम् । तूलति । तूलं तूलिस्तूलराश्या, शाखायान्तु 'तूलिका'[4] ॥५२३॥

३५३. पूल संघाते । पूलति । पूलः । पूलो तृणोच्चयः ॥५२४॥

३५४. मूल प्रतिष्ठायाम् । मूलति । मूलम् । उन्मूलयति क्लेशान् । उन्मूलितः । चुरादौ मूल रोहणे (१०।५१) मूलयति ॥५२५॥

३५५. फल निष्पत्तौ । निष्पत्तिः सिद्धिः । फलति । फलितः । ञिफला (१।३४५) इत्यस्य फुल्लः[5] फलम् । फलेरितजादेश्च पः (उ० ५।१४)—पलितम् ॥५२६॥

३५६. चुल्ल हावकरणे[6] । अभिप्रायसूचनेऽर्थे । चुल्लति । चुल्लि.[7] ॥५२७॥

३५७. फुल्ल विकसने । फुल्लति । फुल्लम् । फुल्लितम् ॥५२८॥

३५८. चिल्ल शैथिल्ये । चिल्लति । चिल्लितः । चिल्ल.[8] पक्षी ॥
३५९. तिल्ल गतौ । तिल्लति । तिल इत्यपि दुर्गः तेलति ॥५३०,५३१॥

---

१. पशुबन्धनीरज्जुर्यस्यां निबध्यते, 'कीला खूंटा' इत्येवं प्रसिद्धः ।
२. कीलिर्बन्धनमित्यर्थः । ३. 'संवरणे' पाठा० । ४. अनुपलब्धमूलम् ।
५. 'फुल्लः' पाठा० । ६. चुल्ल चुल्ल भावकरणे पाठान्तरमिति च इति पाठान्तरः । ७. चुल्लि. 'चूल्हा' इति प्रसिद्धः । ८. 'चील' इति प्रसिद्धः ।

३६०. चेल्ऌ चेलृ केलृ खेलृ क्ष्वेलृ[1] चलने । वेल्लेर्द्वितीयो लकारः—वेल्लति । वेल्लितः । अविवेल्लत् । वेला तु वेल कालोपदेशे (१०।२६५) इत्यस्मात् । चेलति । पापचेली । चेला चिल वसने (६।६१) इत्यस्मात् । केलति । केलिः । केलितम् । कील बन्धे (१।३४९) अस्मात् कीलः, कीलकम्, कीलितम् । खेलति । खेल्यतेऽत्रेति खेलम्[2] । खेलतीति खेला खुरलिः । खिलम्, पृषोदरादित्वात् (द्र० ६।३।१०९) । क्ष्वेलति । क्ष्वेला ॥५३२-५३६॥

३६१. पेलृ फेलृ शेलृ[3] गतौ । पेलति । पेलितम् । अपिपेलत् । पेलं वृषण. । पेलवं तनु । पेलकस्त्वश्वगन्धः । फेलति । फेला भुक्तोज्झितम् । के (उ० ३।१।१३५) फेलः फलः । शेलति, अशिशेलत्[4] ॥

३६२. स्खल चलने । स्खलति । स्खलितम् ॥५४०॥

३६३. खल सञ्चये च । चकाराच्चलने । खलं भगः पदश्च (३।३।१२५ वा०) इति घकव्यात् घः । अच्—खलः । खलिः पिण्याकः[5] । खलितः खल्वाटः । खल्वं गभीरम् । खलीनमश्वमुखाभरणम् ॥५४१॥

३६४. गल अदने । गलति । गलः । स्रवणेऽपि अनेकार्थत्वात् । उणादौ गलुः[7] कपोलादिः, गल्वर्कः[8] स्फटिकः[9] । गलेश्च (दश० ७।१४) इति गुल्फः । चुरादौ गल स्रवणे (१०।१४७) तङि— उद्गालयते ॥५४२॥

३६५. सल गतौ । सलति । सलिलम् । सालः ॥५४३॥

३६६. दल विशरणे । दलति । उविकुटिदलिकचिखजिभ्यः कपन् (उ० ३।१४२) दलपः । दलम् । मित्त्वाद् (धा० सू० १।५५२ व्याख्याने) दलयति । चुरादौ (१०।१७६) दालयति ॥५४४॥

---

१. 'केतृ' पाठा०। २. 'घञन्तः' (लिङ्गा० पुंलिङ्ग २) इत्यस्य प्रायिकत्वान्नपुंसकत्वम् । यथा 'सम्बन्धमनुवर्तिष्यते' (महा० १।२।१) इति । ३. 'सेलृ' पाठा० ।
४. 'सेलति । असिसेलत्' पाठा० । ५. 'खली' इति भाषाया प्रसिद्धम् ।
६. कल्पि । ७. 'गाल' इति भाषाया प्रसिद्धम् ।
८. 'गलुर्कः' पाठा० । ९. 'स्फटिका' पाठा० ।

३६७. शल श्वल्ल आशुगमने । शलति । अतो ल्रान्तस्य (७।२।२) इति वृद्धिः—अशालीत् । उणादौ (द्र० उ० ४।९५) शुल्वं ताम्रं रज्जुश्च । शुल्कम्[1] ॥५४५, ५४६॥

३६८. खोर्ऋ खोलृ गतिप्रतिघाते । खोरति । खोरा अधमा स्त्री । खोरिका पात्री । खोरः[2] खञ्जः । खोडृ इति दुर्गः—खोडः कुणिः । खोलं शिरस्त्रम् ॥५४७, ५४८॥

३६९. धोर्ऋ गतिचातुर्ये । धोरति । अदुधोरत् । आधोरणो हस्तिपकः[3] । धोरितम् । धोरितकम् अश्वगतौ ॥५४९॥

३७०. त्सर छद्मगतौ । छद्मप्रकारार्थे । त्सरति । शृस्वृ (उ० १।७) इत्युः—त्सरुः खड्गादिमुष्टिः । तद्मस इत्यपीति कौशिक—त्सद्मति ॥५५०॥

३७१. अभ्र वभ्र मभ्र चर गत्यर्थाः । अभ्रति । अभ्रम् । वभ्रति । क्रमो द्वे च[4] क्रुर्मश्च (तु० उ० १।२२,२३) इति वभ्रर्नकुलः । मभ्रति । चरति ॥ ३७२. चरिर्भक्षणेऽपि । उदश्चरः सकर्मकात् (१।३।५३) इति तङ्—गेहमुच्चरते उल्लङ्घयतीत्यर्थः[5], नेह—उच्चरति ध्वनिः । समस्तृतीयायुक्तात् (१।३।५४) अश्वेन सञ्चरते । चरफलोश्च, उत् परस्यातः (७।४।८७ ८८) चञ्चूर्यते, चञ्चुरः । ति च (७।४।८९) चूर्तिः । चरितम् । गदमदचरयमश्चानुपसर्गे (३।१।१००) यत्—चर्यम् । चरेराङि चागुरौ (३।१।१०० वा०) आचर्य उपदेशः, आचार्यो गुरुः । आश्चर्यमनित्ये (६।१।१४७) साधु । पचादौ (गण० ३।१।१३४) चरः[6] । पटच्चरश्चौरः पटंश्चरतीति, पाटच्चरतीति पाटच्चरो[7] वा । पटच्चरं जीर्णवस्त्रम्, पट इवाचरद् भूतपूर्वम् । प्रज्ञादौ (गण० ५।४।३८) चारः । कृवुन् शिल्पिसंज्ञयोः (उ० २।३२) चरकः

१. 'शुल्क' क्वचित् । २. राजस्थानभाषायाम् 'खोड़ा' इति प्रयुज्यते । ३. 'आधोरणः करिपकः' पाठ० । ४. 'क्रमेर्द्वे च' पाठ० । ५. 'तङन्तो—गेहमुच्चरते लङ्घयतीत्यर्थः, गेहमुच्चरमाण.' इति पाठ० । अत्र 'तङन्तो' इत्यस्य स्थाने 'तङन्तौ' युक्तः पाठः । ६ 'चरट्' पाठ० । ७. पटच्चरः पाटच्चर इत्युभयत्र तुक् क्वमिति नोतम् ।

मुनिः । चरेष्टः (३।२।१६) कुरुचरः, कुरुचरी । भिक्षासेनादायेषु च (३।२।१७) इति टः—भिक्षाचरः, सेनाचरः, आदायचरः । अलङ्कृञ्निराकृञ् (३।२।१३६) इतीष्णुच्—चरिष्णुः । गोचरसंचर (३।३।११९) इति घो साधू । इच्छा (३।३।१०१) इत्यत्र परिचर्या साधुः[1] । लोकात् चर्या[2]—परिव्राजकादीनां ध्यानाद्युपाये स्थितिः । युच्—(द्र० ३।२।१४८) चरणः । ल्युट् (द्र० ३।३।११५)—चरणम् । अर्तिलूधूसूखनसहचर इत्रः (३।२।१८४) चरित्रम् । चरेर्वृत्ते (उ० ४।१७१) णित्रन्—चारित्रम् । खनिकष्यज्यसि (उ० ४।१३१) इती—चरिः प्राकाराग्रम् । इण्—चारिः । दृसनिजनि (उ० १।३)—इत्युण्—चारुः । भृमृशीतॄचरि (द्र० उ० १।७) इत्युः—चरुर्हव्यपाकः । चरेश्च (उ० ५।६६) इत्यमच्—चरमः । क्तिन्—(द्र० ३।३।९४) चूर्तिः, प्रह्वाचूर्तिः । चरितं चर्म (द्र० ३।३।२ काशिका) ॥५५१-५५४॥

३७३. ष्ठिवु निरसने । न क्ष्मायुष्ठिवुष्वष्कीनाम् (द्र० ६।१।६४ वा०) इति धात्वादेः षः सो नास्ति, ष्ठिवुक्लम्वाचमां शिति (द्र० ७।३।७५) इति दीर्घः—ष्ठीवति । ल्युटि वा गुणः[3]—ष्ठेवनम्, ष्ठीवनम् । ष्ठ्यूत्वा, ष्ठीवित्वा । टिष्ठेव । षकारात् परस्सकारोऽयमित्येके[4] तिष्ठेव ॥५५५॥

३७४. जि जये । जयोऽभ्युत्कर्षः । जयति । विपराभ्यां जेः (१।३।१९) इति तङानौ—विजयते, पराजयते । लक्ष्येऽनिट्कोऽयम्[5]—जेता ।

१. इच्छासूत्रस्थे 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इति वार्तिके निपातनात् साधुरित्यर्थः ।

२. केवलः चर्याशब्दो लोके ध्यानाद्युपाये स्थित्यर्थे च प्रयुज्यते । स च 'गदमदचर' (३।१।१००) इत्यादिना व्युत्पाद्यते (द्र० क्षीर० अमरटीका २।७।३५) ।

३. अन्यत्र तु 'ष्ठिवुसिवोर्दीर्घश्च' (।३।९८) इत्यनेन दीर्घस्य शास्ति, चाद् यथाप्राप्तं गुणं च ।

४. द्रष्टव्या काशिका ६।१।६४ ॥

५ उदात्तेषु पाठात् सेट् प्रतीयते, लोके त्वनिट् रूपेण प्रयुज्यत इत्यर्थः । यथा विद ज्ञाने (२।५७) इत्यस्य उदात्तेषु पाठात् वेदिता, भारस्य वेत्ता न तु वदनस्य इति 'वेत्तासि वेद्यं च' (गीता ११।३८) इति च प्रयोगदर्शनात् सेट्त्वमनिट्त्वं चोभयमपि साधु । तथैव उदात्तेषु जयतेः पाठात् सेट्त्वम्—जयिता, लोके 'जेता' प्रयोगदर्शनात् अनिट्त्वं चोभयमपि द्रष्टव्यम् इति त्वस्य मतम् ।

अत एव कौशिकोऽमुं नाध्यैष्ट, ञि जि अभिभवे (१।६७१) इत्यनेनैव सिद्धत्वात् । तत्र, अकर्मकसकर्मकत्वार्थमु[1]भयोरुपादानम् । कृवापाजि (उ० १।१) इत्युण्—जायुरौषधम् । जैत्रम् जेतुरिदम् ॥५५६॥

३७५. जीव प्राणधारणे । जीवति जीवः । भ्राजभासभाषदीप जीव (७।४।३) इति वा ह्रस्वः—अजिजीवत्, अजीजिवत् । यावति विन्दजीवोः (३।४।३०) इति णमुल्—यावज्जीवमग्निहोत्रं जुहुयात् । जीवकः पक्षी । जीवंजीवः पक्षिविशेषः[2] । जीवेरातु (उ० १।८०) जीवातुर्जीवनौषधम् । जीवितम् । जीवेरात्रकन् वृद्धिश्च (उ० १।८१) जैवातृकश्चन्द्रः । जीवनस्य मूतो जीमूतः[3] । जीविका संज्ञायाम् (द्र० ३।३।१०९) ॥५५७॥

३७६. पीव मीव नीव[4] तीव स्थौल्ये । पीवति, पीवः पुष्टः । छित्वरच्छत्वर (उ० ३।१) इति पीवरः । नीविः, नीवी मूलधनम् । तीवरम् । तीव्रम् ॥५५८–५६१॥

३७७. क्षीव निरसने । क्षीवति । क्षीवितः । अचिक्षीवत् । क्षीबृ मदे (१।२६८) अस्मात् क्षीयते क्षीबः[5], अचिक्षीवत् । ष्ठिवु इति चन्द्रः (चा० धा० १।१९१) क्षेवति, ष्ठ्यूत्वा ष्ठेविता । दिवादौ[7] ष्ठीव्यति ॥५६२॥

३७८. उर्वी तुर्वी दुर्वी धुर्वी हिंसार्थाः[8] । ऊर्वति । ऊः, ऊर्णः । तूः, तूर्णः । दूः, दूर्णः, दूर्वा । धूः, धूर्णः । हसिमृग्रिण (उ० ३।८६)

१. यदा उत्कर्षवाची तदाकर्मकः, यदा तु परिभववाची तदा सकर्मकः । यत एवोभयोः पृथक् पाठ आवश्यक इति भावः ।

२. 'जीवजीवकश्चकोरः' पाठः ।

३. 'जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः' इत्यमरटीकायां (पृष्ठ २४) क्षीरः । मेघ इत्यर्थः ।

४. सर्वकोशेषु पाठः, णत्वाभावश्चिन्त्यः ।

५. दन्त्योष्ठ्यान्तेषु श्चो'ऽन्त्यान्तस्य निर्देशश्चिन्त्यः ।

६. काशकृत्स्नधातुपाठेऽपि 'ष्ठिवु' इत्येव पठ्यते (पृष्ठ ५८) ।

७. दिवादौ क्षीरस्वामी न पठति । चान्द्रधातुपाठे (४।४) तूपलभ्यते । अत्र १।२६८ सूत्रस्था (पृष्ठ ६२) टिप्पणी (२) द्रष्टव्या । ८. 'हिंसायाम्' पाठः ।

इति तत्—धूर्तः । धुर्वी इति चन्द्रः (चा० धा० १।१९६) । जुर्वी इति दौर्गाः जूर्वति । जूः । जूर्णः ॥५६३–५६६॥

३७९. गुर्वी उद्यमे । गूर्वति । गूः । उद्गूर्णः । चुरादौ गुरी उद्यमे (१०।१४३) आगूरयते ॥५६७॥

३८०. मुर्वी बन्धने । मूर्वति । मूर्वा तृणम्, यद्विकारो मौर्वी । मूः । मूर्णः ॥५६८॥

३८१. पुर्व पर्व मर्व पूरणे । पूर्वति । पूर्वः । पर्वति, पर्वतः ॥ ५६९–५७१॥

३८२. चर्व अदने । चर्वति । चर्वितः । चार्वाकः । चुरादौ[1] चर्वयति । चर्व भर्व इत्योष्ठ्यान्त्यौ[2] ॥५७२॥

३८३. भर्व हिंसायाम् । भर्वति । भर्वः ॥५७३॥

३८४. गर्व खर्व । "चर्वादीनां षण्णाम् पुनः पाठोऽर्थभेदार्थ इत्येके" ॥५७४, ५७५॥

३८५. अर्व शर्व हिंसायाम् । अर्वः शर्वः ॥५७६, ५७७॥

३८६. इवि व्याप्तौ । इन्वति । वकारस्य दन्त्योष्ठ्यत्वाज्झल्त्वाभावादनुस्वाराभावः[4] ॥५७८॥

३८७ पिवि मिवि निवि सेचने । पिन्वति । मिन्वति । स्नेहन इत्येके ॥५७९–५८१॥

---

१. चुरादौ क्षीरतरङ्गिण्यां न पठ्यते ।

२. 'चर्व भर्व इत्योष्ठ्यान्त्यौ' इत्यस्थानेऽयं पाठः । अर्व शर्व हिंसायाम् (३८५) इत्युत्तरसूत्रव्याख्यानात्तेऽनेन पाठेन भवितव्यम् । तथापि च 'चर्व भर्व इत्योष्ठ्यान्त्यौ' इत्येव पाठो युक्तः । सर्वेष्वन्यत्र पाठात् । चर्व गर्व धातू पूर्वत्र (२।२८९ सूत्रे) द्रष्टव्यौ ।

३. अस्मिन् मते 'वबयोरभेदं' मन्यते ग्रन्थकार इति प्रतीयते । बान्तौ पूर्वत्र १ । २८९ सूत्रे पठितौ ।

४. नश्चापदान्तस्य झलि (८।३।२४) सूत्रेणेति शेषः ।

५. वचनमिदं धातुवृत्तौ (पृष्ठ १२२) । धातुवृत्तेर्मुद्रितसंस्करणे त्वन्यथा पाठो दृश्यते, स चाशुद्ध एव, क्षीरतरङ्गिणीपाठविरोधात् ।

३८८. इवि जिवि दिवि धिवि प्रीणनार्थाः । इन्वति । इन्वकाः मृगशिरस्तारकाः[1] । जिन्वति । धिन्विकृण्व्योर च (३।१।८०) इत्युविकरणः—धिनोति । हिवीति च चान्द्राः ( चा० धा० १।२०४ ) हिन्वति ॥५८३-५८६॥

३८९. रिवि रवि धवि धवि गत्यर्थाः । रिण्वति । रण्वति । धवि रवि इत्योष्ठ्यान्तौ[2] । रम्वते । करम्वः, करम्बितम् । धन्वति धन्वा ॥

३९०. कृवि हिंसाकरणयोः । धिन्विकृण्व्योर च[3] (३।१।८०) कृणोति ॥५९१॥

३९१. मव बन्धने । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ( ६।४।२० ) इत्यूठ्—मूः, मुवौ ॥५९२॥

३९२. अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनाक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अष्टादशार्थाः । अवति । ऊः, उवौ । ज्वरत्वरस्रिव्यविमवामुपधायाश्च ( ६ । ४ । २० ) इत्यूतिः साधुः । सितनिगमि (उ० १।७०) इति तुन्—ओतुर्मार्जारः । अवतेष्टिलोपश्च (उ० १।१४१)—ओम् । अर्तिसृधृधम्यश्यवितॄभ्योऽनिः (उ० २।१०३) इत्यनि—अवनिः । दृण्—सिर्दाकुष्वविभ्यो नक् (उ० ३।२) ऊमः । अवितृस्तृतन्त्रिभ्य ईः (उ० ३।१५८)—अवीः रजस्वला । इन् (दश० उ० १।४६)—अविः[4] । अवट[5] । अविनः ॥५९३॥

३९३. उद्रात्ता उदात्तेतः ॥

1. 'इन्वका इति पञ्चतारा ·········मरुतो देवता इन्वका नक्षत्रमिति श्रुतेः' इत्यमरटीकायां (पृष्ठ ७८) क्षीरस्वामी ।

2. धवि सहचरितो रविरोष्ठ्यान्त इति माध. (क्र० धा० सू० १।२६४) ।

3. 'चेत्युविकरण.' पाठा० ।

4. इतोऽग्रेऽन्यत्र 'कान्ति'इत्यपि पठ्यते । तथा सति एकोनविंशत्यर्था भवन्ति ।

5. 'अविरासीत् पिलिप्पिला' इति याजुषमन्त्रे (२३।१२) अविशब्देनार्णवाद् बहिर्भूता प्रारम्भिकाल्पप्रमाणाऽऽर्द्राऽवस्था पृथिवी उच्यते । द० वेदवाणी, वर्ष ८, अंक १, २ (सम्मिलित) पृष्ठ १८,१९ ।

### [ अथ सेट् उभयपदी ]

३९४. धावु शुद्धौ, ३९५ उदात्तः स्वरितेत्। उदात्तः सेट्। स्वरितेत्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले (१।३।७२) इत्यात्मनेपदम्। धावते पादौ, धावति। धावित्वा धौत्वा। धौतः। धावकः। धावति इति वेगितायां गतावाहुः[1] ॥५९४॥

### [अथ सेट आत्मनेपदिनः]

३९६. धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु। इतो धस्यन्ताः (१।४३२) षट्चत्वारिंशत् सेट आत्मनेपदिनश्च। धुक्षते। संधुक्षितः॥ ५९५, ५९६॥

३९७. वृक्ष वरणे। वृक्षः ॥५९७॥

३९८. शिक्ष विद्योपादाने। शिक्षेर्जिज्ञासायाम् (१।३।२१।२) तङ्वार्त्ती—धनुषि शिक्षते। अन्यत्र शिक्षति[2]। शक्तुमिच्छतीति सन् शिक्षितः। शिक्षा ॥५९८॥

३९९. भिक्ष याच्ञायाम् अलाभे लाभे च। ४००. क्लेशे च व्यक्तायां वाचि[3]। तत्तद्देश्यादिप्रसिद्ध्यर्थाना पृथङ्निर्देशः। भिक्षते। जल्पभिक्ष (३।२।१६८) इति षाकन्—भिक्षाकः भिक्षाकी। सनाशंस (३।२।१६८) इत्युः—भिक्षुः। क्लेश चेति सप्याः पृथक् पेठुः, तथा च क्लेश भाषण इति चान्द्र सूत्रम् (चा० धा० १।४४५) क्लेश बाधन इति दौर्गम्। क्लेशते। क्लेशितः। दिवादौ (तु० ४।४५) क्लिश्यति[4]। क्र्यादौ (९।५१) क्लिश्नाति। चुरादौ[5] क्लेशयति ॥५९८॥

१. 'वेगितगतावाहु' पाठा०। अत्र 'सर्त्तेर्वेगितायां गतौ धावादेशमिच्छन्ति' इति काशिकावचनम् (७।३।७८) अनुसन्धेयम्।

२. मतमिदं धातुवृत्तौ सायणेन प्रत्याख्यातम्, तत्रैव द्रष्टव्यम्।

३. सस्मार सायणः। अन्ये तु 'क्लेश धातुमत्र पृथक् पठन्ति। तथैव चन्द्रदुर्गावपि। परन्त्वत्र मूर्धन्यान्तप्रकरणे तालव्यान्तस्य कथं पठ इति तौ नैव प्रतिपादयतः। काशकृत्स्नधातुपाठे तु 'भिक्ष याचनायाम्, दक्ष वृद्धौ शीघ्रे च' (पृ०१६२) इत्येवानुपूर्विकः पाठः। तेनाप्यत्र क्लेश धातोर्नार्षः पाठ इत्येव प्रतीयते।

४. दिवादा आत्मनेपदी पठ्यते। ५. चुरादौ क्षीरतरङ्गिण्या न पठ्यते।

४०१. दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। दक्षः। स्त्रियाम् घाशु-रिदादिभ्यां फः[1]—दाक्षायणी तारा। द्रुदक्षिभ्यामिनन् (उ० २।५०) दक्षिणः। क्षुदक्षिस्पृहिभ्य आय्यः (दश० उ० ८।१) दक्षाय्यो गरुडः। तस्यापत्यं दाक्षाय्यो गृध्रः ॥६००॥

४०२. दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। मौण्ड्यं वपनम्। इज्या यजनम्। उपनयनम् मौञ्जीबन्धः। नियमः संयमः। व्रतादेशः संस्कारादेशकथनम्। दीक्षते। दीक्षित्वा। दीक्षा। सूददीपदीक्षश्च[2] (३।२।१५३) इति युच्—नास्ति—दीक्षिता। अन्ये दीक्ष मौण्ड्ये ज्योपनयनादौ[3] चेत्याहुः। ज्यवते[4]। जीनः ॥६०१॥

४०३. ईक्ष दर्शने। शमीक्ष्योरीयस्य विश्रः (१।४।३९) इति सम्प्रदानम्—चैत्रायेक्षते। ईक्षिभिम्याश्च (३।२।१ वा०) इति णः—ग्रामेक्षा स्त्री। प्रेक्षा ॥६०२॥

४०४. ईष गतिहिंसादर्शनेषु[5]। ईषते। अष्ट्र (द्र० ३।१।१३४) ईषा कीलिका। हलमनसोरीष-पररूपम्[6]—हलीषा, मनीषा। ईषेः किच्च (उ० १।१४) इषुर्बाणः। ईषेः किद् ह्रस्वश्च (उ० ४।२१) इषीकः—इषीका[7] तृणाग्रम्। ईषतीति ईष उञ्छे (१।४५७) इत्यस्य रूपम् ॥६०३॥

४०५. भाष व्यक्तायां वाचि। भाषते। भ्राजभास (७।४।५) इति वा ह्रस्व—अबभाषत् अबीभषत्। भाष्यम्। भाषितम्। भाषा ॥६०४॥

४०६. वर्ष स्नेहने। वर्षते। धृषिवृषिभ्य (तु० उ० ४।५२) इति पार्ष्णिः। पर्षत्। परिषत् तु सीदतेः ॥६०५॥

४०७. गेषृ अन्विच्छायाम्। अन्विच्छा गवेषणा। गेषते। अजिगेषत् ॥६०६॥

---

१. नैतादृश कश्चिद्वचनमुपलभ्यते। अत्र क्षीरस्वामिनोऽमरटीका (पृष्ठ २७) द्रष्टव्या। २. सूद चरणे (१।२२) इत्यत्र 'सूददीपदीक्षश्च' इत्येनं सूत्रमुद्धृतम्। ३. 'ज्योपनमनादौ' पाठा०। ४. अत्र 'ज्या' धातोः 'ज्याते' रूपं युक्तम्। मूर्धन्यान्तप्रकरणविरोधाज्ज्यादेदश्चिन्त्यः। ५. '०दानेषु' पाठा०। ६. 'ईषेः पररूपत्वम्' पाठा०। ७. 'ईषिका' पाठा०।

४०८. येपृ प्रयत्ने । येपते ॥६०७॥

४०९. जेपृ णेपृ एपृ ह्रेपृ[1] गतौ । जेपते । नेपते । नप्तृनेष्टृ (उ० २।९४) इत्यत्र नेष्टा । अन्वेपते । अन्वेपितः । इषेः (६।५७) अन्विष्टः । मा भवानन्वेपिपत । दिवादौ इष गतौ (४।१७) अन्विष्यति । तुदादौ इषु इच्छायाम् (६।५७) अन्विच्छति । क्र्यादौ इष आभीक्ष्ण्ये (९।५४) अन्विष्णाति । चुरादौ[2] अन्वेपयति । अन्वेष्टीति तु भ्रान्तिप्रयोगः[3] ॥ ६०८-६११॥

४१०. ह्रेपृ अव्यक्ते शब्दे । ह्रेपतेऽश्वः । ह्रेपितम् । ह्रेषा । रेपृ इत्यपि चन्द्रः (धा० १।४५५) ॥६१२॥

४११. कासृ शब्दकुत्सायाम् । शब्दस्य कुत्सा रोगित्वात् । कासते । कास्प्रत्ययादाम् (३।१।३५) कासाञ्चक्रे । कासः । विकासः कसतेः (१।५९८) ॥६१३॥

४१२. भासृ दीप्तौ । भासते । भ्राजभास (७।४।३) इति वा ह्रस्वः—अबभासत् अबीभसत् । भञ्जभासमिदो घुरच् (३।२।१६१)—भासुरः । स्थेशभास (३।२।१७५) इति वरच्—भास्वरः । भ्राजभास । (३।२।१७७) इति क्विप्-भाः । भातेस् (२।४३) तु भः, चिन्तिपूजि (३।३।१०५) इति चकारादङ् । गुरोश्च हलः (३।३।१०३) इत्यप्रत्ययः—भासा ॥६१४॥

४१३. रासृ शब्दे । रासते । रासिवल्लिभ्यां च (उ० ३।१२५) इति रासभः । रास्ना । रासकः[4] ॥६१५॥

४१४. णासृ शब्दे । नासते ॥६१६॥

४१५. णसृ कौटिल्ये । अस्य[5] नसते । नासा । नासिका ।६१७।

४१६. भ्यसृ भये । भ्यसते । भेषृ[6] इति चन्द्रः (चा०धा० १।६०७) भेषते[6] ॥६१८॥

---

१. 'प्रेषृ' पाठा० । २. चुरादौ क्षीरतरङ्गिण्यां न पठ्यते ।
३. अदादौ इषधातोरदर्शनादिति भावः । ४. 'रास०' इत्यधिकः क्वचित् ।
५. 'यस्मात्' पाठा० ।
६. 'भेषृ……भेसते' पाठा० । चान्द्रधातुपाठे 'भेषृ' एवोपलभ्यते ।

४१७. आङः शसि इच्छायाम् । आशंसते, आशंस्यते ।[1] आशंसा । सनाशंसभिक्ष उः (३।२।१६८)—आशंसुः । शंसु स्तुतौ (१।४८१) इत्यस्य शंसति, शस्यते । शस्त्रम् । दुर्गं आङः शासु इत्याह[2]—आशासते आशास्यते । आशासित्वा आशास्त्वा । आशा, आशास्तः[3] । अदादौ आङः शासु इच्छायाम् (२।१३) तङ्—आशास्ते । आशीः । तथा शासु अनुशिष्टौ (२।७२) शास्ति ॥६१९॥

४१८. ग्रसु ग्लसु अदने । ग्रसते । ग्रस्त्वा, ग्रसित्वा । ग्रस्तः । ग्रसेरा च (दश० उ० ७।१८ श्वेत० ६।१२९) इति ग्रामः । ग्रासः । ग्रीष्मः ॥६२०, ६२१॥

४१९. ईह चेष्टायाम् । ईहते । ईहांचक्रे । ईहित्वा । ईहितम् । ईहा ॥६२२॥

४२०. बहि महि वृद्धौ । बंहते । लङ्घिबंह्योर्नलोपश्च (उ० १।३०) इति बहु[4] । मंहते । वर्तमाने पृषद्बृहन्महत् (उ० २।८५) इति महत् । मही तु महेः पूजार्थात् (१०।२५४) ॥६२३, ६२४॥

४२१. अहि गतौ । अंहते । अंहः पापम् । आङ्हन्तेर्हो ह्रस्वः[5] अहिः । अंहिः । अयदचुरादौ भाषार्थाः (१०।१९७) अंहयति, बंहयति मंहयति ॥६२५॥

४२२. गर्ह गल्ह कुत्सने[6] । गर्हते । गर्हा । गर्ह विनिन्दने (१०।२३३) चुरादौ वा णिच्—गर्हयति, गर्हति ॥६२६, ६२७॥

---

१. सायण मते 'आङः शन्स इच्छायाम् । आशंसते, आशंस्यते' इति पाठः (द० धा० वृ० पृष्ठ ११६) ।

२. पुरुषकारे तु 'दौर्गा आङः शंसु इत्याहुः' इति क्षीरतरङ्गिण्याः पाठ उद्धृतः (पृ० [illegible]) । तथा सति 'आशंसते आशंस्यते' इत्युदाहरणपाठोऽपि प्रश्नः । ३. 'आशासितः' इत्यपि क्वचित् । ४. 'बहु' पाठा० ।

५. 'अहि भिदि वक्रगतौ' इति काशकृत्स्नधातुपाठे पठ्यते (पृष्ठ १२२) ।

६. अपपाठोऽयम् । आद्यदर्शे-ऽन्येष्वपि 'पार' इत्येतद् विद्यते, न तु 'पहिः' । यदि पाठ इत्येवं चेदपि भ्रमः । ७. 'कु भावात्' पाठा० ।

४२३. बर्ह बल्ह प्राधान्ये[1] । बर्हते । वुनि (द्र०३।१।१५०) बर्हकः । प्रबर्हः । बल्हः । बल्हिर्देशः, [तत्र] भवे बाल्हिकः । चुरादौ भासार्थौ (१०।१९७) बर्हयति, बल्हयति ॥६२८,६२९॥

४२४. वर्ह परिभाषणहिंसादानेषु । [वर्हते] ॥६३०॥

४२५. प्लिह गतौ[2] । प्लेहति[3] । अनुदन् (उ० १।१५९) इति प्लीहा ॥६३१॥

४२६. वेहृ जेहृ वाहृ प्रयत्ने । वेहते । सम्यनूपपदवेहद् (उ० २।८६) इति वेहद् गर्भघ्नी गौः, विहन्ति इत्यर्के । वाहते । क्षुब्धस्वान्त (७।२।१८) इति वाहेर्बाढम्, वाहितम् । वह प्रापणे (१०३१) वहति, वहते । वोढा ॥६३२—६३४

४२७. द्राहृ निक्षेपे[4] । द्राहते । द्राक्षम् । द्राह निद्राक्षये इति दुर्गः ॥६३५॥

४२८. काशृ दीप्तौ । काशते । कथं चाकशीति[5] उपधाह्रस्वोऽत्र वक्तव्यः । काशः । प्रकाशः । आकाशः । प्रतीकाशः । नीकाशः, इकः काशे (६।३।१२३) दीर्घः । हनिकुषिनीरमि (उ० २।२) इति काष्ठम् । इन् (दशा० उ० १।४६) काशिर्देशः ॥६३६॥

४२९. ऊह तर्के । तर्क उत्प्रेक्षा । ऊहते । उपसर्गादस्यत्यूह्योः (१।३।२९ वा०) इति वा तङानौ—समूहति, समूहते । समूहः । उपसर्गाद्ध्रस्व ऊहतेः (७।४।२३) समुह्यते । परिसमुह्य । समूह्योऽग्निः[6] ॥६३७॥

---

१. स्मृतं धातुवृत्तौ (पृष्ठ ११७) । २. द्र० पृष्ठ ९०, टि० ५ ।

३. क्वचित् । आत्मनेपदिषु पाठात् 'प्लेहते' इति युक्तम् ।

४. स्मृतं धातुवृत्तौ (पृष्ठ ११७) । 'निद्राक्षये' इति क्वचित्कः पाठः, सोऽपपाठः, दुर्गमते तस्यार्थस्यैव प्रतिपादनात् ।

५. अनश्नन्नन्यो अभि चाकशीति' इति ऋग्वेदे (१।१६४।२०) श्रूयते ।

६. समूह्य सम्पूर्वाद् वहेरिति वृत्तिकाराः (३।१।१३१) । महाभाष्ये तु सम्पूर्वाद् ऊहतेरित्युक्तम् (३।१।१३१) । तत्रैव चोदधृतं ब्राह्मणम्—'समूह्य चिन्वीत पशुकामः ......पशूनेवास्मै समूहति' (का० स० २१।४) इति ।

४३०. गाहृ विलोडने । विलोडनं परिमलनम् । गाहतेऽम्भः । गाढा, गाहिता । गाढः ॥६३८॥

४३१. ग्लहू ग्रहणे । ग्लहते । ग्लाढा, ग्लहिता । गृहू इति चन्द्रदुर्गौ (चा० धा० १।४७३) ॥६३९॥

४३२. घसि[2] करणे । घंसते । चन्द्रो घषि[3] इत्याह—घंषते । घुषि कान्तिकरण इति दुर्ग:[4]—घुंषते ॥६४०॥

४३३. उदात्ता अनुदात्तेतः ॥

[अथ सेटः परस्मैपदिनः]

४३४. घुषिर् शब्दार्थः[5] । इतोऽर्हपर्यन्ताः (१।४८८) अष्टाशीतिः सेटः परस्मैपदिनश्च । घोषति । अघुषत्, अघोषीत् । घुषिरविशब्दने (७।२।२३) निष्ठायां नेट्—घुष्टा रज्जुः । नेह—संघुषितं वाक्यम् । चुरादौ घुषिर् विशब्दने (१०।१७२) घोषयति[6] । इत्युच्च घोषयित्नु ।६४१।

४३५. अक्षू व्याप्तौ संघाते च ।[1] धक्षोऽन्यतरस्याम् (३।१।७५) श्नु—अक्षति अक्ष्णोति । अष्टा, अक्षिता । अक्षम् । अक्षरम् ॥६४२॥

४३६. तक्षू त्वक्षू तनूकरणे । तनूकरणे तक्षः (३।१।७६) इति श्नुः तक्षति तक्ष्णोति । नेह—संतक्षति वाग्भिः । तष्टा, तक्षिता[7] । तष्टः । तष्टा । तक्षकः । त्वक्षति । त्वष्टा, त्वक्षिता । त्वच त्वचने (१।४४३) अर्थभे-

---

१. इतः पूर्वं 'मह्' इति क्वचिदधिकम् ।

२. सायणः स्वामिमते 'घस' इति पाठमाह (धा० वृ० पृष्ठ ११९) ।

३. हेमचन्द्रोऽपि 'मूर्धन्यान्तोऽयमिति चन्द्रः—घंषते' इति ब्रुवन् 'घषि करणे' इति चान्द्रपाठमाह । सायणस्तु 'घिषीतीदुपधं पेठतुः चन्द्रकाश्यपौ' इति (पृष्ठ ११९) ।किञ्च् 'घिषि करणे' इति चान्द्रपाठं नोपलभ्यते । मुद्रिते चान्द्रधातुपाठे 'घुषिर् करणे' (१।४७३) इति पठ्यते । काशकृत्स्नीयधातुपाठेऽपि 'घुषिर् कान्तिकरणे' (पृष्ठ १२४) इति पठ्यते । कोऽत्र चान्द्रः पाठ इति सुधियो निर्णयन्तु ।

४. उद्धृतमिदं पुरुषकारे (पृष्ठ १११) ।

५ स्मृतमिदं पुरुषकारे (पृष्ठ ११०) धातुवृत्तौ (पृष्ठ ११९) च ।

६. 'णौ.' इत्यधिकं क्वचित् ।

७. 'तष्टम्' पाठा० ।

दार्थः ॥६४३, ६४४॥

४३७. उक्ष सेचने । उक्षति । उक्षितः । अनुबन् (उ० १।१५९) इति—उक्षा ॥६४५॥

४३८. रक्ष पालने । चौराद् रक्षति । असुन् (दश० उ० ९।४९) रक्षः ॥६४६॥

४३९. णिक्ष चुम्बने । चुम्बनं वक्त्रसंयोगः । प्रणिक्षति । वा निक्षनिसनिन्दाम्[1] (तु० ८।४।३३) इति णत्वम्—प्रणिक्षिता, प्रनिक्षिता ॥६४७॥

४४०. तृक्ष स्तृक्ष णक्ष गतौ । [तृक्षति,स्तृक्षति ।]तृक्षस्यापत्यं तार्क्ष्यः (द्र० ४।१।१०५) । स्तृक्षः । णोपदेशो न्याय्यः, तथा च चान्द्रा —, वृक्ष स्तृक्ष[2] णक्ष (तु० चा० धा० १।२१५) इति पेठुः । अमिनक्षि (उ० ३।१०५) इत्यत्रन्—नक्षत्रम् । नभ्राड् (६।३।७५) सूत्रेऽस्य निपातनं नाम्ना क्षुत्प त्तिरव्यवस्थितेति ज्ञापनार्थम् ॥६४८—६५०॥

४४१. मक्ष रोषे[3] । मक्षति । घञ् मक्षः । मक्षिका । पुनामषिक-मत्कुणम्[4] इति छान्दसम् ॥६५१॥

४४२. वक्ष संघाते ।[5] असुन् (दश० उ० ९।४९) वक्षः ॥६५२॥

४४३. त्वक्ष त्वचने[6] । त्वचनं त्वचोग्रहणम् । संवरण-मिति दुर्गः[7] । त्वष्टा ॥६५३॥

४४४. मूर्क्ष्य अनादरे ।[8] मूर्क्ष्यति । पान्तोऽयमिति चन्द्रः

१. 'वा निसनिक्षनिन्दाम्' इति काशिकादिषु पाठः । २. चान्द्रे 'स्तृक्ष' पाठः ।

३. 'मुक्ष रोषे—मुक्षति, मुक्षः' इति काशकृत्स्नधातुपाठकन्नडटीकायां पाठ. (पृष्ठ ५६) । ४. 'मत्कुणम्' पाठा० ।

५. 'वक्ष रोषे' इति काश० धातु० पृष्ठ ५५ ।

६. 'तक्ष वचने—तक्षति (वक्ति), तक्षः (वाचकः)' इति काश० धातु० पृष्ठ ५६ । ७. उद्धृतमिदं पुरुषकारे (पृष्ठ ११५) ।

८. मूर्छ अनादरे इति काश० धा० पृष्ठ ५६। धातुवृत्तौ (पृष्ठ १२१) सायणेन 'अनादरे' इति पाठो दूषितः। ९. मूर्छे इत्यर्थः । उद्धृत पुरुषकारे (पृष्ठ १११) ।

(चा० धा० १।२१९) सूर्क्षति । असूर्क्षणम् अपरिभवः । यान्तस्यापि यस्य हल (६।४।४९) इति यलोपात्[1] ॥६५४॥

४४५. काक्षि वाक्षि माक्षि द्राक्षि ध्राक्षि ध्वाक्षि काङ्क्षायाम्। काङ्क्षति । द्राक्षा । ध्वाङ्क्षः ॥६५५—६६०॥

४४६. द्रक्षि ध्राक्षि घोरनिवाशिने च । ध्वाक्षि चेति दुर्गः ॥

४४७. पक्ष परिग्रह इत्येके ॥६६१॥

४४८. चूष[2] पाने । चूषति । चूषितः । चूषित्वा ॥६६२॥

४४९. तूष तुष्टौ । तूषति । दिवादौ (४।७६) तुष्यति ॥६६३॥

४५०. पूष वृद्धौ । पूषति । पुष पुष्टौ (१।४६२) पोषति । दिवादौ (४।७४) पुष्यति । क्र्यादौ (९।५७) पुष्णाति । चुरादौ (१०।१९५) पोषयति । श्वनुक्षन् (उ० १।१५९) इति पूषा ॥६६४॥

४५१. मूष स्तेये । मूषति । मूषा तैजसावर्तनी[3] । गौरादौ (गण० ४।१।४१) मूषी । ण्वुलि मूषकः । क्र्यादौ मुष हिंसार्थः (१।४५८)—मोषति । क्र्यादौ (९।५८) मुष स्तेये—मुष्णाति । मुषेर्दीर्घश्च (उ० २।४३) इतीकः—मूषिकः । लूषोऽपीति दुर्गः ॥६६५॥

४५२. सूष प्रसवे । सूषति । सुसूष । तालव्यादिरिति चरक[4]—शूषा शाकम् ॥६६६॥

४५३. यूष हिंसायाम् । ४५४. जूष च । यूषः । यूषम् । जूषितः । जूषा ॥६६७, ६६८॥

---

१. असूर्क्षणम् इत्येव रूप निष्पद्यत इत्यर्थः ।

२. इत आरभ्य 'पूष' पर्यन्ताः काशकृत्स्नीये धातुपाठे ह्रस्वोपधाः पठ्यन्ते । तेषां च 'चुषादेर्दीर्घः' इति सूत्रेण सार्वधातुके दीर्घत्वं विधीयते । असार्वधातुके च लघूपधगुण उदाह्रियते—चोषकः, तोषः, शोषकः, मोषः, मोषणम्, सोषकः । दीर्घोपधत्वे गुणो दुर्लभः । ३. तु० 'तैजसावर्तनी मूषा' । अमर० २।१०।३३॥

४. 'तालव्योष्मादिरिति पारायणिका इति स्वामी' इति धातुवृत्तौ (उ० १२१) उद्ध्रियते । अयं पाठः क्षीरतरङ्गिण्यां नोपलभ्यते ।

४५५. भूप अलङ्कारे । भूषति । भूषा । चुरादौ (१०।१०५) भूषयति । तसि भूष इति दुर्गः । तंसति । उत्तंसः । अवतंसः ॥६६९॥

४५६. ऊप रुजायाम् । ऊषति । ऊषः क्षारमृत्तिका । ऊष्मा, ऊषणम् मरिचम् । त्र्यूषणं त्रिकटुकम्[1] ॥६७०॥

४५७ ईष उञ्छे । ईषति । ईषा प्रग्रहवेषणी । इषुः । इषीका ॥

४५८. कष शिष जष झष शष वष मष मुष रुष रिष हिंसार्थाः । कषति । निकषोऽश्मा । परकाषी । सर्वकूलाभ्र (३।२।४२) इति खच्—कूलङ्कषः । कृच्छ्रगहनयोः कषः (७।२।२२) इति क्तेऽनिट्—कष्टोऽग्निः । निमूलसमूलयोः कषः (३।४।३४) इति णमुल् कषादिषु तैरेवानुप्रयोगः (द्र० ३।४।४६) समूलकाषं कषति । वौ कषलस (३।२।१४३) इति घिनुण्—विकाषी । कषिः, कषी खनित्रम् । कषेश्छ च (तु० उ० २।८४) इति कच्छूः पामा । वृतृवदि (उ० ३।६२) इति सः—कक्षस्तृणं बाहुमूलश्च । गृहोपान्ते तु कक्षा कक्ष्या च । कषिदूषिभ्यामीकन् (तु० उ० ४।१६) कषीका । शेषति । रुधादौ शिष्लृ विशेषणे (७।१३) विशिनष्टि । चुरादौ शिष असर्वोपयोगे (१०।२११) शेषयति, शेषः । झषति । झषः । शषति । शष्यते । शष्पः । मषी । मष्यते-माषः । मोषति । क्र्यादौ (९।५८) मुष्णाति । रोषति । दिवादौ (४।१२४) रुष्यति । रुष्यन्ती । रेषति । दिवादौ[2] रिष्यति । तीषसहलुभ (७।२।४८) वेट्—रोष्टा रोषिता । रुष्यमत्वर (७।२।२८) इति वेट्—रुष्टः रुषित, रेष्टा रेषिता । रिष्टः, अरिष्टः[3] । लषेश्यर्यपीति कष्ठः—लषति लषः ॥६७२—६८१॥

४५९. भष भर्त्सने । शब्दकर्मकः, कुत्सितशब्दकरणार्थे । श्वा भषति, बुक्कति । भषति भषिका, पैशुन्येन वक्तीत्यर्थः । भषकः । भषद् (द्र० गण० ३।१।१२४=भषी) ॥६८२॥

४६० उष दाहे । ओषति उषविदजागृभ्योऽन्यतरस्याम्[4] (तु० ३।१।३८) इति लिट्याम् वा—ओषाञ्चकार, उवोष । उषाद्रावुल्का, उल्मुकम्,

१. पिप्पली, शुण्ठी, कृष्णमरीचिका च 'त्रिकटुकम्' इत्युच्यन्ते ।

२. क्षीरतरङ्गिण्यां दिवादौ न पठ्यते ।  ३. 'रिष्टम्', 'अरिष्टम्' पाठा० ।

४. 'उषविदजागृभ्योऽन्यतरस्याम्' इति काशिकादिषु पाठः ।

उल्प. सूक्ष्मलताभिधानम्, उल्वं जरायु[1]। उषिकुषिगर्तिभ्यस्थन् (उ० २।४)—ओष्ठ.। इषियुधीन्धिदसिश्याधूसूभ्यो मक् (उ० १।१२)—उष्मा। उपिस्निभ्यां किद् (उ० ४।१६२)—उष्ट्र[1] उष्ट्री। उषः किद् (उ० ४।२३४) उषाः। असुन् (दश० उ० ९।४९) उष. प्रभातम् ॥६८३॥

४६१. जिषु[2] विषु मिषु सेचने। परिवेषति। ह्लादौ विष्लृ व्याप्तौ (३।१४)—वेवेष्टि। मेषति। पचादौ (गण० ३।१।१३४) मेषः। तुदादौ मिष स्पर्धायाम् (६।५८) मिषति। मिश मश शब्दे (१।४७६) तालव्यान्तौ ॥६८४–६८६॥

४६२. पुष पुष्टौ। पोषति। पोषिता। अपोषीत्। पुष किद् (उ० ४।४) पुष्करम्। कलच्[3] (पु० उ० ४।५) पुष्कलम्। स्तनिहृषिपुषि (उ० ३।२९) इति पोषयित्नुः। स्वे पुष. (३।४।४०) इति णमुल्—स्वपोषं पुष्टः। दिवादौ[4] (४।७४) पुष्यति। पुषादिद्युताद्ि (३।१।५५) इति लुङ्यङ्—अपुषत्। क्र्यादौ (९।५७) पुष्णाति। चुरादौ पुष धारणे (१०।११५) पोषयति ॥६८७॥

४६३ श्रिषु श्लिषु प्रुषु प्लुषु दाहे। श्रेषति। श्लेषति। अश्रेषीत्। अश्लेषीत्[5]। श्रिष्ट्वा, श्लिष्ट्वा, श्रेषित्वा, श्लेषित्वा। श्लिष आलिङ्गने दिवादौ (४।७८) श्लिष्यति। श्लेष्मा। चुरादौ श्लिष श्लेषणे (१०।१४)—श्लेषयति। प्रोषति। दिवादौ (४।७) प्लुष्यति। प्लुष्ट्वा, प्रोषित्वा। प्लुष्टः। क्र्यादौ प्रुष प्लुष स्नेहनसेचनपूरणेषु (९।५१) प्रुष्णाति प्लुष्णाति ॥

१. 'प्रन् बाहुलकादगुणत्वम्' इति धातुवृत्तिकारः (पृष्ठ १२३)। तच्चिन्त्यम्, उणादिसूत्रेणैव सर्वेष्टसिद्धेः।

२ काशकृत्स्नीयधातुपाठे जेषतेरनन्तरं 'णिषु' पठ्यते, नेषति (पृष्ठ ५७) एतद्विषये 'नेषतिः धात्वन्तरम्' इति पतञ्जलिवचनम् (३।२।१३५) अनुसन्धेयम्।

३ 'कलच्च' इति श्वेतवनवासिन (पाठ ४।५)। अथर्ववेदे (११।३।१०) पुष्कलशब्दस्याद्युदात्तत्वदर्शनात् श्वेतवनवासिपाठ एव ज्यायान्।

४ स्पष्टमिदं पुरुषकारे (पृष्ठ ११२)।

५. 'वर्धमानरक्षितसम्मताकारादयश्चात्र सेटमाहुः (धा० वृ० पृष्ठ १२५)। अनिट्कारिकासु दैवादिकस्यैवग्रहणमिति कैयटादयः ( सि० कौ० भाग ३ पृष्ठ

**४६४. पृषु वृषु मृषु सेचने ।** पर्षति । वर्तमाने पृषद्बृहद् (उ० २।८४) इति पृषत् । पृषिरञ्जिभ्यां कित् (उ० ३।१११) पृषतो मृगो बिन्दुश्च । उणादौ-पृष्ठम् (द्र० २।१२), पार्ष्णिः (द्र० ४।५२), पर्जन्यः (द्र० ३।१०३), पृष्णिः किरणः[1] । स्पृशेस् (६।१२३) तु पृश्निरल्पतनुः । वर्षति । विभाषा कृवृषोः (३।१।१२०) क्यप्—वृष्यम्, वर्ष्यम् । के (द्र० ३।१।१३५) वृषः । लष पत पद-स्था भू-वृष (३।२।१५४) इति वर्षुकः । अजू-विधौ भयादीनामुपसंख्यानम् (३।३।५६ वा०) इति वर्षम् । अचि (द्र० ३।१।१३४) वर्षा ऋतुः । वृष्ट्वा वर्षित्वा । वृष्टम् । कर्तरि नेष्यते[2] इति वृष्टो देवः । कनिन् युवृषि (उ० १।१५६) इति वृषा इन्द्रः । ऋषिवृषिभ्यां कित्च (तु० उ० ३।१२३) इत्यभच्-वृषभः । वृषादिभ्यश्चित् (उ० १।१०८) इति वृषलः । सृवृषिभ्यां कित् (उ० ४।४९) वृष्णिः । वहिहृति (४।३।११६) इति दीर्घत्व—प्रावृट् ॥६९२-६९४॥

**४६५. मृषु सहने च ।** मर्षति । मृष्ट्वा, मर्षित्वा । मृषस्तितिक्षायाम् (१।२।२०) इत्यस्याकित्त्वं[3] नास्ति, तत्र न क्त्वा सेट् (१।२।१८) इत्यनुवृत्तेः—मृष्टम् । दिवादौ(४।५५) मृष्यति । अपमृषित वाक्यमाह । भाषाया शासियुधि (३।३।१३० वा०) इति युच्—दुर्मर्षणः ॥

**४६६. मृषु हिंसासंक्लेशनयोः ।** मर्षति ॥६९५॥

**४६७. घृषु संघर्षे ।** घर्षति । घृष्ट्वा, घर्षित्वा । घृष्टः । घृषुः (द्र० ३।१।१३४)—संघर्षणः ॥६९६॥

**४६८. हृषु अलीके[4] ।** हर्षति । हृष्ट्वा, हर्षित्वा । हृष्टः—हृषेर्लोमसु (७।२।२९) इति हृषितानि लोमानि । विस्मितप्रतिघातयोश्च (७।२।२९ वा०) हृष्टश्चैत्रः, हृषितः। हृषेरुलच् (उ० १।९८) हर्षुलः। स्तनिहृषि- उ० ३।२९) इति हर्षयित्नु । दिवादौ हृष तुष्टौ (४।१२३) हृष्यति ॥

---

१६६) व्याख्यात च स्वयमेव दीक्षितेन—'आदिशब्दात्-न्यसकारहृदयवर्धमानस्वामिसम्मताकारादयः (प्रौ० मनो० पृष्ठ ५८१) ।

१. द०—पर्षतेरपीच्छन्त्येके—पृष्णी रश्मिः । हैमोणादि ३२५ ।

२. पुनरयं वचनमिति न ज्ञायते । ३. न्यासेसस्करणे 'कित्व' इत्यपपाठः ।

४. अलीकमानन्द इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ ६१) ।

उल्पः सूक्ष्मतृणाभिधानम्, उल्बं जरायुः । उषिकुषिगार्तिभ्यस्थन् (उ० २।४)—ओष्ठः । इषियुधीन्धिदसिश्याधूसूभ्यो मक् (उ० १।१४५)—उष्मः । उषिखनिभ्यां कित् (उ० ४।१६२)—उष्ट्रः[1] उष्ट्री । उषः कित् (उ० ४।२३४) उषाः । असुन् (दश० उ० ९।४९) उषः प्रभातम् ॥६८३॥

४६१. जिषु[2] विषु मिषु सेचने । परिवेषति । ह्लादौ विष्लृ व्याप्तौ (३।१४)—वेवेष्टि । मेषति । पचादौ (गण० ३।१।१३४) मेषः । तुदादौ मिष स्पर्धायाम् (६।५८) मिषति । मिश मश शब्दे (१।४७६) तालव्यान्तौ ॥६८४-६८६॥

४६२. पुष पुष्टौ । पोषति । पोषिता । अपोषीत् । पुषः कित् (उ० ४।४) पुष्करम् । कलश्च[3] (तु० उ० ४।५) पुष्कलम् । स्तनिहृषिपुषि (उ० ३।२९) इति पोषयित्नुः । स्वे पुषः (३।४।४०) इति णमुल्—स्वपोषं पुष्टः । दिवादौ[4] (४।७४) पुष्यति । पुषादिद्युताद्य (३।१।५५) इति लुङ्यङ्—अपुषत् । क्र्यादौ (९।५७) पुष्णाति । चुरादौ पुष धारणे (१०।१६५) पोषयति ॥६८७॥

४६३ श्रिषु श्लिषु प्रुषु प्लुषु दाहे । श्रेषति । श्लेषति । अश्रेषीत् । अश्लेषीत्[5] । श्रिष्ट्वा, श्लिष्ट्वा, श्रेषित्वा, श्लेषित्वा । श्लिष आलिङ्गने दिवादौ (४।७८) श्लिष्यति । श्लेष्मा । चुरादौ श्लिष श्लेषणे (१०।३४)—श्लेषयति । प्लोषति । दिवादौ (४।७) प्लुष्यति । प्लुष्ट्वा, प्लोषित्वा । प्लुष्टः । क्र्यादौ प्रुष प्लुष स्नेहनसेवनपूरणेषु (९।५६) प्रुष्णाति प्लुष्णाति ॥

---

१. 'इन् बाहुलकादगुणत्वम्' इति धातुवृत्तिकारः (पृष्ठ १२३) । तद्विन्त्यम्, उणादिसूत्रेणैव सर्वेष्टसिद्धेः ।

२. काशकृत्स्नीयधातुपाठे जेषतेरनन्तरं 'णिषु' पठ्यते, नेषति (पृष्ठ ५७) एतद्विषये 'नेषतिः धात्वन्तरम्' इति पतञ्जलिवचनम् (३।२।१३५) अनुसन्धेयम् ।

३. 'कलच्च' इति श्वेतवनवासिनः (पाठः ४।५) । अथर्वणि (१३।३।१०) पुष्कलशब्दस्यान्तोदात्तत्वदर्शनात् श्वेतवनवासिपाठ एव न्याय्यः ।

४. स्मृतमिदं पुरुषकारे (पृष्ठ १११) ।

५. 'वर्धमानस्वामिसम्मताकारादयथासुं सेटमाहुः (धा वृ० पृष्ठ १२५) । अनिट्कारिकासु देवादिकस्यैवमहणमिति कैयटादयः ( सि० कौ० भाग ३ पृष्ठ

४६४. घृषु हृषु मृषु सेचने । घर्षति । वर्तमाने पृषद्बृहद् (उ० २।८४) इति पृषत् । पृषिरञ्जिभ्यां कित् (उ० ३।१११) पृषतो मृगो बिन्दुश्च । उणादौ-पृष्ठम् (द्र० २।१२), पार्ष्णिः (द्र० ४।५२), पर्जन्यः (द्र० ३।१०३), पृश्निः किरणः[1] । स्पृशोस् (६।१२३) तु पृश्निरल्पतनुः । घर्षति । विभाषा कृवृषोः (३।१।१२०) क्यप्—वृष्यम्, वर्ष्यम् । के (द्र० ३।१।१३५) वृषः । लष पत पद-स्था भू-वृष (३।२।१५४) इति वर्षुकः । घञ्-विधौ भयादीनामुपसंख्यानम् (३।३।५६ वा०) इति वर्षम् । अचि (द्र० ३।१।१३४) वर्षा ऋतुः । वृष्ट्वा वर्षित्वा । वृष्टम् । कर्तरि चेष्यत[2] इति वृष्टो मेघः । कनिन् युवृषि (उ० १।१५६) इति वृषा इन्द्रः । अषिवृषिभ्यां कित्थ (तु० उ० ३।१२३) इत्यमच्-वृषभः । वृषादिभ्यश्चित् (उ० १।१०८) इति वृषलः । सृवृषिभ्यां कित् (उ० ४।४९) वृष्णिः । नहिवृति (६।३।११६) इति दीर्घात्—प्रावृट् ॥६९२-६९४॥

४६५. मृषु सहने च । मर्षति । मृष्ट्वा, मर्षित्वा । मृषस्तिति-क्षायाम् (१।२।२०) इत्यस्याकित्त्वं[3] नास्ति, तत्र न क्त्वा सेट् (१।२।१८) इत्यनुवृत्तेः—मृष्टम् । दिवादौ (४।५५) मृष्यति । अपमृषित वाक्यमाह । भावायां शासियुधि (३।३।१३० वा०) इति युच्—दुर्मर्षणः ॥

४६६. मृषु हिंसासंघातयोः । मर्षति ॥६९५॥

४६७. घृषु संघर्षे । घर्षति । घृष्ट्वा, घर्षित्वा । घृष्टः । घृषुः (द्र० ३।१।१३४)—संघर्षणः ॥६९६॥

४६८. हृषु अलीके[4] । हर्षति । हृष्ट्वा, हर्षित्वा । हृष्टः— हृषेर्लोमसु (७।२।२९) इति हृषितानि लोमानि । विस्मितप्रतिघातयोश्च (७।२।२९ वा०) हृष्टश्चैत्रः, हृषितः । हृषेरुलच् (उ० १।९८) हर्षुलः । स्तनिहृषि- (उ० ३।२९) इति हर्षयित्नुः । दिवादौ तु तुष्टौ (४।१२२) हृष्यति ॥

१६६) व्याख्यातं च स्वयमेव दीक्षितेन—'आदिशब्दात् न्यासकारहरदत्तवर्धमानस्वा-मिनश्मताकारादयः (प्रौ० मनो० पृष्ठ ५८१) ।

१. द०—पर्वतेऽपीच्छन्त्येके—पृश्नी रश्मिः । हैमोणादि ३२५ ।

२. इत्यर्थं वचनमिति न ज्ञायते । ३. वर्धमानसंस्करणे 'कित्व' इत्यपपाठः ।

४. धनीकमानन्द इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ ६१) ।

४६९. तुस ह्रस ह्लस रस शब्दार्थाः। तोसति। तोसलो राजा:, तोसला देशः। ह्रसति। ह्रसितः। ह्रस्वः। ह्लसति। रसति। रसितम्। चुरादौ रस आस्वादने (१०।२१५) अदन्तः—रसयति, रसना, रस्यते—रसः। उणादौ (३।१५) रास्ना। रसालास्त्यर्थे(द्र० ५।२।१२५)॥६९९–७०१॥

४७०. लस श्लेषणक्रीडनयोः। लसति। अलसः। विलासः। ह्ल्लासः। लास्यम्। लसिका रोगः॥७०२॥

४७१. घस्लृ अदने इति केचित्[1]। घस्—घासः। कसरचि(द्र० ३।२।१६०) घस्मरः॥७०३॥

४७२. चर्च झर्छ झर्झ परिभाषणे। झंस इति चन्द्रदुर्गौ (स्वा० धा० १।२४१)। चर्चे इत्येके। जर्ज इत्यन्ये, झर्च इत्यपरे। किमत्र सत्यम्? देवा जानन्ति। तुदादौ (६।२०) अध्येयम्॥७०४–७०६॥

४७३. पिसृ पेसृ गतौ। पेसति। स्थेशभासपिस (३।२।१७५) इति वरच्—पेस्वरः। चुरादौ पिस गतौ (१०।२९) पेसयति। पिशृ पेशृ वेशृ इति सभ्याः। वेसरोऽश्वतरः॥७०७,७०८॥

४७४. हसे हसने। हसति। व्यतिहारे हसादीनां प्रतिषेधः (द्र० १।३।१५ वा०)—व्यतिहसन्ति। ह्म्यन्तक्षण (७।२।५) इत्येदित्वाद् वृद्धिर्नास्ति—अहसीत्। स्वनहसोर्वा (३।३।६२) अप्—हसः, हासः। स्फायि (उ० २।१३) इति रक्—हस्रो[2] दिनम्। हसिमृग्रिण् (उ० ३।८६) इति तन्—हस्तः॥७०९॥

४७५. णिश समाधौ। प्रणेशति। निशा[3]॥७१०॥

४७६. मिश मश शब्दे रोषकृते च। शब्दने रोषक्रियायाञ्चार्थे। के (द्र० ३।१।१३५) मिशो व्याजः। क्वुन्—मशकः॥७११, ७१२॥

४७७. शव गतौ। शवतिर्गतिकर्मा कम्बोजेषु भाष्यते, विकार एनमार्या

---

१. अयं न सार्वत्रिक इति सायणोऽपि (धा० वृ० पृष्ठ १२५)।
२. अमरादिकोशेषु दिनवाची 'दस्र' शब्दः पठ्यते।
३. अत्र धातुवृत्तिः (पृष्ठ १२६) द्रष्टव्या।

पाहुः[1] । शवति । शावरः, शवः, शावम् ॥७१३॥

४७८. शश प्लुतिगतौ । प्लुतिभिर्गमने । शशति । शशः । शशकः ॥७१४॥

४७९. कश शब्दे । कशोति कौशिकः । काशस्तृणम् । काशिः । कश्मीराः ॥७१५॥

४८०. शसु हिंसार्थः[2] । शसति । न शसददवादि (६।४।१२६) इत्येत्वाभ्यासलोपौ न स्तः—शशसतुः शशसुः । ह्म्यन्तक्षणश्वस[3] (तु० ७।२।५) इत्यशसीत्[4] । शस्त्वा, शसित्वा । पृषशसी वैयात्ये[4] । (तु० ७।२।१६) अनिट्—विशस्तः, अन्यत्र विशसितः । दाम्नीशस[5] (तु० ३।२।१८२) इति ष्ट्रन्—शस्त्रम् । विशसिता । उप दौ शास्ता ॥७१६॥

४८१. शंसु स्तुतौ । शंसति । शस्यते । शस्त्वा, शंसित्वा । शसिदुहिगुहिभ्यो वा (३।१।१०९ भा०) इति वक्तव्यात् क्यप्—शस्यम् । शस्येण्यद् अपीष्यते—शंस्यम् । नृशंसः । उणादौ शंस्ता पशुविशसिता । अत एव शंसु स्तुतौ च[6] इति दुर्गः ॥७१७॥

४८२. चह कल्कने । कल्कनम् शाठ्यम् । चहति । चुरादौ मित् (१०।७९) चहयति ॥७१८॥

४८३. रह त्यागे । रहति । अरहीत् । विरहः । राहुः । पचन् (दश० उ० ६।४९) रहः । चुरादौ (१०।२४५) रहयति ॥७१९॥

४८४. रहि गतौ । रंहति । रंहः ॥७२०॥

४८५. दृह दृहि बृह बृहि वृद्धौ[7] । दर्हति । दृढः स्थूलबलयोः (७।२।२०) साधुः । दृंहति । बर्हति । वर्तमाने पृषद्बृहद् (उ० २।८४) इति

---

१. द्रष्टव्यम्—निरुक्त २।२॥ महाभाष्य १।२।१॥ २. 'हिंसायाम्' पाठा० ।
३. 'ह्म्यन्तक्षणश्वस' इति काशिकादिषु पाठः । श्वस-पाठे शसेर्लुङि 'अशासीत्' इति भविष्यति । ४. 'धृषिशसी वैयात्ये' इति काशिकादिषु पाठः ।
५. 'दाम्नीशस' इति काशिकादिषु पाठः । ६. चात् हिंसायाम् ।
७. अत्राह सायणः (धा० वृ० पृष्ठ १२८)—'क्षीरस्वामी दृह दृहि मात्रार्थौ' इत्याह' । न चायं पाठः क्षीरतरङ्गिण्यामुपलभ्यते ।

वृहत्त्। असौ परिवृढः (७।२।२१) साधुः। बृहेर्नलोपश्च (उ० २।११०) इतीसिः—वर्हिः। बृंहेर्नोऽच्च (उ० ४।१४५) इति ब्रह्मा वृन्दम् ॥७७१-७२४॥

४८६. बृहि शब्दे च। बृंहति। बृंहितम्। बृहिर् इति दुर्गः[१]—अबृहत्, अबर्हीत्। बृंहेर्नलोपाद् बृहोऽद्यतनतः ॥

४८७. तुहिर् उहिर् अर्दने। तोहति। अतुहत्, अतोहीत्। वेपितुह्योर्ह्रस्वश्च (उ० २।५७) इति तुहिनम्। ओहति। अपोहति। औहत्, औहीत्। तुहिर् दुहिर् इति चन्द्रदुर्गौ[२] (चा० धा० १।२५७) ॥७२५, ७२६॥

४८८. अर्ह पूजायाम्। अर्हति। अर्हः (३।२।१२) इति कर्मण्यच् अणो बाधः—पूजार्हा। अर्हः पूजायाम्[३] (तु० ३।२।३३१) शता अर्हन्। न्यङ्क्वादित्वात् (द्र० ७।३।५३) अर्घः। हलश्च (३।३।१२१) इति करणे घञ्। अर्घिर्घो वन्तरम्—कला नार्घन्ति षोडशीम्[४]। अर्घो मूल्यम्। शकधृषज्ञा (३।४।६५) इति तुमुन्—अर्हसि मोक्तुम्। अर्ह पूजने चुरादौ (१०।१७७) णिच्—अर्हयति, योग्यत्वादौ नास्ति (?) ॥७२७॥

४८९. उदात्ता उदात्तेतः ॥

---

[सेट आत्मनेपदिनः]

४९० द्युत दीप्तौ। इतस्त्वरान्ताः (१।६२१) सप्तत्रिंशत् सेट आत्मनेपदिनश्च। द्योतते। द्युद्भ्यो लुङि (१।३।९१) इति वा परस्मैपदम्, तत्रैव द्युतादिद्युतादि (३।१।५५) इत्यङ्—अद्युतत्। तङि व्यद्योतिष्ट। द्युतिस्वाप्योः सम्प्रसारणम् (७।४।६७) लिटि—दिद्युते। वचनाद् हलादिशेषा-

१. स्मृतमिद पुरुषकारे (पृष्ठ १२४)।

२. उद्धृतमिद पुरुषकारे (पृष्ठ १२०)।

३. 'अर्हः प्रशंसायाम्' इति काशिकादिषु पाठः।

४. एजर्टन-सम्पादिते महाभारतस्य पूना-संस्करणे सभापर्वणि ३८।२६ श्लोके शारदालिप्या लिखिते काश्मीरकोशे 'कलां नार्घन्ति षोडशीम्' इत्येव पठ्यते। D४ संज्ञके कोशे वर्तमानः 'नार्घति' पाठोऽपि तमेवानुमोदते (द्र० सभापर्व पृष्ठ १८८ पाठान्तर निर्देशः)। क्षीरतरङ्गिण्या 'नार्घन्ति' पाठाज्ज्ञायते महाभारतस्य काश्मीर-पाठ क्षीरस्वामिनः प्राचीनः। हैमधातुपारायणम् (१।५६४) अप्यत्रानुसन्धेयम्।

भावः[1] चङि—व्यदिद्युतत् । द्योतनः । क्विप्—विद्युत् । द्युतेरिसिरादेश जः[2] (तु०उ० २।१११) ज्योतिः[3] । घटादेः (१।५१०) प्राग् द्युतादिगणः ॥७२८॥

४९१. श्विता वर्णे । श्वेतते । अश्वितत् । अश्वेतिष्ट । आदितश्च (७।२।१६) इत्यनिट्—श्वित्तः । विभाषा भावादिकर्मणोः (७।२।१७)—श्वित्तमनेन, श्वितितमनेन[4]; प्रश्वित्तः, प्रश्वितितः[5] । क्त्रः—श्वित्रम्[6] ।

४९२. ञिमिदा स्नेहने । स्नेहनं स्नेहयोगः । मेदते । मिन्नः, मिन्नमनेन; मेदितम् । निष्ठा शीङ्स्विदिमिदि (१।२।१९) इति किरवं नास्ति—प्रमिन्नः प्रमेदितः । भञ्जभासमिदो घुरच् (३।२।१६१)—मेदुरः । अमिचिमिदिशसिभ्यः क्त्रः (उ० ४।१६३)—मित्रम् । असुन् (दश० उ० ६।४६) मेदो वसा । अचि—मेदाख्यो म्लेच्छः । मेदिनी । दिवादौ (४।१३४) मेद्यति । चुरादौ मिद स्नेहने (तु० १०१८) मेदयति ॥७३०॥

४९३. ञिक्ष्विदा[7] स्नेहनमोहनयोः । क्ष्वेदते । क्ष्विण्णः । मिद्विदा[8] इत्यन्येः । क्ष्वेडो विषम्, क्ष्वेडाः रवः । ञिष्विदा इति नन्दी—स्वेदते, अस्विदत्, अस्वेदिष्ट । स्विन्नः । सः स्विदिस्वदिसहीनाञ्च (८।३।६२) इति सः—सिस्वेदयिषति । ष्विदा गात्रप्रक्षरणे (४।८०) अस्मात् स्विद्यति ॥७३१॥

४९४. रुच दीप्तावभिप्रीतौ च । अभिप्रीतिरभिलाषः । रुच्यर्थानां प्रीयमाणः (२।४।३३) सम्प्रदानम्—चैत्राय रोचते रोचनः । अरुचत्, अरोचिष्ट । न पादमि (३।३।८९) इति तङ्—परिरोचयते । राजसूयसूर्य (३।१।११४) इति कर्तरि क्यप्: साधुः । भावे ण्यत्—रोच्यम्, यजयाचरुच (७।३।६६) इति कुत्वं नास्ति । घञ्—रोकः । ल्युट्—रोचनी

---

१. अयं भावः—'द्युत् द्युत्' इति द्विर्वचने न तावत् 'हलादि शेषः' प्रवर्तते, संप्रसारणं पूर्वं प्रतीयते, अन्यथा हलादिलोपेन यस्य निवृत्तौ कस्य संप्रसारणं स्यात् ।

२. धातुसूत्र १।२७ व्याख्याने 'द्युतेरिसिजादेश जः' इति पठ्यते ।

३. अत्र १९ पृष्ठस्था ४ टिप्पणी द्रष्टव्या । ४. 'श्वेतितम्' पाठा० ।

५. 'प्रश्वेतितः' पाठा० । ६. क्वोऽत्र 'धर्मः' इत्यधिकम् ।

७. स्मृदमिदं पुरुषकारे (पृष्ठ ८२) धातुवृत्तौ (पृष्ठ १२०) च ।

८. तथा च प्रयुज्यते—'न क्ष्वेडेत्' । मनु० ४।६४॥

इयत्त् । ण्यन्ताल्ल्युः (द्र० ३।१।१३४) रोचना । अलंकृञ्निराकृञ् (३।२।१३६) इतीष्णुच्—रोचिष्णुः । युजिरुचितिजां कुश्च (उ० १।१४६) इति रुक्मम् । इसिः—रोचिः । इक् कृष्यादिभ्यः (३।३।१०८ वा०)[1] रुचिः । अस्त्यर्थे रुचिरम् ॥७३२॥

४९५. घुट परिवर्तने । घोटते । अघुटत्, अघोटिष्ट । घोटकः घुटिका गुल्फास्थि ॥७३३॥

४९६. रुट दीप्तौ । रोटते ॥७३४॥

४९७. रुठ लुठ प्रतीघाते[2] । [ रोठते, ] लोठते । अलुठत्, अलोठिष्ट । लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ्यः । रुट लुट इत्येके, बाध रोटने (१।६) इति लिङ्गात्[3] ॥७३५,७३६॥

४९८. शुभ दीप्तौ । शोभते । अशुभत्, अशोभिष्ट । शोभना । के—शुभम् । ज्ञापकात्[4] शोभा । रक्—शुभ्रम् । उणादौ शुकः, शुक्रः, शुल्कः । तुदादौ शुभ शुम्भ शोभार्थे (६।३१) शुभति ॥७३७॥

४९९. क्षुभ संञ्चलने । सञ्चलनं रूपान्यथात्वम् । क्षोभते । अक्षुभत्, अक्षोभिष्ट । क्षुब्धस्वान्त (७।२।१८) इति क्षुब्धो मन्थे साधुः[5] । क्षुभितोऽन्यः । दिवादौ (४।१३१) क्षुभ्यति । क्र्यादौ (९।४९) क्षुभ्नाति ॥७३८॥

५००. णभ तुभ हिंसायाम् । नभते । तोभते । क्र्यादौ (९।५०) नभ्नाति, तुभ्नाति । नभुर् (दशा० उ० ६।४९) नभः ॥७३९॥

५०१. स्रन्सु ध्वन्सु भ्रन्सु अवस्रंसने । स्रंसते । नीवन्युधन्तु

---

१. जर्मनसरकारसम्पादकेन 'लीबिशेन' भारत्यात्र उणादिसूत्रसङ्ख्या (४।११९) प्रत्ता, उणादौ नैतादृक् सूत्रं नास्ति । २. 'प्रतिघाते' पाठा० ।

३. उद्धृतमिदं पुरुषकारे (पृष्ठ ६४) धातुवृत्तौ (१३०) च । एतेनार्थनिर्देशोऽपि पाणिनीय इति ज्ञायते ।

४. शुभ शुम्भ शोभार्थे इति तुदादौ (सूत्र ३३) शोभेति पाठात् । अत्र 'निपातनाद्' इति युक्ततरः पाठः स्यात् । वक्ष्यति च स्वयमेव तुदादौ 'अत एव निपातनात् शोभा साधुः ।

५. 'मन्थश्चेत्' पाठा० ।

(तु० ७।४।८४) इति सनीस्रस्यते। वसुस्रंसुध्वंस्वनडुहो[1] दः (तु० ८।२।७२) उखास्रत्। स्रस्त्वा स्रंसित्वा। क्तिन् थावादिभ्यः (३।३।९४ वा०) स्रस्तिः। ध्वंसते। दनीध्वस्यते। पर्णध्वत्। ध्वस्तिः। ध्वस्त्वा, ध्वंसित्वा। ध्वस्तः। भ्रंशते। भ्रष्टिः। बनीभ्रश्यते[2]। भ्रष्ट्वा भ्रंशित्वा। भ्रष्टः। दिवादौ (४।११०) भ्रश्यति ॥७४०-७४२॥

५०२. ध्वन्सु गतौ च।

५०३. स्रम्भु विश्वासे। विस्रम्भते[3]। व्यस्रभत्, व्यस्रम्भिष्ट ध्वन्सुः इति कौशिकः—ध्वंसते, ऊष्मान्तप्रस्तावात् ॥७४३॥

५०४. वृतु वर्तने। वर्तनं स्थितिः। वर्तते वर्तनः[4]। अवृतत् अवर्तिष्ट। वृद्भ्यः स्यसनोः (१।३।९२) वा परस्मैपदम्। न वृद्भ्यश्चतुर्भ्यः (७।२।५९) इति तत्रैव नेट्—वर्त्स्यति। वर्तिष्यते। अवर्त्स्यत्, अवर्तिष्यत। विवृत्सति, विवर्तिषते। वृत्वा, वर्तित्वा। वृत्तः, वृत्तिः, वृत्यः। वृत्तिरस्त्यस्याम्—वार्त्तः[5]। वृतेश्च (उ० २।१७) इत्यनिः—वर्तनिः। मनिन् (दश० उ० ६।७१)—वर्त्म। वेरध्ययने वृत्तम् (७।२।२६)। हस्ते वर्तिग्रहोः (३।४।३९) णमुल्—हस्तवर्तं वर्तयति। रक् (द्र० उ० २।१६) वृत्रः। वार्ताकः। वर्तकः। वर्तका शकुनौ प्राचाम् (७।३।४५ वा०) उदीचां वर्तिका। इगुपधात् किः (दश० उ० १।४७) इतीन्—वर्तिः। दिवादौ वृतु वरणे (४।५०) इत्येके—वृत्यते। चुरादौ (१०।१९७) भासार्थः—वर्तयति ॥७४४॥

५०५. वृधु वृद्धौ। वर्धते। ण्यन्तात्ल्युः (द्र० ३।१।१३४) सुखवर्धनः। वृद्ध्वा, वर्धित्वा। वृद्धः, वृद्धिः। इष्णुच्—वर्धिष्णुः। वृधिवपिभ्यां रन् (उ० २।२७)—वर्ध्रः। चुरादौ भासार्थः (१०।१९७) वर्धयति। तत्रैव वर्ध छेदनपूरणयोः (१०।२०४) ॥७४५॥

---

१. '०ध्वन्स्वनडुहां दः' इति काशिकादिषु पाठः।

२. एतेन 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसु०' इत्यादिसूत्रे 'भ्रंशु' इति पाठः स्वामिमते इति ज्ञाप्यते। अन्ये त्वत्र धातुसूत्रे (५०१) अष्टकसूत्रे च 'भ्रंसु' इत्येव पठन्ति। अत्र धातुवृत्तिरपि द्रष्टव्या (पृष्ठ १२१)।

३. विपूर्व एव विश्वासे इति ज्ञापनार्थो विपूर्वस्य प्रयोगः।

४. 'वर्तनम्' पाठा०। ५. अत्र 'वृत्तेश्च' (५।२।१०१) वार्तिकेन णः प्रत्ययः।

५०६. शृधु शब्दकुत्सायाम् । शब्दकुत्सा पायुशब्दत्वात्[1]। शर्धते । अशृधत् अशर्धिष्ट ॥७४६॥

५०७. स्यन्दू स्रवणे[2] । स्यन्दते । अस्यदत्, अस्यन्दिष्ट । स्यन्त्स्यति, स्यन्दिष्यते । स्यन्तुम्, स्यन्दितुम् । अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु (८।३।७२) इति वा षत्वम्—अनुष्यन्दते तैलम्, अनुस्यन्दते । स्यदो जवे (६।४।२८) साधुः । विभाषा[3] स्कन्दस्यन्दोः (६।४।३१) नेट्—स्यन्त्वा । युच्—स्यन्दनः । स्यन्देः सम्प्रसारणं धश्च (दश० उ० २।९६) इति सिन्धुः ॥७४७॥

५०८. कृपू सामर्थ्ये । कृपो रो लः[4] (तु० ८।२।१८) कल्पते । अक्लृपत् अकल्पिष्ट । कल्प्स्यति कल्पिष्यते । चिक्लृप्सति चिकल्पिषते । लुटि च क्लृपः (१।३।९३) इति वा परस्मैपदम् । तासि च क्लृपः (७।२।६०) इति नेट्—कल्प्तासि कल्पितासे । कल्प्तुम् कल्पितुम् । क्लृप्तम् । ऋदुपधाच्चाक्लृपिचृतेः (३।१।११०) इति निषेधाण्ण्यत्—कल्प्यम् । कृतृकृपिभ्यः कीटन् (उ० ४।१८५) कृपीटं वारि । चुरादौ कृपेस्तादर्थ्ये (१०।१८६) आगर्वीयः—कल्पयते ॥७४८॥

५०९. वृत् । वर्तनं वृत् । द्युतादिर्वृत्तोऽस्मिन्नान्तर्गणौ वर्तितौ समाप्तावित्यर्थः । वृधेः क्विप्, वर्धितौ पूर्णावित्येके ॥

५१०. घट चेष्टायाम् । चेष्टा ईहा । घटते । घटितम् । घटादयो मितः (१।५५३) इति मित्त्वान्मितां ह्रस्वः (६।४।९२) घटयति । घटनः । इह येऽन्यत्र पठितास्तेषां योऽर्थ उपात्तस्तत्रैव मित्त्वम्, येऽत्रैव पठ्यन्ते तेषां सामान्येन, अनेकार्थत्वात् । अतो विघटयतीति चेष्टाभावेऽपि ह्रस्वः । कथम्—कमलवनोद्घाटनं कुर्वते ये (सूर्यशतक १), प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव (किरात २।४६) चुरादौ घट स्फुट घट च हन्त्यर्थाः[5]

१. 'पायुशब्दः' पाठ० । २. 'प्रस्रवणे' पाठ० ।

३. 'क्त्वाया चेट् प्रतिषेधः' इति महाभाष्यवचनात् अल्लोपो नापि भवति ।

४. 'कृपो रो लः' इत्येव भाष्यसम्मतः सूत्रपाठ इति ऋलृक्सूत्रभाष्याज्ज्ञायते । तत्त्वबोधिनीकारेण स्वामिसम्मतः पाठोऽर्वाचीनपाठः इत्युक्तः (द० सि० कौ० भाग ३ पृष्ठ १७६) । ५. 'हन्त्यर्थाः' पाठ० ।

(द्र० धा० सू० १०।१६९) इति घटिन        हतौ च (धा० सू० १०।८२) इत्यमित् । क्षपादयो (द्र० धा० सू० १०।७७–८१)येऽधीतास्तेभ्योऽन्ये स्वार्थणिचि न मित इत्यर्थः, तेन शम लक्ष आलोचने (धा० सू० १०।१४४) निशामयते, अम रोगे (धा० सू० १०।१६७) आमयतीत्यादि सिद्धम् । चेटादयस्त्रयो हन्त्यर्थवृत्तयो णिचमुत्पादयन्तीति तु दर्शने एभ्यो घञन्तेभ्यो णिच्, इत्यत्र—'उद्घाटिताखिलमहीधरकन्धरस्य' तथा चौरस्योत्क्राथयति इति सिद्धम । संक्रामयतीति तु संक्रामन्तं करोतीति (द्र० धा० सू० १०।२६९) इति णिच् । 'चपयित्वा धनसम्पदमम्बुशोषः कृतः सविता' तथा 'मज्जचपिताऽङ्गना च' इत्यविगानात् क्षपिरचुरादौ अदन्तोऽभ्यूह्य[1] विभाषा चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (६।४।९३) अघाटि अघटि, घाटं घाटम्, घटं घटम । अभिधानलक्षणत्वात् कृत्तद्धितसमासानां णमुल् घटादीनां मित्वात्(द्र० धा० सू० १।५२२) षिद्भिदादिभ्योऽङ् (३।३।१०४), शकधृष (३।४।६५) इति तुमुन्—घटते भोक्तुम् । घटः । इह घटादौ केऽप्यत्र पठिताः प्रकृत्यादिविषयाः न्याय्यविकरणाश्च[2] । अन्ये तु व्याख्यानोक्तकार्यभाज. मित्त्वमित्त्वार्थमनूद्यन्त इति यथायथमुन्नेयम् ॥७४९॥

५११. व्यथ भयचलनयोः । दुःखचलनयोरिति दुर्गः । व्यथते । व्यथयति । अव्याथि अव्यथि, व्याथं व्याथम, व्यथं व्यथम् । व्यथा । व्यथो लिटि (७।४।६८) इत्यभ्यासस्य सम्प्रसारणम्—विव्यथे । राजसूयसूर्य (३।१।११४) इत्यव्यथ्यः कर्तरि साधुः । ग्रहादौ व्यथवदवसा प्रतिषिद्धानाम्[4] (तु० ३।१।१३४ गणसूत्र) अव्याथी । अनसपूर्वाद् युच् व्यथनः । व्यथे. प्रसारणं किच्च (उ० १।४० उज्ज्व०)—विथुरो राक्षसः ॥७५०॥

१. अनुपलब्धमूलमिदम् ।

२ चुरादिगणे 'बहुलमेतन्निदर्शनम्' (सूत्र ३२४) इत्यस्य व्याख्याने क्षीरस्वामिना 'चप प्रत्ये' उदाहरणरूपेण पठितः । स च देवराजयज्वना निघण्टुवृत्तौ (पृष्ठ ८३, १०९) दैवव्याख्यात्रा च पुरुषकारे (पृष्ठ ९५) उद्धृतः ।

३. 'न्याय्यविकरणार्थं.' पाठ० ।

४. गणसूत्रे तु व्यथिस्थाने 'व्रजिः' पठ्यते ।

५१२. प्रथ प्रख्याने । प्रख्यानं प्रसिद्धिः । प्रथते । प्रथयति । प्रथा । अत् स्मृदृत्वरप्रथ (७।४।९५) इत्यभ्यासस्यात्वम्—अपप्रथत् । प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च (उ० १।२८ श्वेत०) पृथुः । प्रथे. षिवन् सम्प्रसारणञ्च (उ० १।१३६ श्वेत०) पृथिवी । अलीकादौ (द्र० उ० ४।२५) पृथ्वीका[1] । प्रत्तिः[2] । प्रथेरमच् (उ० ५।६८) प्रथमः ॥७५१॥

५१३. पृथु विस्तारे । पर्यन्ते । प्रथे सम्प्रसारणात् (द्र० उ० १।२८) अनार्षमपु मन्यन्ते ।[3] एवं मृदुनातौ ( द्र० धा० सू० ९।४५ ) सति म्रदिम्[4] (द्र० धा० सू० १।५१५) ॥७५२॥

५१४. प्रस प्रसवे । प्रस विस्तारे[5] इति दुर्गः ॥७५३॥

५१५. म्रद मर्दने । म्रदते । म्रदयति । अमम्रदत् । प्रथिम्रदि (उ० १।२८) इति मृदुः । मृद्वीका । क्र्यादौ मद क्षोदे (९।४५) मृदुनाति, अमीमृदत् अममर्दत्[6] ॥७५४॥

५१६. स्खद स्खदने । स्खदन विदारणम्[7] । स्खदयति ॥७५५॥

५१७. क्षजि गतिदानयोः । अस्य पाठोऽनुपधाया अपि चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (द्र० ६।४।९३) एतदर्थमेव तत्र ह्रस्वविकल्पे कर्तव्ये दीर्घ-

---

१ 'पृथीका' पाठा० । प्रथधातो कीकन्प्रत्यये सम्प्रसारणे वुगागमे च 'पृथ्वीका' सिध्यति, । एवं म्रद मर्दने (१।५१५) सूत्रे मृद्वीका ।

२ द्र० उ० ४।१८ श्वेत, नारा० द्र० उ० १।७५ ।

३. स्मृतमिदं पुरुषकारे (पृष्ठ ७७) धातुवृत्तौ (पृष्ठ १३४) च ।

४. पूर्वहेतुविरुद्धमेतद् वचनम् । यथाहि पूर्वत्र 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं (उ० १।२८) इति वचनात् पृथेरनार्षत्वं प्रतिपादितं, तथैव म्रदेरपि सम्प्रसारणविधानात् मृदनातेरनार्षत्वं वक्तव्यम्, न तु मृदनातिं स्वीकृत्य म्रदेः ।

५ 'प्रस विस्तारे' इति काशकृत्स्नधातुपाठ (पृष्ठ १३०) ।

६ 'अत्स्मृदृत्वरप्रथम्रद' (७।४।९५) इति शपानिर्देशात् मृदनातेर्णिचि चङि अत् न भवति । तेन 'उभ्र्त्' (७।४।७) इत्येव प्रवर्तते ।

७. 'स्खदन विदारणमिति स्वामी' इति धातुवृत्तावुद्धृतः पाठः (पृष्ठ १२४) ।

विधिः । एवं दक्षिक्रन्दिक्लन्दिक्लदीनां (१।५१९, ५२०) ज्ञेयम् । षजेति कौशिकः । चुरादौ षजि कृच्छ्रजीवने (१०।७५) षञ्जयति ॥७५६॥

५१८. दक्ष गतिहिंसनयोः । दक्षते । दक्ष वृद्धौ शीघ्रार्थे च (१।४०१) इत्यस्यैवार्थभेदाद् घटादिकार्यार्थं पुनः पाठः ॥७५७॥

५१९. क्रप कृपायाम् । क्रपते । क्रपयति । क्रपेः सम्प्रसारणञ्च (तु० ३।३।१०४ ग० सू०) इति कृपा । उणादौ कृपणः ॥७५८॥

५२० कदि क्रदि क्लदि वैक्लव्ये । विक्लवः कातरः । वैक्लव्य[1] इति चन्द्रः[2] (१।५२०) । क्रन्दते, क्रन्दा । कद, क्रद, क्लद इति नन्दी[3]—कदा । कदि क्रदि क्लदि आह्वाने रोदने च (१।५८) इति परस्मैपदिनः—क्रन्दति ॥७५९-७६१॥

५२१. ञित्वरा सम्भ्रमे । सम्भ्रमोऽत्राशुकारिता । त्वरते । त्वरयति । त्वरा । अतत्वरत् । त्वरित्वा । क्विपि—तूः । ञीतः क्तः (३।२।१८७) निष्ठायां रुष्यमत्वरसंघुषास्वनाम् (७।२।२८) इति वेट्—तूर्णः, त्वरितः । इदं चादित्त्व प्रपञ्चार्थम्[4] । तूर्णिः । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (दश० उ० १।२१) तूर्णिः ॥७६२॥

५२२. घटादयः षितः । दर्शितं षित्त्वफलम् । अत्र पूर्वा दश पठिताः, दक्षक्रन्दादयस्तु चत्वारः स्थानान्तरपठिताः कार्यार्थमनूदिता इत्येके ॥

४२३. उदात्ता अनुदात्तेतः ॥

५२४. ज्वर रोगे । इतः फणान्ताः (१।५६१) षट्त्रिंशत् सेटः परस्मैपदिनश्च । ज्वरति । ज्वरयति । अज्वारि, अज्वरि । ज्वारं

---

१. चान्द्रधातुपाठे (१।५२०) 'वैक्लव्ये' इति मुद्रितः पाठः । स चापपाठः प्रतीयते ।

२. उद्धृत पुरुषकारे (पृष्ठ ८१) धातुवृत्तौ (पृष्ठ १३५ भ्रष्टः पाठः) च ।

३. उद्धृत पुरुषकारे (पृष्ठ ८१) ।

४. आदितश्च (७।२।१६) इति सूत्रं निष्ठायां नित्यमिण्निषेधार्थम्, इह तु रुष्यमत्वर (७।२।२८) इत्यनेन प्रत्ययविधौ विकल्प उच्यते । तथा सति आदित्करणमनर्थकमेव, तत्रान्यत् किंचिदादितः फलम् इति भावः ।

ज्वारम्, ज्वरं ज्वरम् । ज्वरितः । जूः । जूर्तिः । बीज्याज्वरिभ्यो निः।उ० ४।४८) जूर्णिः । अज्वरेरिति निषेधात् रुजार्थानाम् (२।३।५४) इति षष्ठी नास्ति—चोरं ज्वरयति ज्वरः ॥७६३॥

५२५. गड सेचने । गडति । गडयति । गडुः । गडोऽपि । इत्र स्नपिति गौर्गडी[1] । गडेरादेश्च कः (उ० ३।१०६) कडत्रम् । गडेः कड च (दशा० उ० ७।२२) इति कडारः पिङ्गः (?, पिङ्गलः) ॥७६४॥

५२६. हेड वेष्टने । हेडति । हिडयति । पाठसामर्थ्याद्[2] ह्रस्वः—अहिडि अहेडि, हेडं हेडम्, हिडं हिडम् । अन्ये ह्रस्वं कृत्वा चिण्णमुलोर्वा दीर्घमाहुः—अहीडि अहिडि; हीडं हीडम्, हिडं हिडम् ॥७६५॥

५२७. वट भट परिभाषणे । वटयति, भटयति । वट वेष्टने, भट भृतौ (१।२०३,२०६) इत्याभ्यां वाटयति भाटयति ॥७६६,७६७॥

५२८. नट नतौ[3] । नटति । नटयति शाखाम् । नृतौ तु (द्र० १।२०९) नाटयति[4] । चुरादौ नट अवस्यन्दने (१०।१२) अस्माच्च चौ रस्योनाटयति ॥७६८॥

५२९. चक तृप्तौ प्रतिघाते च[5] । चकति[6] । चकयति । चकितः । कठिचकिभ्यामोर. (दश उ० ८।२९) चकोरः । चक तृप्तौ (१।७४) इत्यस्य चकते ॥७६९॥

५३०. ष्टक स्तक प्रतिघाते । स्तकति । तिष्टकयिषति, तिस्तकयिषति ॥७७०,७७१॥

---

१. अनुपलब्धमूलम् ।

२. अय भावः—णिज्निमित्त यत्र गुणवृद्धिभ्यां दीर्घत्वं भवति तत्रैव 'मितां ह्रस्वः', 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६।४।९२,९३) इति सूत्रे प्रवर्तेते । इह तु स्वभावसिद्ध एकारः, न तु णिज्निमित्तः । अत आह—दीर्घपाठसामर्थ्याद् इति भाव । ३. 'गतौ' पाठा० ।

४. स्मृतमिद पुरुषकारे (पृष्ठ ६७) धातुवृत्तौ (पृष्ठ १३६) च ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ४२) धातुवृत्तौ (पृष्ठ १३६) च । 'तृप्तौ' इत्येव काश० धातु० (पृष्ठ १३८) । ६. द्र० पुरुषकारः (पृष्ठ ४२) ।

५३१. कखे हसने । कखति । कखयति । एदित्वात्—अकखीत् । उणादौ किखिर्लोमशः[1] ॥७७२॥

५३२. रगे शङ्कायाम् । रगति । अरगीत् । रगडस्तालः ॥७७३॥

५३३. लगे सङ्गे । लगति । लगयति । अलगीत् । क्षुब्धस्वान्तध्वान्तलग्न (७।२।१८) इति सक्ते लग्नः साधुः, लगितोऽन्यः ॥७७४॥

५३४. ह्रगे ह्लगे षगे स्थगे संवरणे । संवरणमाच्छादनम् । स्थगति । स्थगयति । तिष्ठगयिषति, तिस्थगयिषति च । षगे स्तगे इति दुर्गः ॥७७५-७७८॥

५३५. कगे नोच्यते । अस्यायमर्थ इति नोच्यतेऽनेकार्थत्वात् । नोच्यत इति योऽर्थस्तत्रार्थे कगिरित्येके[2] ॥७७९॥

५३६. अक अग कुटिलायां गतौ । अकति । अगति । पृषोदरादौ न अगम् ओकं[3] गतिं घ्नन्तीत्यनोकहो[4] वृक्षः । अगति । अगम ॥ ७८०, ७८१॥

५३७. कण रण गतौ । अनयोर्गत्यर्थयोर्मित्त्वम् । शब्दे तु काणयति ॥७८२,७८३॥

५३८. चण श्रण दाने । चणति । चणयति । चणकः । गतिहिंसार्थाच्च चाणयति । श्रणति । श्रणयति । चुरादौ (१०।३८) । विश्राणयति । श्रण विश्राणने (१०।१७९) विश्राणनादन्यपयस्विनीनाम् (रघु० २।५४) । शण इत्यपि दुर्गः—शणः शाणः ॥७८४,७८५॥

५३९. श्रथ क्रथ क्लथ हिंसार्थाः । क्रथति । क्रथयति ।

---

१. पथपाठा दशपाठा च 'किखि' पदं न प्राप्यते । भोजीयोणादौ 'किखिर्लोमशी' (स० क० २।१।१६६) हैमोणादौ 'किखिर्लोमशः' (सू० ६२६) इत्युक्तम् । हरदत्तस्तु 'अपचितपरिमाणः शृगालः किखी' इत्युक्तवान् ( पदमञ्जरी ३।३।१) ।

२. काशकृत्स्नीये धातुपाठे 'कगे गतौ' पठ्यते (पृष्ठ १३१) ।

३. 'अकम्' पाठा० । सिमिरोन 'ओकं' इति शुद्धः पाठान्तरे न्यस्तः ।

४. द० भोजीयम् 'अनेरोकहः' (स० क० २।३।१८६) सूत्रम्, हैमोणादिसूत्रं (५९४) च ।

५. 'इष' इत्यधिकं क्वचित् ।

चुरादौ (१०।२१८) चौरस्योत्क्राथयति । घञन्तात्णिजिति चन्द्रदुर्गौ,[1] नात्क्राथपिषाम् (२।४।५६) इति लिङ्गाच्च ॥७८६-७८८॥

५४०. चनु च । चकाराद् हिंसार्थः । चनति । चनयति॥७८९॥

५४१. वनु च नोच्यते[2] । तथा अनुकर्षणार्थश्चकारः । यद्वा न केवलं कणे, यावद् वनु च नोच्यते क्रियासामान्यवाचित्वात्[3] । वनति । वनयति । वत्वा, वनित्वा । वतः । सम्वननम् । वन षण भक्तौ (१।३११) इत्यस्य वानयति ॥७९०॥

५४२. ज्वल दीप्तौ । ज्वलति । ज्वलयति । अग्रे (द्र० १।५६८) ज्वलादिकार्यार्थः पाठः ॥७९१॥

५४३. ह्वल ह्मल चलने । ह्वलति । ह्वलयति । विह्वल ॥७९२,७९३॥

५४४. स्मृ आध्याने । आध्यानमुत्कण्ठा । स्मरति । स्मरयति । चिन्तायां (द्र० १।६६०) स्मारयति, विस्मारयति । अन्यप्रोक्तानामर्थविशेषे मित्त्वार्थं इह पाठः ॥७९४॥

५४५. दॄ भये । दरति । दरः । दरद् रोमकदेशः[3] । बालं दरयति । क्र्यादौ दॄ विदारणे (९।२१)—दृणाति, दारयति काष्ठम् । तस्यैव मित्त्वार्थं इह पाठ इत्येके[4] । दिवादौ दीर्यतीति पञ्चिका । कर्मकर्तरि दीर्यत इत्येके ॥७९५॥

---

१. चन्द्रगोमी धातुपाठे चुरादौ 'क्रथ हिंसायाम्' इत्येत धातु न पठति । तदभावे च 'षष्ठी सम्बन्धे' (चान्द्र व्याक० २।१।९५) इति सूत्रव्याख्याने 'चौरस्योत्क्राथयति, चौरमुत्क्राथयति' इति प्रयोगसिद्धये 'घटादित्वात् क्रथयतीति प्राप्नोति । क्रथनं क्राथः, क्राथ करोति क्राथयति' इत्येव व्याख्यातवान् । उत्तरोत्तर धातुपाठेषु धातूनां संक्षेपात् पूर्वव्याकरणानुसार धातुनिष्पन्नानपि शब्दान् उत्तरे वैयाकरणाः कथ नामधातोर्व्युत्पादयन्ति इत्येतदत्र स्पष्टम् । वस्तुतस्तु भगवता पाणिनिना नामधातोर्निष्पादिताः प्रयोगा अपि धातुजा एव । एतदेव सञ्चिन्त्य महाभाष्यकारेण नामधातुप्रकरणेऽसकृदुक्तम्—"धातव एवैते ·· ··न चैव सर्वा या दृश्यन्ते, क्रियावचनता च गम्यते" (३।१।८, ११, १३) ।

२. 'वनु चनु स्मरणे' इति काशकृत्स्न. (पृष्ठ १४०) ।

३. 'दर्दिस्तान' नाम्ना सम्प्रति प्रसिद्धः । ४. स्मृतमिदं धातुवृत्तौ (पृ३१२८) ।

५४६. नॄ नये । क्र्यादेर् (९।२३) मित्त्वार्थं विरलोऽस्य पाठः । नृणन्तं प्रयुङ्क्ते नरयति ॥७२६॥

५४७. श्रा पाके । अदादे (२।४५) श्रै पाके (१।६४८) इत्यस्य वेह मित्त्वार्थः पाठः[1] । श्राति श्रायति वा कश्चित् तं प्रयुङ्क्ते श्रपयति चरुं चैत्रेण, अन्यत्र श्रापयति धर्मः, स्वेदयतीत्यर्थः ॥७२७॥

५४८. मारणतोषणनिशानेषु ज्ञा[2] । निशानमुत्तेजनम् । निशामन इत्येके पेठुः । ज्ञा अवबोधने (९।३७) इत्यस्य क्र्यादिर्मारणादौ मित्—संज्ञपयति पशुम्, विष्णुं विज्ञपयाम्यहम्, प्रज्ञपयति शास्त्रम्[3] । अन्यत्र-राजानं विज्ञापयति, अवबोधने ज्ञापयति, शास्त्रं प्रज्ञापयतीति ज्ञानार्थे । तोषणे—एवमाज्ञप्तोऽस्मि सामाजिकैः[4] । कथम् प्रशंसामात्रो ज्ञीप्स्यते, ज्ञप ज्ञीप्सायाम् (६।११४) इति ज्ञापकाद् ह्रस्वोऽत्र आप्ज्ञप्यृधामीत् (७।४।५५) इति कृतह्रस्वस्येत्वात्, चुरादौ ज्ञपिर् (१०।७७) अण्यन्तहेतुमण्णिजर्थः ज्ञीप्सत्यर्थे । इत्येके । चुरादौ ज्ञा नियोजने (१०।१७८) अस्मात्—धातवश्च ज्ञानविशेषार्थमात्[5] इति ।

५४९. कम्पने चलिः । ज्वलादौ (१।५६९) पठितस्यापि अस्येह मित्त्वार्थः पाठः । इकार उच्चारणार्थः[6] । प्रचलयति लताम् । अन्यत्र—चालयति शीलम्, हरतीत्यर्थः[7] ॥

५५०. छदिर् ऊर्जने । छद संवरणे (१०।३७) इत्यस्य चुरादि-

---

१. स्मृतमिदम् पुरुषकारे (पृष्ठ २१) ।

२. 'ज्ञः' पाठा० । एतद्विषये पुरुषकारो ऽत्र द्रष्टव्यः (पृष्ठ १८) ।

३. 'प्रज्ञपयति रामम्' इत्युदाहरणं धातुवृत्तौ (पृष्ठ १३९) प्रदर्शितम् ।

४. अनुपलब्धमूलमिदम् । कस्यचिन्नाटकस्य सूत्रधारवाक्यमेतत् स्यात् । तुलनीयम्—'आज्ञापितोऽस्मि परिषदा' इति मुद्राराक्षसे, 'अभिहितोऽस्मि विद्वत्परिषदा' इति मालविकाग्निमित्रे ।

५. अनुपलब्धमूलमिदं वाक्यम् ।

६. 'इक्श्तिपौ धातुनिर्देशे' (३।३।१०८ वा०) इति वचनात् धातुनिर्देशार्थं इक्प्रत्ययः, नोच्चारणार्थं इकारः ।

७. उद्धृतमिदं सिद्धान्तकौमुद्याम् (भा० ३, पृष्ठ १८७) । धातुवृत्तौ तु 'शीलं चालयति अन्यथा करोतीत्यर्थ इति स्वामी' इत्येवमुद्धृतम् (पृष्ठ १३९) ।

(६।४।२४ वा०)—रजयति मृगान्। रमयति, भ्रमयति, संक्रमयति, विश्रमयति ॥

५५५. ज्वल-ह्वल-ह्मल-चल[1]-नमामनुपसर्गाद्वा । एषां नित्यं मित्त्वं प्राप्तम्, अनुपसर्गाणां विकल्प्यते । ज्वालयति, ज्वलयति । ह्वालयति, ह्वलयति । ह्मालयति, ह्मलयति । चालयति, चलयति । नामयति, नमयति । सोपसर्गाणां तु नित्यम्—प्रज्वलयति, विह्वलयति, प्रह्मलयति, प्रचलयति, प्रणमयति[2] ॥

५५६. ग्ला-स्ना-वनु-वमाञ्च[3] । आद्ययोरप्राप्तौ विकल्पः, अन्ययोः प्राप्तौ । एषामनुपसर्गात् मित्त्वं वा । ग्लपयति, ग्लापयति । स्नपयति, स्नापयति । वनयति, वानयति । वमयति, वामयति । अनुपसर्गादित्येव-प्रग्लापयति, प्रस्नापयति, उपवनयति, उद्वमयति ॥

५५७. न कम्यमिचमाम् । एषाममन्तत्वात् प्राप्ता मित्संज्ञा निषिध्यते । कामयते । आमयति । आचामयति[3] ॥

५५८. शमोऽदर्शने । शमु उपशमे (४।९५) इत्यस्य दर्शनादन्यार्थे[4] मित्संज्ञा । अमन्तत्वात् सिद्धौ[5] नियमार्थं वचः । शमयति रोगम्, निशमयति श्लोकम् । दर्शने तु—निशामयति रूपम् । निःशङ्करमिदं तीर्थं भरद्वाज निशामय[6] पश्येत्यर्थः ॥

५५९. यमोऽपरिवेषणे । यम उपरमे (१।७०५) इत्यस्य परिवेषणा

---

१ स्मृतं प्रक्रियाकौमुद्याम् ( भाग २, पृष्ठ ३२४ ) ।

२ 'विनमयति' पाठा० ।

३ काशकृत्स्नधातुपाठे 'ग्लास्नावनुवमश्वनकम्यमिचमः' इत्येवं सूत्रपाठः । तत्र 'श्वन' इति स्वतन्त्रो धातुः । कम अम चम एषामपि विकल्पेन मित्संज्ञा विधीयते । व्याख्यातं चैतत् टीकाकारेण—कमयति कामयति, अमयति आमयति, चमयति चामयति (पृष्ठ १४२) ।

४. स्मृतमिदं पुरुषकारे (पृष्ठ १०१) धातुवृत्तौ (पृष्ठ १४०) च । दृश्यतां च सि० कौ० (भाग ३, पृष्ठ १९३) । ५. 'प्राप्तौ' पाठा० ।

६. रामायण पश्चिमोत्तर शाखा (लाहौर संस्क०) बालकाण्ड २।४॥ तत्र 'भारद्वाज' इत्यपि पाठान्तरम् ।

दन्यत्रैवार्थे मित् संज्ञा ।[1] यमयति, नियमयति । परिवेषणे तु यामयति श्राद्धेऽन्नम्[2], आयामयति चन्द्रम्[3] । अत्रैव स्खनोऽवतंसने इति दुर्गः—स्खनयति चक्रम् ॥

५६०. स्खदिर् अपपरिभ्याञ्च[4] । आभ्यामेवोपसर्गाभ्यां स्खदिः मित्[5] । अपस्खदयति परिस्खदयति । अवेति—श्रीभोजः अवस्खदयति । अन्योपसर्गपूर्वान्नास्ति—प्रस्खादयति ।

५६१. फण गतौ । फणति, फणयति । फणाञ्च सप्तानाम् (६।४।१२५) इत्येत्वाभ्यासलोपौ[6] वा—पफणुः, फेणुः । गतेरन्यत्र—फाणयति, घटं निःस्नेहयतीत्यर्थः[7] । क्षुब्ध-स्वान्त-ध्वान्त (७।२।१८) इत्यनायासे फाण्टं साधु । फणेः पूर्वे[8] घटादय इत्येके[9] ॥७९८॥

५६२. उदात्ता उदात्तेतः ॥

[सेट् उभयपदी]

५६३. राजृ दीप्तौ, उदात्तः स्वरितेत् । राजते, राजति,

---

१. द्र० 'तत्र च क्षीरस्वाम्यादिपक्षे ... ' इत्यादि पुरुषकारे (पृष्ठ १०१) । दूषितं च स्वामिमतं धातुवृत्तौ (पृष्ठ १४१), सिद्धान्तकौमुद्यां (भाग ३ पृष्ठ १९४) च । काशकृत्स्नधातुपाठस्य कन्नडटीकायामन्यथा व्याख्यायते (पृष्ठ १४४) ।

२. 'अन्न' क्वचित् ।

३. 'यमोऽपरि ... चन्द्रम्' इत्येतावदुद्धृतं पुरुषकारे (पृ० १००) ।

४. 'स्खदिर् अवत्या च' इत्येवं काशकृत्स्नधातुपाठसूत्रम् । 'अवत्या स्खादा, चात् परिवेषणे च मित्' इत्येवं तट्टीकायां व्याख्यातम् (द्र० पृष्ठ १४४) ।

५. इयं व्याख्या धातुवृत्तौ (पृष्ठ १४१) दूषिता ।

६. 'वक्तव्यौ' इत्यधिकः क्वचित् ।

७. 'अन्यत्र फाणयति, सक्तून् स्नेहयतीत्यर्थः इति स्वामिसम्मताकारौ' इति सायणः (धा० वृ० पृष्ठ १४१) । क्षीरतरङ्गिण्यां नैतादृशः पाठ उपलभ्यते ।

८. 'पूर्वे' पाठा० ।

९. काशकृत्स्नधातुपाठे 'फण गतौ' इत्यनन्तरम् 'वृत् घटादयो मानुबन्धा एकत्वे' इति सूत्रं पठ्यते । तत्र 'एकत्वे' इत्यस्यार्थो न परिज्ञायते । कन्नडटीकायामपि सम्यङ् न व्याख्यायते । 'एकत्वे' इत्यस्य कदाचिद् 'एकस्मिण्णौ' इत्यभिप्रायः स्यात् । तथा सति द्वितीये णिचि किं 'घाटयति' इति रूपमिष्टम् ?

राजिता । रराजुः रेजुः । आनकः शीङ्भियः (उ० ३।८२) इति पृथङ्-निर्देशाद्[1] राजानकः[2] । कनिन् (उ० १।१५६) राजा । राजेरन्यः (उ० ३।१००)—राजन्यः ॥७९९॥

[सेट आत्मनेपदिनः]

५६४. भ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, उदात्ता अनुदात्तेतः । भ्राजते, बभ्राजे, भ्रेजे । टुवमयस्येत्येके[3] । ट्वितोऽथुच् (३।३।८९) भ्राजथुः । भ्राजिभासोर्यदित्वं नेच्छन्ति[4] पक्षे ह्रस्वस्येत्वम्—अबभ्राजत् अबिभ्रजत् । नञ्चेनच् (उ० २।९२) इति—भ्राना (?) । वा भ्राशभ्लाश (३।१।७०) इति श्यन्—भ्राशते भ्राश्यते, भ्लाशते भ्लाश्यते । भ्राशथुः, भ्लाशथुः ॥ ८००-८०२॥

[सेटः परस्मैपदिनः]

५६५. स्यमु स्वन स्तन ध्वन शब्दे । इतः क्षमूषन्ता (१।५८८) अष्टाविंशतिः सेटः परस्मैपदिनश्च । स्यमति । स्येमुः सस्यमुः । उणादौ (द्र० ३।४६) स्यमीका क्रिमिः । स्वनति । स्वेनुः सस्वनुः । वेश्च स्वनो भोजने (८।३।६९) षत्वम्—विष्वणति, अवष्वणति । स्वनयति । स्वनान्तः घटादिः । स्तनति, स्तनयति । ध्वनति, ध्वनयति । स्तन इति चन्द्रः[5]—निष्टनयति ॥८०३-८०६॥

५६६. षम ष्टम अवैक्लव्ये । समति । समः । विषमः । सम-यति । स्तमति, स्तमयति ॥८०७, ८०८॥

---

१. प्रत्ययाः पृथगेव निर्दिश्यन्ते ततोऽसङ्गतोऽयं निर्देशः । कदाचिदत्र 'प्राङ्निर्देशाद्' इति युक्तः पाठः स्यात् । तुलना कार्या—'प्राक्प्रत्ययनिर्देशात्……' दश० उणा० वृत्ति पृष्ठ २४०, ४२४ ।

२. एतन्नामका बहवो विद्वांसः काश्मीरेष्वभवन् ।

३. काशकृत्स्नचान्द्रधातुपाठयोरस्य धातोः 'टु' नैव पठ्यते । न्यासकारमैत्रेयसायणादयः पठन्ति ।

४. क इति न प्रतिपादितम् । ह्रस्वविकल्पविधायके सूत्रे भ्राजेः पाठदर्शनादिष्टिरेवैषा विज्ञेया ।

५. मुद्रिते चान्द्रधातुपाठे (१।५५९) 'स्यमु स्वन ध्वन शब्दे' इत्येव पाठ उपलभ्यते । क्षीरस्वामिवचनादत्र स्वनः परः 'स्तन' धातुः भ्रष्ट इति प्रतीयते ।

५६७. ष्टल । घटादय एतदन्ता इति सभ्याः[1] ॥

५६८. ज्वल दीप्तौ । ज्वलति । ज्वलिता । ज्वलितिकसन्तेभ्यो णः (द्र० ३।१।१४०) वा—ज्वालः, ज्वाला, ज्वलः ॥८०९॥

५६९. चल कम्पने । चलति । चलितः । चलनः । चालः, चलः । चरचलवद (तु० ६।१।१२ वा०) इति चञ्चलः । यङ्लुक्यपि विकल्पः[2]—चाचलः चञ्चलः[3] । चलिः कम्पने[4] (१।५४१) णौ मित्—चलयति । चुरादौ चल भृतौ (१०।६३) चालयति ॥८१०॥

५७०. जल घात्ये[5] । घात्यं जडत्वम्, अतैक्ष्ण्यमित्यर्थः[6] । जलति । जालम्, जलम् । व्यवस्थितविकल्पत्वाद् भिन्नेऽर्थे प्रत्ययौ । चुरादौ जल अपवारणे (१।२०) जालयति । लडयोरेकत्वाज् जडः ॥८११॥

५७१. टल ट्वल वैक्लव्ये[7] । विक्लव एव वैक्लव्यम् । टलति॥

५७२. स्थल स्थाने । ष्ठल इति चन्द्रः[8] (३।५६५) स्थलति । स्थालम्। स्थाली । स्थलम् । स्थली ॥८१४॥

५७३. हल विलेखने । विलेखनं कर्षणम् । हलति । हाला सुरा । हालम्, हलम् । हन् (दश० उ० १।४६) हलिः, हडि. ॥८१५॥

५७४. णल गन्धे । गन्धोऽर्दनम् । प्रणलति । नालम् । नाला पद्मादीनां वृन्तम् । नाली, नाडी । प्रणालः, प्रणाली, प्रणाडिका । नलः, नडः ॥८१६॥

---

१. स्मृतं धातुवृत्तौ (पृष्ठ १४१)।

२. अभ्यासस्य आगामस्य इति शेषः ।

३. आगागमाभावे 'नुक्' केन भवति इति न स्पष्टीकृतं क्षीरस्वामिना । स्त्रीग्रामस्य व्याख्यानेऽपि 'चञ्चला' पद न साधु व्याहृतम् ।

४. अर्थतो अनुवादः ।

५. जल धान्ये इति काशकृत्स्ने (पृष्ठ १०६) चान्द्रे (१।५६२) च पाठः । धार्द्रीकरणं च तदर्थः इति कन्नडटीकातोऽवगम्यते ।

६. 'धाननं तदन्यम्' इति क्षीरस्वामी इति धातुवृत्तौ (पृष्ठ १४४) पाठः ।

७. मैत्रेयमाधवादयः 'वैक्लव्ये' इत्याहुः । तथैव काशकृत्स्नचन्द्रावपि ।

८. काशकृत्स्नधातुपाठेऽपि 'ष्ठल' इत्येव पठ्यते (पृष्ठ १४६) ।

५७५ पल गतौ । पालः । पलं मांसम् । पललं तिलकल्कः । गाः पालयति—गोपालः । चुरादौ पल रक्षणे (१०।६४)—पालयति ॥८१७॥

५७६. वल प्राणने । प्राणनं जीवनम् । वलति । वालः, वाला अजादौ (३।१।१३४) । वलः, वलम् । चुरादौ (१०।८०) मित्—वलयति । ५७७. धान्यावरोधने च । धान्यमवरुध्यते यत्रेति कुसूलेऽर्थे—वलटः । वल संवरणे[1] (१।३२९) त्वात्मनेपदी—वलते ॥८१८॥

५७८. पुल महत्त्वे । पोलति । पोलः । विपुलम् । पुलः । पुलोऽस्यास्तीति[2] [ पुली[3] । तलिपुलिभ्यां च (उ० २।५३) ] पुलिनम् । कुपिपुलोः किन्दच् (तु० उ० २।८५) पुलिन्दः । पिनाकादौ (द्र० उ० ४।१५) पुलाकस्तुच्छधान्यम् । इक्[4] पुलिः । पुलकः । तुदादौ[5] पुलति । चुरादौ (१०।५७) पोलयति ॥८१९॥

५७९. कुल संस्त्याने बन्धुषु च । संस्त्यानं संघातः । कोलं बदरम् । कक्कोलः, कङ्कोलम् । कुलम् । नकुलः । तमिनिवि (दश० उ० ८।१११) इति कालन्—कुलालः ॥८२०॥

५८०. शल[6] हुल पत्लृ गतौ । शलति । शाला । शलः । शलल श्वाविल्लोम । शलभकः । शल्यम् । शल्मलिः । शल्भः । शलकः । शलाका । शालूकम् उत्पलादिकन्दः । शल चलनसंवरणयो

---

१. 'वल संवरणे' दन्त्योष्ठ्यादिः । तस्मात् ओष्ठ्यादौ निर्देशो भ्रान्त्या बोध्यः ।

२. इतोऽग्रे कश्चित् पाठस्त्रुटितः प्रतिभाति । नहि 'पुलोऽस्यास्तीत्यर्थे' 'पुलिनम्' समवति 'पुली' इति प्राप्नोति । अस्माभिः त्रुटितपाठपूरणाय प्रयतितम् ।

३. केचन वनादौ (५।२।११६) पुलशब्दं पठन्ति । द्र० गणरत्न० २६३ ।

४. पूर्वसम्पादकेन लिबिशेन अनोणादि ( ४।१४२ ) सत्स्था तुलनाय निर्दिष्टः । न चोणादौ 'इक्' प्रत्ययः श्रूयते । अथ तु 'इक् कृष्यादिभ्यः' इति वार्तिके (३।३।१०८) पठ्यते । वार्तिकमिदमबुद्ध्वा लिबिशोऽसत्कल्पनां कृतवान् ।

५. मतमिदं पुरुषकारे (पृष्ठ १०४) उद्धृतम् । परन्तु क्षीरतरङ्गिण्यां नायं तुदादावुपलभ्यते । 'पुर अग्रगमने' इति तु सर्वैस्तुदादिषु पठ्यते ।

६. 'शल श्वल आशुगमने इति ज्वलादौ क्षीरस्वामी' इति पुरुषकारे (पृ० १०४) उद्धियते । अत्र न तथा पाठ उपलभ्यते ।

(१।३२८) इत्यस्यैव ज्वलादिकार्यार्थः पाठः । होलति । पतति । लृदित्वात् लुङि अङ्, पतः पुम् (७।४।१९) अपप्तत् । उत्पातः । निपातः । पातो राहुः । पतः । नेर्गदनद-(८।४।१७) इति णत्वम्—प्रणिपतति । सनीवन्तर्धभ्रस्ज (७।२।४९) इति वेट् सनि मीमाघु (७।४।५४) इतीस्-अभ्यासलोपौ (सू० ७।४।५८)—पित्सति, पिपतिषति । पतितः—यस्य विभाषा (७।२।१५) इतीण्निषेधो नास्ति द्वितीयाश्रितातीतपतित (२।१।२४) इति लिङ्गात् । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—उत्पतिष्णुः । सुयजोर्ङ्वनिप् ... लषपतपद (३।२।१५४) इत्युकञ्—प्रपातुकः । विशिपतिपदिस्कन्दाम् (३।४।५६) इति णमुल्—गेहानुप्रपातमास्ते । दाम्नी (३।२।१८२) इति ष्ट्रन्—पत्त्रम् । पतिचण्डिभ्यामालञ् (उ० (१।११६) पातालम् । पतेरङ्गच् पक्षिणि (उ० १।४११) पतङ्गः । पतेरश्वन्सः (उ० ३।७४)—पत्सलः । यमिनिभ्य (उ० ३।१०५) इत्यत्रन्—पतत्रम् । वीपतिभ्यां तनन् (उ० ३।१५०) पत्तनम् । पतस्थ च (उ० ४।१२) इतीनिः—पन्थाः । शलिपतिपदिभ्यो निर् (सु० उ० श्वेन० ४।१५) पताका । स्पृहिगृहि (३।२।१५८) इति सूत्रात् पतयालुः ॥ ५८१. हुल हिंसासंवरणयोश्च । होलः, हुलः, हुल्लिः, हुल्डिः उणादौ हुलुर्मेघः[1] ॥८२१-८२३॥

५८२. कथे निष्पाके[2] । कथति । अकथीत् । काथः, कथः । अस्त्यर्थे (सू० ५।२।११५) काथिका यवागूः ॥८२४॥

५८३. पथे गतौ[4] । पथति । अपथीत् । पाथः, पथः ॥८२५॥

५८४ मथे विलोडने[5] । मथति । अमथीत् । माथः, मथः ।

---

१. 'हुडुः' पाठा० ।

२. अत्र 'मेघ' इति पाठो युक्तः प्रतिभाति । अमरटीकायां (२।६।७६) मेषपर्यायव्याख्यानान्त 'हुडुः' नामापि पठति क्षीरस्वामी । तस्मादत्र 'हुडुर्मेषः' इति युक्तः पाठः । ३. 'कथे विपाके' इति काशकृत्स्नधातुपाठे (पृष्ठ १४८) ।

४. काशकृत्स्नः 'पल शल पथ पथा गतौ च' इति पठति (पृष्ठ १४८) ।

५. 'मथे विलोडने—मथति... मथकः...' इत्यादि काशकृत्स्नीय-धातुपाठे तट्टीकायां च पाठः (पृष्ठ १४८) ।

मन्दिवाशि (उ० १।३८) इत्युरच्—मथुरा । मन्थ मन्थे[1] मन्थति । क्र्यादौ (९।४२) मथ्नाति ॥८२६॥

५८५. टुवम उद्गिरणे । उद्गिरणं भुक्तस्योर्ध्वगतिः । वमति । वामः, वमः । वमथुः[2] । वमिनः । उदित्त्वेके[3]—वान्त्वा वमित्वा । ववृषुः खलु वान्ताशी[4] । न शसदद (६।४।१२६) इति ववमुः । ग्लास्नावनुवमां च (१।५५६) इति वा मित्त्वम्—वामयति, वमयति । जिदृक्षि (३।२।१५७) इनीनिः—वामी । नोदात्तोपदेशस्य (७।३।३४) इति निषेधे प्राप्तेऽचमिकमि—वमीनाम् (७।३।३४) इति वृद्धिः, ण्वुल्—वामकः । वामयतेर्ल्युट्—योग-वामनम् । न वमतीत्यवमः । घञ्—वामः । अस्त्यर्थे (द्र० ५।२।१००) वामनः । वामी अश्वा ॥८२७॥

५८६. भ्रमु चलने । वा भ्राशभ्लाश (३।१।७०) इति वा श्यन्—भ्रमति भ्राम्यति । वा जॄभ्रमुत्रसाम् (६।४।१२४) इत्येत्वाभ्यासलोपौ—भ्रेमुः बभ्रमुः । भ्रान्त्वा, भ्रमित्वा । भ्रान्तः । णे—भ्रामः । भ्रम इति दुर्गः । भ्रमेश्च डः[5]—अभ्रमुः । इन् (दशपा० उ० १।४६) भ्रमिः । भ्रमेः सम्प्रसारणं किच्च (तु० उ० ४।१२१) इति भूमिर्वायुः । अर्तिकमिभ्रमि (उ० ३।१३२) इत्यरन्—भ्रमरः । दिवादौ (४।९९) शमाद्यर्थः पाठः—भ्राम्यति ॥८२८॥

५८७. क्षर सञ्चलने । क्षरति । क्षरिष्यति । क्षारः । क्षारी—णेऽप्यपुंस्त्वं कश्चिद्[6] इति ङीप् । क्षरः । अक्षरम् ॥८२९॥

५८८. क्षल सञ्चये च । सञ्चलने च । क्षलति । चुरादौ क्षल शौचे (तु० १०।५३) क्षालयति ॥८३०॥

---

१. नैतादृशः कश्चिद् भ्वादौ पठ्यते । मन्थ हिंसासंक्लेशनयोः पूर्वम् (१।३७) पठ्यते ।
२. 'वमथुः' क्वचिन्नास्ति ।

३. तुलनीयम्—'टुवमु उद्गिरणे' काशकृत्स्नपाठः (पृष्ठ १४८) ।

४. अनुपलब्धमूलम् ।

५. नैतादृशं क्वचित्सूत्रमुपलब्धम् । अत्र नभ्रूराड् भ्रमेर्बहुलकात् डः प्रत्ययो द्रष्टव्यः ।

६. तुलना कार्या—ताच्छीलिके णेऽप्यपुंस्त्वं भवति । परिभाषावृत्ति सीरदेव, पृष्ठ १३३ ।

५८९. उदात्ता उदात्तेतः ॥

५९०. षह मर्षणे । मर्षणं क्षमा । अयम् ५९१. उदात्तोऽनुदात्तेत् । सेडात्मनेपदी च । सहते । सिसहिषते[1] । स्तम्भुसिवुसहां चङि (पा० ८।३।११६) इति षत्वम्—पर्यसीषहत, सः स्विदिस्वदिसहीनां च (८।३।६२) इति सत्वम्—सिसाहयिषति । परिनिविभ्यः (८।३।७०) इति षत्वम्—विषहते । सिवादीनां वाऽड्व्यवायेऽपि (८।३।७१) इति षत्वं वा—पर्यसहत पर्यषहत विसहनेऽर्थे इति साक्षात्प्रभृतिषु[2] पाठान्नास्ति[3] । तीषसह (पा० ७।२।४८) इति वेट्—सहिता, सोढा । विसोढा सोढः (८।३।११५) इति षत्वाभावः, सहिवहोरोदवर्णस्य (६।३।११२) सोढः । वर्णग्रहणात् साहेरपि सोढा, णिलोपे पूर्वत्रासिद्धे न स्थानिवत्[4] (१।१।५७ वा०) इति ढत्वादि । दाश्वान् साह्वान् मीढ्वांश्च (६।१।१२) इति क्वसौ साह्वान् । शकिसहोश्च (३।१।९९) इति यत्—सह्यम् । ल्युः (पा० ३।१।१३४) सहनः । सहेः पृतनर्ताभ्यां च (८।३।१०९) इति षत्वम्[5]—पृतनाषाट् तुराषाट्, सहेः साडः सः (८।३।५६) इति षत्वम्, षाड्रूपत्वाभावे नास्ति—तुराषाहं पुरोधाय (कुमारसम्भव २।१) इति, नहिवृतिवृषि (६।३।११६) इति दीर्घः । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—सहिष्णुः । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति ण्यन्तात् शः—साहयः । संज्ञायां भृतॄ (३।२।४६) इति खच्—सर्वंसहः । असुन् (द० उ० ९।४९) सहः । शकधृष (३।४।६५) इति तुमुन्—सहते भोक्तुम् । सहेः षष् क्विप् च—षट् । चुरादौ । (१०।२०४)

---

१ 'सिषहिषते' इति शुद्धः पाठः ।

२. काशिकायां साक्षादादिगणे (१।४।७४) 'विहसने' इति पठ्यते । गणरत्नमहोदधौ तु 'विसहने, विहसने' इत्युभयं पठ्यते (पृष्ठ ७७) ।

३. च्व्यमिति शेषः ।

४. जर्मनसंस्करणे 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यनन्तरमितिपदनिर्देशे सत्यपि वार्तिकमिममबुद्ध्वा पूर्वं सम्पादकेन 'पूर्वत्रासिद्धेन (८।२।१) स्थानिवत्' इत्येवं पाठो विहितः ।

५. 'सहेः पृतनर्ताभ्यां च' (८।३।१०९) इति सूत्रं 'पृतनाषाहम्, ऋताषाहम्' इत्यत्र षत्वविधायकम्, न त्वत्र ण्विविधायकम् । ण्विप्रत्ययस्तु 'छन्दसि सहः' (३।२।६३) इत्यनेन भवति । लिबिशमहोदयेन इयमशुद्धिर्न बुद्धा ।

आधृषाद् वा (१०।२०१) इति णिच्—सहति सातयति ॥८३१॥

५२२. रमु क्रीडायाम् । ५२३. अनुदात्तोऽनुदात्तेत् । अनिडात्मनेपदी च । रमते । व्याङ्परिभ्यो रमः, उपाच्च (१।३।८३,८४) परस्मैपदम्—विरमति, उपरमति । अन्तर्भावितण्यर्थोऽत्र सकर्मकः । विभाषाऽकर्मकात् (१।३।८५) यावद् भुक्तमुपरमते, उपरमति । यमरमनमातां सक् च (७।२।७३) व्यरंसीत् । रन्ता । रमणः । रमणी । रमः । रमा । रामः । रामा । रम्यः । स्तम्बकर्णयो रमिजपोः (३।२।१३) इत्यच्—स्तम्बेरमः । हनिकुषि (उ० २।२) इति क्थन्—रथः । रमेस्त च (तु० उ० ३।१४) इति रत्नम् । रमेर्देशे ह्रस्वश्च[1] रहः । रण्डा (क्रु० उ० १।११४) । रौ रमेः कः पूर्वस्य च दीर्घः (तु० उ० ५।२४) सूरतो सुधः । वसिरम्योरूप्चो-पधायाः (उ० २।१४) रुक्मम् ॥८३२॥

५२४. षद्लृ विशरणगत्यवसादनेषु[2] । विशारणम् शातनम्, अवसादोऽनुत्साहः । इतो लृदन्ताः (१।५१८) पञ्चानिटः परस्मैपदिनश्च । पाघ्राध्मा (७।३।७८) इति सदेः सीदः—सीदति । सिषत्सति । असदत् । सदेरप्रतेः (तु० ८।३।६६) इति षत्वम्—परिषीदति,—प्रतिसीदति । सदिस्वञ्ज्योः परस्य लिटि (८।३।११८)—निषसाद । लुपसदचर (३।१।२४) इति भावगर्हायां यङ्—सासद्यते । सत्सूद्विष (३।२।६१) इति क्विप्, पूर्वपदात् (८।३।१०६) इति षत्वम्—शुचिषत्, परिषत्, उपनिषत्, निषण्णः । सादी निषादी । वसिवपि (उ० ४।१२५) इतीञ् सादिः । घ—निषादः । घञ्—विषादः । सदोऽप्सि । नौ सदेः (उ० २।१२२) इति ष्वरच्—निषद्वरः पङ्कः । असुन् (द० उ० ९.४९) सदः सभाः । गुधृवीपचिवचि (उ० ४।१६७) इति मन्—सद्मम् । समजनिषद (३।३।९९) इति क्यप्—निषद्या विपणिः । सादकारयोः इञि (६।३।१२२ वा०) दीर्घः—प्रासादः । दाधेट्सि (३।२।१५९) इति रुः—सद्रुः ॥८३३॥

५२५. शद्लृ शातने । शातनं तनूकरणम् । पाघ्राध्मा (७।३।७८) इति शदेः शीयः । शदेः शितः (१।३।६०) इति तङानौ—शीयते । शत्स्य-

---

१. अत्र कश्चित् पाठत्रुटिः प्रतिभाति । "रमेश्च (उ० ४.२१४) इति रंहः । देशे ह्रस्व (रमे० उ० ४।२२०) रहः" इत्येवं पाठेनात्र भाव्यम् ।

२. रमूनं पुस्तकारे (पृष्ठ ८३) ।

(उ० ४।११९) इतीन्—रोहिमृगः । इगुपधेभ्य इतिः (उ० १।९७) रोहित् । रुहेरश्च लो वा (उ० ३।९४)—लोहितः, रोहितः, रोहिणी । अन्यत्रापि च (तु० उ० २।२६) इतीनच्—रोहिणः ॥८३७॥

५९९. अनुदात्ता उदात्तेतः ॥

६००. कुच सम्पर्चन-कौटिल्य-प्रतिष्टम्भ-विलेखनेषु । सम्पर्चनं मिश्रता, प्रतिष्टम्भो रोधनम्, विलेखनं कर्षणम् । संकोचयति । संकुचितः । के (द्र० ३।१।१३५) कुचः । घञ्—संकोच, उत्कोचः । न कादेः (७।३।५९) इति कुत्वं नास्ति ॥८३८॥

६०१. कस गतौ । कसति, उत्कसति । कासयति । विकसितः । कसः, कासः । नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकस (तु० ७।४।८४) इति चनीकस्यते । स्थेशभास (३।२।१७५) इति वरच्—विकस्वरः । पिस् कसि-पर्शिभ्यः (श्वे० उ० १।८३) ऊः—कासूः शक्तिः । शमि कस उकन् (श्वे० उ० २।३२)—संकसुकोऽस्थिरः ॥८३९॥

६०२. उदात्तानुदात्तेतौ । एतौ सेटकौ परस्मैपदिनौ च ॥

६०३. वृत् । ज्वलादयो वृत्ताः ॥

६०४. हिक्क अव्यक्ते शब्दे[1] । इतो गुहपर्यन्ताः (१।६३४) षड्विंशत्[2] सेट उभयतोभाषाश्च । हिक्कते, हिक्कति । हिक्का । हिक्कितम् ॥८४०॥

६०५. अचि गतौ[3] । अञ्चते, अञ्चति[4] । अञ्च्यते । अञ्चितः । अञ्चु गतौ (१।११६) अञ्चति, अच्यते । अक्तः । अचु इत्येके—अचति, अचित्वा, अक्त्वा, अक्तः ॥८४१॥

६०६. टुयाचृ याच्ञायाम् । याचते, याचति । अययाचत् ।

---

१. 'हिक्क गतौ' इति काशकृत्स्नः । संतोषगतौ इति तट्टीकाकारः (पृष्ठ १४०)।

२. 'त्रयस्त्रिंशत्' 'त्रयोविंशति' इत्यपपाठौ ।

३. इदमिदं पुरुषकारे (पृ० ४१) धातुवृत्तौ च (१५८) । 'अञ्चु [illegible] गतौ' इति काशकृत्स्नः । अञ्चुभ् व्यये गतौ च इति तु शाकटायनः ।

४. 'गतौ गतोपः' इति काशकृत्स्नसूत्रेण गतौ भवति । द्र० तट्टीका पृष्ठ १५१ ।

याचितः । यजयाच (७।३।६६) इति कुत्वाभावः—याच्यम् । ड्वितः क्त्रिः (३।३।८८) याचित्रिमम् । ट्विदिति दुर्गः[1]—याचथुः (द्र० ३।३।८९) । यजयाचयत (३।३।९०) इति नङ्—याच्ञा ॥८४२॥

६०७. रेट्ट परिमाषणे । रेट्टते, रेट्टति । अरिरेट्टत ॥८४३॥

६०८. चते चदे च याचने[2] । चकारो माषार्थे[3] रेट्टर्थः[4] । मन्दिवाशि (उ०।१।३८) इत्युरच्—चतुरः । चतेरान् (उ० ५।५८) चत्वारः । चतेर्यरच्[5]—चत्वरम् ॥८४४, ८४५॥

६०९. प्रोथृ[6] पर्याप्तौ । पर्याप्तिः पूर्णता । प्रोथते, प्रोथति । अपुप्रोथत् । प्रोथोऽश्वघोणा । प्रियं प्रोथमनुव्रजेत्[7] ॥८४६॥

---

१. काशकृत्स्नचन्द्रमैत्रेयसायणादय ट्वितं पठन्ति ।

२. अयमेव पाठश्चन्द्रस्य । काशकृत्स्नशाकटायनसायणानां 'याचने च' ।

३. 'भाषार्थं' क्वचित् । ४ धातोरुत्तर पठ्यमानश्चकारो रेट्टधातुमनुकर्षति । तेन 'रेट्ट' धातोः परिभाषण याचने चार्थः । इदमेव मत्वाह हेमचन्द्रः—रेट्ट (ग्) परिभाषणयाचनयोः (धातुपारा० १।८९७) । क्षीरस्वामिनस्त्वत्र पाठो व्यस्त इति प्रतिभाति । वय तु मन्यामहे 'चते चदे च याचने' इति कस्यचित्प्राचीनस्य श्लोक-बद्धस्य धातुपाठस्यायमशः । छन्दोऽनुरोधेन च चकारो भिन्नक्रमः, पूर्वधात्वर्थ समुच्चयार्थः । एव चाष्टाध्यायामपि दृश्यते—'पक्षिमत्स्यमृगान् हन्ति, परिपन्थ च तिष्ठति' इत्यत्रोत्तरसूत्रे इत्यर्थमनुष्याकश्चकारो मध्ये पठ्येत ।

५ उणादौ (२।१२१) च तेः ष्वरच्प्रत्ययो विधीयेत ।

६. काशकृत्स्नधातुपाठे 'प्रथृ पृथृ पृथु व्याप्तौ' (पृष्ठ १५३) इति त्रयो धातव. पठ्यन्ते । तथा सति पृथुपृथिव्यादिषु 'प्रथ विस्तारे' इत्यस्मात् सम्प्रसारण-विधानमनर्थकमेव । वस्तुतस्तु 'यज इज, वप उप, प्रथ, पृथ' इत्यादयो मूलतो द्वि-रूपाः धातवः । यास्कोऽपि 'तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद्द्विप्रकृतीना स्थानमिति प्रदिशन्ति । तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत । तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति' (निरुक्त २।२) इति वदन् द्विरूपान् धातून् स्वीचकार । यजमानार्थस्य इजधातोः प्रयोगोऽप्युपलभ्यते । यथा—'यानि यंश्चिदिहेज्यन्ति (महा० शान्ति० २६३।२९) इति ।

७. अनुपलब्धमूलम् । जिनेन्द्रनाथ महाभाष्यस्य (१।४।५६) सदृशा निर्दिष्टा, तत्रैतावान् पाठः ।

६१०. मिथृ मेथृ[1] मेधाहिंसनयोः । मेथते, मेथति । किति गुणविकल्पार्थं द्वौ—मिथ्यते, मेथ्यते । अमिमेथत् । मेथोऽस्त्रि । गौरादी (गण० ४।१।४१) मेथी । मेथीत्वश्चोऽपि हि भ्राम्यन् धामधाम करोति गौः (द्र० सुभाषितावली २९५८) । अमरसिंहस्तु—पुंसि मेथिः खले दारु न्यस्तं यत् पशुबन्धने । (२।९।२५) । मिद मेद इति दुर्गः ॥८४७,८४८॥

६११. मेधृ संगमे च । चकारात् मेधाहिंसनयोः । मेधते, मेधति । अमिमेधत् । मेधा । मेध्यम् । गृहमेधी । अश्वमेधः । मेधिः ॥

६१२. णिदृ णेदृ कुत्सासंनिकर्षयोः । प्रणेदति । निद्यते, नेद्यते । अनिनेदत् । णिद्द णेद्द इति प्राच्यो हेलाकिनः[2] ॥८५०,८५१॥

६१३. शृधु मृधु उन्दे । उन्दः क्लेदनम् । शर्धते, शर्धति । शृद्ध्वा, शर्धित्वा । शृद्धः । शृधु शब्दकुत्सायाम् (२।५०६) शर्धते । मर्धते मर्धति । मृधं समरः ॥८५२,८५३॥

६१४. बुध बोधने । बोधते, बोधति । बुधिर् इति नन्दी[3]—अबुधत्, अबोधीत् । बोधिता । पूर्वस्य (१।५९७) बोद्धा ॥८५४॥

६१५. उबुन्दिर् निशामने । निशामनमालोचनम्[4] । बुन्दते, बुन्दति । अबुदत्, अबुन्दीत् । बुत्वा, बुन्दित्वा । बुत्तः । धात्तोऽयमिति नन्दी[5] । उवेदिर् इत्यन्ये ॥८५५॥

६१६. वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वादित्रं वाद्यभाण्डम्, तस्य वादनार्थं ग्रहणम् । वेणते, वेणति, अविवेणत् । वातामारना ( उ० ३।१२८ ) इति वीणा । इन् ( दश० उ० १।४६ )

---

१. स्मृतोऽयं पाठः (धातुवृत्ति पृष्ठ १४६, पुरुषकार पृष्ठ ८०) । सि० कौ० मत्र द्रष्टव्या ।   २. अस्पष्टार्थोऽयं पाठः ।

३. काशकृत्स्नोऽपि इरिदितमाह (पृष्ठ १५४) अनिरितं चन्द्र (१।०९९) ।

४. 'चानुपज्ञानम्' इत्यधिकं क्वचित् ।

५. 'उचुन्दिर्' इति चन्द्र (१।६००) काशकृत्स्नधातुपाठे 'चुदिर् निशामने' इति पठ्यते (पृष्ठ १५४), परन्तु तट्टीकायां 'चुन्दति चुन्दते' इत्युदाहरणदर्शनात् 'चुन्दिर्' इति शुद्धः पाठो द्रष्टव्यः ।

दाश्यते—पुरोडाशः, पृषोदरादित्वात् (६।३।१०९) डत्वम्, एवं दुःखेन दाश्यते दूडाशः। दाशृ दान इति कौशिकः ॥८६१॥

६२२. अय गतौ। अयते। उदयति दिननाथः। (द्र० १।२१८)

६२३. भेपृ भ्रेपृ भये। ६२४. भ्रेपृ चलने च। भेपते, भेपति। अधिभेपत्। भेपयति। बिभेतेः (३।२) मुण्डो भीषयते (द्र० ७।३।४०)। भ्रेपते, भ्रेपति। भ्रेपः ॥८६३,८६४॥

६२५. अस गतिदीप्त्यादानेषु। असते, असति। लावण्य उत्पाद्य इवास यत्नः (कुमारसम्भव १।३५) इत्यत्र आस्यतेरसतेर्वेति वामनः (काव्यालं० ५।२।२७) असतेरित्येके। अदादौ अस भुवि (२।५८) अस्ति। [अष इत्येके[1]] ॥८६५॥

६२६. स्पश बाधनस्पाशनयोः। स्पाशनं ग्रन्थनम्[2]। स्पशते, स्पशति। संयमयतः स्पाशा रज्जुः[3] स्पशश्चरः। परस्परा उपोद्घातः। चुरादौ स्पश बाधने[4] (तु० १०।१३१) पश बन्धने (१०।१६६)—स्पाशयते, पाशयति। पष इत्येके[5]—पापः, पाषाणः ॥८६६॥

६२७. लष कान्तौ। कान्तिरिच्छा वा। भ्राशम्लाश (३।१।७०) इति वा श्यन्—अभिलष्यते, अभिलषते, अभिलष्यति अभिलषति। लषपत्पद (३।२।१५४) इत्युकञ्—अभिलाषुकः। लषेः श च (दश० उ० ५।१४) इत्युनन्—लशुनम् ॥८६७॥

६२८. चष भक्षणे। चषते, चषति। चाषः। चषकः। सानमिवर्यासि (उ० ४।१०७) इति चषालो यूपकटकः ॥८६८॥

---

१ उद्धृतमिदं धातुवृत्तौ (पृष्ठ १०८)। अत्र पाठस्त्रुटितः प्रतिभाति।

२. 'स्पश बाधनस्पर्शनयोः। स्पर्शनं ग्रथनम्' इति स्वामी (द्र० धातुवृत्तिः पृष्ठ १५८)।

३. द्र०—सैषोमयतः स्पाशा रज्जुर्भवति (महा० ६।१।६८)।

४. 'स्पश ग्रहणसंश्लेषणयोः' इति चुरादौ (१०।१३१) पाठः। तेन च 'भ्वादौ स्पश बाधने' इत्युक्तम्।

५. उद्धृतं धातुवृत्तौ (पृष्ठ १५८)। अत्र 'एके' पदेन दुर्गोऽभिप्रेतः। यदाह चुरादौ (१०।१६६) 'उभयत्रापि मूर्धन्यान्त इति दुर्गः'।

६२९. छप हिंसायाम । [छपते, छपति] ॥८६९॥

६३०. क्षप आदानसंवरणयोः । क्षपते, क्षपति । क्षपः । भष हिंसार्थः (१।४५८) क्षपति ॥८७०॥

६३१. ष्लक्ष भक्षणे[1] । प्लर्व इति दुर्गः ॥८७१॥

६३२. दाशृ दाने । दाशते, दाशति । दाशः । आद्यो (१।६२०) दाशृ, अयं दाश इत्येके ॥८७२॥

६३३. माहृ माने । मानं वर्तनम् । माहा गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । तङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१८) इति नेट्—जुघुक्षति । चङि ह्रस्वो नेष्यते—अजूगुहत् । गूढा, गूहिता । गूढः । भिदाद्यौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुहः । शंसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गूह्यम् । उणादौ—गह्वरः ( द्र० उ० ३।१ ) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति नेट्—श्रितः । श्रयुकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्राय । बाहुलकात्[3] पतनान्ताः समुच्छ्रया (रामा० २।१०५।१६)

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वहस्तलेखेषु वा पञ्चने 'श्राय श्रय.' इति चोदाहृियेते, कुतो वा महर्यं मवभाति ग्रन्थकार इति न ज्ञायते ।

३. कृत्यल्युटो बहुलम् ( ३।३।११३ ) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भाव । लिङ्गिशमद्देशेन खनदपरिज्ञाय चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०। ३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकितन्यायेनोत्तर-सूत्रस्थ विभाषाग्रहण संबध्नाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति निः—श्रेणिः। क्रिप् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिर् किच्च (दश० उ० ९।५४ कपाठः) इत्यङ्गुल-शिरः। श्राङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डिच्च—आश्रिः॥८७५॥

६३७. हृञ् हरणे। इतस्त्रैङ्पर्यन्ता (१।६८९) अष्टपञ्चाशद्धातवः, परस्मैपदिनश्च ञित्ङित्वर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये(७।२।७०) इतीट्-हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्थहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अभ्यायन्यायोद्यावसंहार(३।३।१२२) इति करणे घञ्-अध्याहारः। हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च (उ० ४।११९) हरिद् वर्णो ञिपि च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्-हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। वृहोः षुग्-दुकौ च (तु० उ० ४।१००) इति कयन्-हृदयम्। पद्दन्नादौ (अ० ६। १।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपेषि (तु० उ० ४।११९) इतीन् हरिः। अनिहृभ्यामिमनिन् (दश० उ० ६।७८) हरिमाणं च नाराय (ऋ० १.५०।११)। हृषमश्च (तु० दश० उ० ९।१७६) इति ईमनिन्-हरीमा। वेञो डिद्, ग्रे हरतेः कूने (दश० उ० २।६०,६३) प्रहिः। हृस्मयोः सेतुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सत्यमेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। छावी इत्यम् (१।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ग्रहदोरप् (३।३।५७)। भरितः। संज्ञायां भृतृ(३।२।४६)इति खच्-विश्वम्भरा। अवे भृञः (उ० २।३)-कयन्-अवभृथो यज्ञान्तः[3]। अपदुन्-कुसुम्भृनः (उ०

1. अत्र सिविरामहोदयेन कारिकायां (३।१।४१) एव निर्देशः कृतः, न त्वाकरग्रन्थस्य।
2. 'रिक्थहरः' इति तु शुद्धः पाठः।
3. सोमयागानां समाप्तौ क्रियमाणं स्नानमत्रभृथशब्देनोच्यते।

६२९. छप हिंसायाम् । [छपते, छपति] ॥८६९॥

६३०. झप आदानसंवरणयोः । झपते, झपति । झपः । भप हिंसार्थः (१।४५८) झपति ॥८७०॥

६३१. म्लक्ष भक्षणे[1] । प्लयं इति दुर्गः ॥८७१॥

६३२. दाश्ट दाने । दाशते, दाशति । दाशः । आद्यो (१।६२०) दाशृ, अयं दाश इत्येके ॥८७२॥

६३३. माहृ माने । मानं वर्तनम् । माहा गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । तङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१२) इति नेट्—जुघुक्षति । चङि ह्रस्वो नेष्यते—अजुगूहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुह । शसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गृह्यम् । उणादौ—गह्वरः ( द्र० उ० ३।१ ) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति वेट्—श्रितः । श्र्युकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रय.[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रया. (रामा० ९।१०५।१६)

---

१. उद्धृतमिद धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वहस्तलेखेषु वा पन्थने 'श्राय श्रय.' इति चोदाहृियेते, कुतो वा महर्ष सबभाति ग्रन्थकार इति न ज्ञायते।

३. कृत्यल्युटो बहुलम् ( ३।३।११३ ) इत्यत्र निर्दिष्टाद बहुलग्रहणादिति भाव॰ । लिबिशमहोदयेन त्वेनदपरिज्ञाय चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०। ३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकित यायेनोत्तर-सूत्रस्थं विभाषाग्रहण मन्यते ।

महा० शान्ति० २३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति णिः—श्रेणिः। श्रिञ् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिरः किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्—शिरः। आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डित्—आश्रिः॥८७५॥

६३७. हृञ् हरणे। स्वरितेत्पर्यन्ता (१।६८९) अपपठितनिर्दिष्टाः, परस्मैपदिनश्च ञित्त्वादुभयम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्—हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्तहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अध्यायन्यायोद्यावसंहाराश्च (३।३।१२२) इति करणे घञ् अध्याहारः। हृसृरुहियुषिभ्य इतिः (उ० १।९७) हरिद् वर्णो दिक् च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्—हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। हृञोः षुग्दुकौ च (हु० उ० ४।१००) इति कयन्—हृदयम्। पद्दन्नादौ (अ० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपिषि (हु० उ० ४।११९) इतीन्—हरिः। जनिहृञ्भ्यामिमनिन् (दश० उ० ६।७८) हरिमाणं च नाशय (ऋ० १।५०।११)। हृभृधृ (हु० दश० उ० ९।७६) इति ईमनिन्—हरीमा। वेञो डिद् प्रे हरतेः कूपे (दश० उ० २।१०,११) प्रहिः। कृहृभ्यामेणुः (हु० उ० २।१) हरेणुर्गन्धद्रव्यम्, सस्यभेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वादौ डुभृञ् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भॄ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतॄ (३।२।४६) इति खच्—विश्वम्भरा। अवे भृञः (उ० २।३) क्थन्—अवभृथो यज्ञान्तः[3]। [illegible] (उ०

१. अत्र लिबिरामहोदयेन काशिकायां (३।३।४६) एव निर्देशः कृत', न व्याकरणग्रन्थस्य। २. 'रिक्थहरः' इति तु शुद्धः पाठः।

३. सोमयज्ञानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

६२९. छप हिंसायाम् । [छपते, छपति] ॥८६९॥

६३०. झप आदानसंवरणयोः । झपते, झपति । झपः । भष हिंसार्थः (१४५८) झषति ॥८७०॥

६३१. भ्लक्ष भक्षणे[1] । प्लवं इति दुर्गः ॥८७१॥

६३२. दाश्ट दाने । दासते, दासति । दासः । आद्यो (१।६२०) दाशृ, अयं दाश इत्येके ॥८७२॥

६३३. माहृ माने । मानं वर्तनम् । माहा गौः ॥८७३॥

६३४. गुहू संवरणे । ऊदुपधाया गोहः (६।४।८९) गूहते, गूहति, अघुक्षत् । लङि तु लुग् वा दुहदिहलिहगुह (७।३।७३) इत्यगूढ अघुक्षत । सनि ग्रहगुहोश्च (७।२।१८) इति नेट्—जुघुक्षति । ण्यङि ह्रस्वो नेष्यते—अजूगुहत् । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३।१०४) गुहा गिर्योषध्योः । के (द्र० ३।१।१३५) गुहः । शसिदुहिगुहिभ्यः क्यप् वा (३।१।१०९ वा०) गुह्यम्, गूह्यम् । उणादौ—गह्वरः (द्र० उ० ३।१) गुहेर्गहिः—गहनम् ॥८७४॥

६३५. उदात्ताः स्वरितेतः ॥

६३६. श्रिञ् सेवायाम्, उदात्तः । श्रयते, श्रयति । श्रयिता । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) अशिश्रियत् । सनीवन्तर्ध (७।२।४९) इति नेट्—शिश्रीषति । शिश्रयिषति । यस्य विभाषा (७।२।१५) इति इति श्रितः । श्युकः किति (७।२।११)—श्रित्वा । श्रिणीभुवोऽनुपसर्गे (३।३।२४) वा घञ्—श्रायः, श्रयः[2] । उदि श्रयतियौति (३।३।४९) इति घञ्—उच्छ्रायः । बाहुलकात्[3] पतनान्ताः समुच्छ्रया. (रामा० १।१०५।१६)

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) ।

२. सर्वहस्तलेखेषु वा पाठाने 'श्राय. श्रयः' इति चोदाहृतेते, कुतो वा भ्रष्टं मवभाति मन्धकार इति न ज्ञायते।

३. कृत्यल्युटो बहुलम् (३।३।११३) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति भाव । लिलिद्रामहोदयेन त्वनदपरिज्ञाय चीरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०। ३२४) इति सूत्रस्य निर्देशः कृतः । काशिकाकारस्तु सिंहावलोकितन्यायेनोत्तरसूत्रस्थं विभाषाग्रहणं संबध्नाति ।

महा० शान्ति० ३३०।२०)[1]। वहिश्रिश्रु (दश० उ० १।२१) इति णिः—श्रेणिः। क्विब् वचिप्रच्छि (उ० २।५७) इति क्विब्दीर्घौ—श्रीः। श्मनि श्रयतेर्डुन् (उ० ५।२८) श्मश्रु। श्रयतेः स्वाङ्गे शिट् किच्च (दश० उ० ९।५४ कपाठः) इत्यसुन्-शिरः। श्राङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८) इतीन् डित्—अश्रिः॥८७५॥

६३७. हृञ् हरणे। इतश्चैङ्पर्यन्ता (१।६८९) अष्टषष्टिरनिटः, परस्मैपदिनश्च ञिन्ङिन्द्वर्जम्। हरते, हरति। हरतेर्गतिताच्छील्ये (१।३।२१ वा०) तङ्—पैतृकमश्वा अनुहरन्ते। व्यवहृपणोः समर्थयोः (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। ऋद्धनोः स्ये (७।२।७०) इतीट्-हरिष्यति। हृक्रोरन्यतरस्याम् (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। श्याद्व्यधा (३।१।१४१) इति णः—अवहारो ग्राहः। हरतेरनुद्यमनेऽच् (३।२।९) रिक्थहरः[2]। वयसि च (३।२।१०) कवचहरः। आङि ताच्छील्ये (३।२।११) पुष्पाहरः। हरतेर्दृतिनाथयोः पशौ (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। अभ्रेषन्यायोपाहारसहार(३।३।१२२) इति करणे घञ् अभ्याहारः। दस्रुवहियुषिभ्य इतिः (उ० १।९७) हरिद् वर्णो क्विप् च। श्यास्त्याहृञ् (उ० २।४६) इतीनच्-हरिणः। हृश्याभ्यामितन् (उ० ३।९३) हरितः। वृहोः षुग्-दुकौ च (तु० उ० ४।१००) इति कयन्-हृदयम्। पद्मादौ (द्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति। हृपेषि (तु० उ० ४।११९) इतीन् हरिः। जनिहृग्भ्यामिमनिन् (दश० उ० ६।७८) 'हरिमाणं च नाशय' (ऋ० १।५०।११)। हृभृश्च (तु० दश० उ० ६।७६) इति ईमनिन्-हरीमा। वेञो डिद्, प्रे हरतेः कूपे (दश० उ० १।६२,६३) प्रहिः। हृद्भ्यामेनुः (तु० उ० २।१) हरेणुर्गन्धद्रव्यम्, रास्यमेदश्च॥८७६॥

६३८. भृञ् भरणे। भरते, भरति। ह्वादौ डुभृञ् (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ भृ भरणे (९।२०) भृणाति। भरः ऋदोरप् (३।३।५७)। भरितः। संज्ञायां भृतॄ (३।२।४६) इति खच्-धिद्वरम्भरा। भृवे भृनः (उ० २।३)—कयन्—अवभृथो यज्ञान्तः[3]। अयडन्-भृस्तृभृमः (उ०

1. अत्र लिबिरामहोदयेन काशिकायां (३।३।४९) एव निर्देशः कृतः, न व्याकरणान्तरस्य।
2. 'रिक्थहरः' इति तु शुद्धः पाठः।
3. सोमयज्ञानां समाप्तौ क्रियमाणं स्नानमवभृथशब्देनोच्यते।

१।१२५) भरण्ड आप्लवनम्[1] । भृयम् । भृङ्गः । भुरिक् छन्दः । कुर्भ्रश्च (उ० १।२२) इति बभ्रुः । भरतः । मरुदेशः[2] ॥८७७॥

६३९. कृञ् करणे[3] । करते, करति । स्वादौ कृञ् हिंसायाम् (५।७) कृणुते, कृणोति । तनादौ डुकृञ् करणे (८।११) कुरुते, करोति । उणादौ कारुः, कारिः, करणिः सदृशः करेणु[1] क्रतु[1], करकः=फलत्यादिः, कृक , कर्कः=सितः, चक्रम्, करण्ड[1], कर्म, करम्भः, कृसरः ॥८७८॥

६४०. णीञ् प्रापणे । प्रापणमासादनम् । नयते, नयति । प्रणेता । संमानन (१।३।३६) इत्यात्मनेपदम्—नयते चार्वी[4] लोकायते । कर्तृस्थे चाशरीरे कर्मणि (१।३।३७) क्रोधं विनयति । प्रदिशदिनोषदीना प्रतिवेधार[5] ( ऋ० १।४।५२ वा० ) नाययति भारं ग्रामं चैत्रेण ।

विपूयविनीय (३।१।११७) इति विनीयः कल्के साधुः । आनाय्योऽनित्ये (३।१।१२७)—आनाय्यो दक्षिणाग्निः, आनाय्यो गोधुक्[1] । प्रणाय्योऽसम्मतौ[2] (३।१।१२८)—प्रणाय्यायान्तेवासिने ब्रह्म ब्रूयात् (तु० आ० उ० ३।११।५) असम्मतसंसारायेत्यर्थः । पाय्यसान्नाय्य (३।१।१२९) इति सान्नाय्यं हविः । इण्योरुपसर्गे (३।१।१४२) इति कर्तरि णः—नायः । श्रिणीभुवोऽनुपसर्गे (३।३।२४) घञ्—नायः । बाहुलकाद्[3] नयः । यवोदोर्नियः (३।३।२३)—प्रणायः, उन्नायः । परिन्योर्नीणोर्द्यूताभ्रेषयोः (३।३।३७)—परिणायः । आत्ममानायः (३।३।१२४) । सत्सूद्विष (३।२।६१) इति क्विप्—ग्रामणीः । दाम्नीशस (३।२।८२) इति ष्ट्रन्—नेत्रम् । स्फन् (द्र० उ० २।१३)—नीरम् । नप्तृनेष्टृ (उ० २।९६) इति नेष्टा ऋत्विक् । हनिकुषि (उ० २।२) इति क्थन्—सुनीथः । नयतेर्डिच्च (उ० २।१०१) इति ऋः—ना नरौ नरः । पानीविषिभ्यः प. (उ० ३।२३) नीपः । नियो मिः (उ० ४।४३)—नेमिः ॥८७९॥

९४१. धेट् पाने[4]। टकारः स्तनन्धयीत्यादौ ङीबर्थः[5] (द्र० काशिका २।३।२९) । धयति । विभाषा धेट्श्व्योः (३।१।४९) चङ्—अदधत्, अधासीत् । विभाषा घ्राधेट्शा (२।४।७८) इति सिज्लुक्—अधात् । पाघ्रा (३।१।१३७) इति शः—उद्धयः । नासिकास्तनयोर्ध्माधेटोः (३।२।२९) खश्—स्तनन्धयः । नाडीमुष्ट्योश्च (३।२।३०) मुष्टिन्धयः । दाधेट्सिशदसदो रुः (३।२।१५९) धारुर्गौः । धः कर्मणि ष्ट्रन् (३।२।१८१)—धात्री । धेट इच्च (उ० ३।३४) —धेनुः । ध्यायतेस्तु (१।६३७) धीः, धते

१. यथा तु महाभाष्यं तथा दक्षिणाग्नावेवेदं निपातनम्, तथापि यस्य दक्षिणाग्नेर्गार्हपत्यादभिधेय योनिस्तत्रैव । तेन वैश्यकुलादाहृते दक्षिणाग्नावपि 'प्रणेय' इत्येव भवति । गोधुक्शब्दार्थे 'आनाय्य' पदमन्यत्र न दृष्टम् ।

२. 'समते' पाठा० ।

३. कृत्यल्युटो बहुलम् (पा० ३।३।११३) इति बहुलवचनादिति भावः । एतदपरिज्ञाय लिबिशामबोदयेन अत्र 'बहुलमेतन्निदर्शनम्' (१०।३२४) इति धातुसूत्रस्य संख्या निर्दिष्टा ।

४. 'धयत्यादयोऽनुदात्ता उदात्तेतः' इति धातुवृत्तिः (पृष्ठ १८४) । तत्रोदात्तेत्त्वं सति सम्भवे ज्ञेयम् । ५. स्मृतं धातुवृत्तौ (पृष्ठ १६६) ।

(६।४।६६) धीतः[1] ॥८८०॥

६४२. ग्लै हर्षक्षये । हर्षक्षयोऽत्र धात्वर्थपचयः[2] । ग्लायति । वान्यस्य संयोगादेः (६।४।६८) इति लिङि एत्वम्—ग्लेयात्, ग्लायात् । ग्लास्नावनुवमां च (१।५५६) इति वा मित्त्वम्—ग्लपयति, ग्लापयति । संयोगादेरातो धातोर्यण्वतः (८।२।४३) निष्ठानत्वम्—ग्लानः । ग्लाजिस्थश्च क्स्नुः (३।२।१३९)—ग्लास्नुः । ग्लानुदिभ्यां डौः (उ० २।६४)—ग्लौश्चन्द्रः । ग्लाज्याहाभ्यो निः (३।३।९५ वा०) ग्लानिः । शकधृषज्ञाग्ला (३।४।६५) इति तुमुन्—ग्लायति भोक्तुम् ॥८८१॥

६४३. म्लै गात्रविनामे । विनाम कान्तिक्षयः । म्लायति । म्लेयात्, म्लायात् । म्लानः ; बाहुलकात्[3] म्लानिः ॥८८२॥

६४४. द्यै न्यङ्करणे[4] । न्यङ्ग कुत्सिताङ्गम् । द्यायति ॥ ८८३॥

६४५. द्रै स्वप्ने । द्रायति । स्पृहिगृहि, (३।२।१५८) इत्यालुच्—निद्रालुः । क्ते (द्र० ८।२।५३) निद्राणः । तारकादित्वात् (द्र० गण० ५।२।३६) निद्रितः । आतश्चोपसर्गे (३।३।१०६) अङ्—निद्रा । द्रा कुत्सायां गतौ (२।४६) द्राति, विद्राणः ॥८८४॥

६४६. ध्रै तृप्तौ । ध्रायति । ध्राणः । भाष्ये नत्वं नेष्यते[5]—ध्रातः ॥८८५॥

६४७. ध्यै चिन्तायाम् । अधीगर्थदयेशां कर्मणि (२।३।५२) षष्ठी—मातुर्ध्यायति । ध्यापयति स्वयमेवेति णेरणौ (१।३।६७) इति तङ् नास्ति, आध्याने निषेधात् । दुष्टं ध्यायति—दुर्ध्यः । आतोऽनुपसर्गे कः (३।२।३) ध्यो दाशानाशयमध्येषु (६।३।१०० वा०) इति दत्वमुत्वञ्च । आतश्चोपसर्गे कः (३।१।१३६)—आध्यायन्त्यनेनम् आध्यः । न ध्याख्यापृमूर्छि

1. 'धीतम्' पाठा० । 2 'वैतापयचये' पाठा० ।

3. कृत्यल्युटो बहुलम् (३।३।११३) इति बहुलवचनात् ।

4. 'न्यङ्के' पाठान्तरम् । 'न्यङ्गविमान' इति क्षीरस्वामी (धा० वृ० पृष्ठ १६७)। दै न्यङ्करणे । कुत्सितमङ्गं न्यङ्गम् इति हेमचन्द्रः (धातु० १।२६) ।

5. महाभाष्ये नैतादृशं वचनं क्वचिदुपलभ्यते ।

मदाम् (८।२।५७) इति न निष्ठानत्वम्—ध्यातः। उणादौ धीः[1]। ध्याप्योः सम्प्रसारणं च (उ० ४।११५) इति क्वनिप्—धीवा। छित्वरछत्वर (उ० ३।१) इति धीवरः। मां ध्यायति–मध्यः[2] आतोऽनुपसर्गे कः (३।२।३)। सन्ध्यायन्त्यस्याम् इति सन्ध्या[3] ॥८८६॥

६४८. रै शब्दे। रायति। इदाधारा (उ० ३।४०) इति कः—राका। राशदिभ्यां त्रिप् (उ० ४।६७) रात्रिः। रातेर्डैः (उ० २।६६)—रा धनम्। अदादौ रा दाने (२।४१) रातिः[4] ॥८८७॥

६४९. ष्ट्यै स्त्यै शब्दसंघातयोः। ष्ट्यायति[5]। स्त्यायति उभयोपदेशे उपादानाद् धात्वादेः षः सः (६।१।६४) नास्ति[5]। स्त्यः प्रपूर्वस्य (६।१।२३) इति सम्प्रसारणम्, प्रस्त्योऽन्यतरस्याम् (८।२।५४) इति वा निष्ठानत्वम्—प्रस्तीतः प्रस्तीमः। श्यास्त्या (उ० २।४६) इतीनच्—स्त्येनः। स्तेनयतेः (१०।२८७) स्तेनः। स्त्यायतेर्ड्रट् (उ० ४।१६५)—स्त्री ॥ ८८८,८८९॥

६५०. खै खदने[6]। खायति। ल्युटि खानम् आहुः[7] ॥८९०॥

१ नैतदुणादौ सिद्ध्यति। ध्यायतेः सम्प्रसारणं च (३।२।१७८ वा०) वार्तिकेनास्य सिद्धिर्भवति।

२. तुलनीयम्—'मां ध्यायतीति मध्यमिति धातुपारायणीयम्' इत्युज्ज्वलदत्तः (उ० सू० ४।११२)।

३. आतश्चोपसर्गे (३।३।१०६) इत्यङ् भवति।

४. इतोऽग्रे 'धनम्' इत्यधिकं क्वचिद्।

५. काशकृत्स्नधातुपाठीयकन्नडटीकायामपि 'ष्ट्यै' इत्यस्य 'ष्ट्यायति' इति षत्वाभावमेवोदाहृतम् (पृष्ठ ६२)। शाकटायनोऽप्येवमेव। पुरुषकारस्तु मतमिदं स्मृत्वा निराचकार (पृष्ठ १६)। सायणोऽपि तथैव प्रतिपेदे (धा० वृ० पृष्ठ १६८)।

६. खदनं स्थैर्यं हिंसा च इति सायणः (धा० वृ० [illegible] १६८)। काशकृत्स्नीयधातुपाठे 'खे खादने' इति पठ्यते, 'भक्षणार्थत्व च' तट्टीकायां व्याख्यायते (पृष्ठ ७०)

७. काशकृत्स्नधातुपाठीयकन्नडटीकायां 'खानम्' इत्युदाह्रियते (पृष्ठ ७०)। वाक्यमिदं क्वचिन्न।

६५१. क्षै जै सै क्षये । क्षायति । निष्ठायां क्षायो मः (८।२।५३) क्षामः । जायति । जाता[1] । सायति । साता । सायात्—स्यतेर्ग्रहणादेत्वं[1] न । असासीत्—स्यतेर्ग्रहणाद् विभाषा घ्राधेट् (२।४।७८) इति सिज्लुङ् नास्ति ॥८९१-८९३॥

६५२. कै गै शब्दे । कायति, गायति । एतौ शब्दविशेषे रूढौ[2] । इण्भीकापा (उ० ३।४३) इति कन्—काकः[3] । अगासीत् । इणादेशस्य तु गातिस्था (२।४।७७) इति सिज्लुक्[4]—अगात् । अचो यत् (३।१।९७) इति गेयः कर्तरि साधुः । गस्थकन् (३।१।१४६)—गाथकः । ण्युट् च (३।१।१४७) गायनः । गापोष्टक् (३।२।८) सामग उद्गाता । कमिमनिजनि (उ० १।७३) इति तुन्—गातुः । उषिकुषिगा (उ० २।४) इति थन्—गाथा । गश्चोदि (उ० २।१०) इति थक्-उद्गीथ ओंकारः । घुमास्थागापा (३।४।३६) ईत्वम्—गीतं गानम् । स्थागापापचो भावे (३।३।९५) गीतिः । गाङ् गतौ (१।६८०) गाते ॥८९४,८९५॥

६५३. श्रै श्रै पाके । श्रायति, श्रायति । श्रा पाके (१।५४७) मित्—श्रपयति । श्रातेः (२।४५) श्रपेश्च [ण्यन्तान्निस्थे] च शृतं पाके (६।१।२०) साधु ॥८९६,८९७॥

६५४. पै ओवै शोषणे । पायति । पिबादेशो (द्र० ७।३।७८) नेष्यते[4] । इह[5] पा पाने (१।६५७)—पिबति । अदादौ—पा रक्षणे (२।४८) पाति । वायति । ओदितश्च (८।२।४५) इति निष्ठानत्वम्—वानं शुष्कम् । कृवापा (उ० १।१) इति वायुः । अदादौ वा गतिगन्धनयोः (२।४२) वाति । चुरादौ वा गतिसुखसेवनयोः (१०।२६७) वापयति ॥८९८,८९९॥

६५५. ष्ट्यै वेष्टने । स्त्यायति । स्त्यायुः । अदादौ ष्ट्या शौचे (२।४५)—स्त्याति ॥९००॥

---

१. घुमास्था (६।४।६६) इति सूत्रे स्यतेर्ग्रहणाद् 'एर्लिङि' (६।४।६७) इत्येत्वं नेति भावः । २. स्मृतमिदं धातुवृत्तौ (पृष्ठ १९१) ।

३. कायतेः शब्दविशेषत्वद्योतनार्थमेव तिङन्तमध्ये काकपदनिर्वचनमुक्तम् ।

४. गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् (२।४।७७ वा०) इति वचनात् ।

५. भ्वादावित्यर्थः ।

६५६. दैप् शोधने । पकारो दाधाघ्वदाप् (१।१।२०) इति विशेषणार्थः । दायति । अवदातं मुखम् । इह[1] दाण् दाने (१।६६२)—यच्छति, देङ् रक्षणे (१।६८६) दयते, अदादौ दाप् लवने (२।५१) दाति । ह्वादौ डुदाञ् दाने (३।९) दत्ते, ददाति । दिवादौ दो अवखण्डने (४।३९) —द्यति ॥२०१॥

६५७. पा पाने । पाघ्राध्मा (७।३।७८) इति पिबः—पिबति । अदन्तत्वाद् गुणाभावः । घुमास्थागापा (६।४।६६) इतीत्वम्—पीयते । एर्लिङि (६।४।६७)—पेयात् । गातिस्थाघुपा (२।४।७७) इति सिज्लुक्—अपात् । शाच्छासाह्वा (७।३।३७) इति युक्—पाययते, न पादम्याङ्यमाङ्यस (१।३।८९) इति परस्मैपदं नास्ति[2] । लोपः पिबतेरीच्चाभ्यासस्य (तु० ७।४।४) इत्यपीप्यत्—ऋतौ कुण्डपाय्यः (सू० ३।१।१३०) साधुः । पाय्यसान्नाय्य (३।१।२९) इति पाय्यो माने साधुः । पाघ्राध्मा (३।१।१३७) इति शः—उत्पिबः । अनुपसर्गाणः (सू० ३।१।१४१) पचेति पायः । गापोष्टक्—सुरासीध्वोः पिबतेः (३।२।८ सू० वा०)—सुरापः । पानीयम् । घमर्थे कविधानम् (३।३।५८ वा०) —प्रपा । स्थागापापचो भावे (३।३।९५) पीतिः । कृवापाजि (उ० १।१) इत्युण् पायुः । पातृतुदि (उ० २।७) इति थक्—पीथः । ष्ट्रन् (दश० ८।७१) पात्रम् । मनिन् (दश० उ० ६।७१) पामा । पिबतेरी च (श्वेत० उ० ४।११२) इत्यसुन्—पयः । सिन्नेरसुन् (तु० उ० ४।२०२)—पायः अम्बु । पानीविषिभ्यः पः (उ० ३।२३)—पापम् । सानसिवर्णसि (उ० ४।१०७) इति पदनसम् । पाको[3] बालः । कलापकः[4] । पम्पा[5] सरः ॥२०२॥

६५८. घ्रा गन्धोपादाने । पाघ्रा (७।३।७८) इति जिघ्रः[6]—

---

१. गत्यादावित्यर्थः । २. कर्त्रभिप्राय इति शेषः ।

३. पर्विकम्पुधुक्पाका वयसि (उ० ५।५३) ।

४. द० दशपादी-उणादिवृत्तिः ३।५ ॥

५. द० दशपादी-उणादिवृत्तिः ७।७ ॥

६. पिबजिघ्रधमादयो वस्तुतः स्वतन्त्रा धातवः । अत एवार्धधातुकेऽपि जिघ्र-धातुरुपलभ्यते । यथा—गोभिलसूत्रे (२।८।२२,२४) अभिजिघ्रेत्, अभि—जिघ्रणं चेति ।

जिघ्रति । घ्रान्यस्य संयोगादेः (६।४।६८) इति वा एत्वम्—घ्रेयात् घ्रायात् । विभाषा घ्रा (२।४।७८) इति वा सिज्लुक्—अघ्रात् अघ्रासीत् । ई घ्राध्मोः (७।४।३१)—जेघ्रीयते । जिघ्रतेर्वा (७।४।६) इत्—अजिघ्रिपत् अजिघ्रपत् ॥९०३॥

**६५९. ध्मा शब्दाग्निसंयोगयोः** । शब्दे, मुखादिना चाग्निसंयोगे । पाघ्राध्मा (७।३।७८) इति धमः—धमति । शः (द्र० ३।१।१३७) विधमः । आध्मातः शङ्खः । नासिकास्तनयोर्ध्माधेटोः (३।२।२०) खश्—नासिकन्धमः । नाडीमुष्ट्योश्च (३।२।३०)—नाडिन्धमः । उग्रम्पश्येरम्मदपाणिन्धमाश्च (३।२।३७) । ध्मो धमश्च (द० उ० ३।३५) इति क्वुन्—धमकः । धर्तिधृधमि (उ० २।१०३) इत्यनिः—धमनिर्नाडी । बाहुलकात्[1] धमादेशः । धमिः प्रकृत्यन्तरमित्येके[2] । यथा—धान्तो[3] धातुः[4] पावकस्येव राशिः[5] ॥

**६६०. ष्ठा गतिनिवृत्तौ** । षत्तिष्ठादेशः (द्र० ३।७८) तिष्ठ-

---

हिरण्यकेशीये (२।४।१७) च 'धमिजिघ्र' इत्युपलभ्यते । एवमेव 'घ्रा' धातोरपि 'घ्राङि मातेश्च' इत्युणादिसूत्रे (४।६२) शितेपि सार्वधातुके जिघ्रादेशो न भवति । एवं धमेरपि । उत्तरधातुसूत्रव्याख्यान तट्टिप्पणी च द्रष्टव्या । एतद्विषये विशेषतः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायो (पृष्ठ ३८) द्रष्टव्यः ।

१. अत्र शिविरामहोदयेन 'बहुलमन्यत्रापि' (उ० २।३९) इत्युणादिसूत्रमपरिज्ञाय 'उणादयो बहुलम्' (३।३।१) इत्यस्य सत्ता निर्दिष्टा । तुलनीया दशपादुणादिवृत्तिः—तथा (बहुलं) ध्मश्चान्यत्रापि धमादेशो भवति'(द० उ० ३।६ पृष्ठ १३२) क्षीरस्वामी दशपादुणादिवृत्ति - शब्दतोऽर्थतो वा बहु गोद्धरति (द्र० क्षीर० भूमिका) ।

२. कस्येदं मतमिति न ज्ञायते । वस्तुतः पिबजिघ्रधमादीनि प्रकृत्यन्तराण्येवेत्युक्तम् । तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृतः । रामायणेऽपि 'विधमिष्यामि जीमूतान्' इति सुन्दरकाण्डे (६७।२२) प्रयुज्यते । अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या ।

३. दशपादुणादिवृत्तौ (३।९ पृष्ठ १३२) क्वचित् 'ध्मातः' पाठः, क्वचिद् 'धाता' । तथापि 'धान्त' इत्येव युक्तः पाठः । हैमोणादिवृत्तावपि 'धान्तः' इत्येव (१३, पृष्ठ ९) पठ्यते ।

४. दशपादुणादिवृत्तौ क्वचित् 'धातुः' नास्ति । (३।६, पृष्ठ १३२) ।

५. 'काञ्चनस्येव राशी' इति दशपादुणादिवृत्तौ पाठः (३।६ पृष्ठ १३२)

ति । समवप्रविभ्यः स्थः (१।३।२२) इत्यात्मनेपदम्—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । स्थाघ्वोरिच्च (१।२।१७) समस्थित, समस्थिषाताम् । आङः स्थः प्रतिज्ञाने (१।३।२२ वा०) उपसंख्यानम्—अस्तिं सकारमातिष्ठते[1], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः । प्रकाशनस्थेयाख्ययोश्च (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, श्लाघह्नुङ्स्थाशपां (१।४।३४) इति सम्प्रदानसंज्ञा; संशय्य कर्णादिषु तिष्ठते यः (किरात ३।१४) । उदोऽनूर्ध्वकर्मणि, वद ईहायाम् (१।३।२४ सू० वा०) गेह उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—पीठादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति । उपान्मन्त्रकरणे (१।३।२५) ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2], आग्नेय्याऽऽग्नीध्रमुपतिष्ठते[3]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपनह्यतः प्रकृतयः । अकर्मकाच्च (१।३।२६) भोजन उपतिष्ठते । अथ देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम् (तु० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गंगा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[4] । रथिकानुपतिष्ठते[5], मित्रीकरोतीत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोतीत्यर्थः । वा लिप्सायाम् (१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा । अधिशीङ्स्थासां कर्म (१।४।४६) गृहमधितिष्ठति । घुमास्था (६।४।६६) इतीत्वम्—स्थीयते । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम् । स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) अधितष्ठौ । उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सस्य थः, झरो झरि सवर्णे (८।४।६५) इति तस्य[7] लोपः—उत्थितः[8] । गातिस्था (२।४।७७) इति सिज्लुक्—अस्थात् । आङ्[illegible]पेक्षयापि

---

१. महाभाष्ये १।३।२२ वार्तिकोदाहरणमिदम् । यदाह न्यासकारः—"छकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते ।........'स स्थिते' इति स पठते ।" (भाग १ पृष्ठ २२६) ।

२. मै० सं० ३।२।४ ॥

३. मीमांसा शाबरभाष्ये ३।२।२१ उद्धृतः ।

४. 'गंगा......त्यर्थः' क्वचिन्न ।

५. इतोऽग्रे 'महामात्रानुपतिष्ठते' इत्यधिकम् ।

६. 'स्रुघ्नम्' मूले पाठः । 'दारकान्' इति क्वचित् पाठ० ।

७. थरेत्यर्थः ।

८. इतोऽग्रे 'उदस्थित' इत्यधिकम् ।

जिघ्रति । आतस्य सयोगादे (६।४।६८), इति वा एत्वम्—घ्रेयात् घ्रायात् । विभाषा घ्रा (२।४।७८) इति वा सिज्लुक्—अघ्रात् अघ्रासीत् । ई घ्राध्मोः (७।४।३१)—जेघ्रीयते । जिघ्रतेर्वा (७।४।६) इत्—अजिघ्रिपत् अजिघ्रपत् ॥९०३॥

६५९. ध्मा शब्दाग्निसंयोगयोः । शब्दे, मुखादिना चाग्निसंयोगे । पाघ्राध्मा (७।३।७८) इति धम —धमति । शा (द्र० ३।१।१३७) विधम. । आध्मात शङ्ख । नासिकास्तनयोर्ध्माधेटो. (३।२।२०) खश्—नासिकन्धम । नाडीमुष्ट्योश्च (३।२।३०)—नाडिन्धम । उग्रम्पश्येरम्मद पाणिन्धमाश्च (३।२।३७) । ध्मो धमश्च (द्र० उ० २।३०) इति क्वुन्—धमक । वर्तिसुधधमि (उ० २।१०३) इत्यनि —धमनिर्नाडी । बाहुलकाद्[1] धमादेश । धमि. प्रकृत्यन्तरमित्येके[2] । यथा—धानो[3] धातु[4] पावकस्येव राशि[5] ॥

६६०. ष्ठा गतिनिवृत्तौ । स्वस्तिष्ठादेश (द्र० ३।७८) तिष्ठ

---

* हिरण्यकेशीये (२।४।१७) च 'अमिजिघ्र' इत्युपलभ्यते । एवमेव 'घ्रा' धातोरपि 'घ्राङि मातेश्च' इत्युणादिसूत्रे (५।६३) शितपि सार्वधातुके जिघ्रादेशो न भवति । एव ध्मेरपि । उणादिसूत्रव्याख्यान तट्टिप्पणी च द्रष्टव्या । एतद्विषये विशेषत 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्याये (पृष्ठ ३८) द्रष्टव्य ।

१ अत्र लिबिशमहोदयेन 'बहुलमन्यत्रापि' (उ० ४।३९) इत्युणादिसूत्रम् परिशाय 'उणादयो बहुलम्' (३।३।१) इत्यस्य सख्या निर्दिष्टा । तुलनीया दशपादुणादिवृत्ति—तथा (बहुल) ग्रहणात् यत्रापि धमादेशो भवति (द० उ० ३।६ पृष्ठ १३२) क्षीरस्वामी दशपादुणादिवृत्ति शब्दतोऽर्थतो वा बहुशोऽनुसरति (द्र० क्षीर० भूमिका) ।

२. कस्येद मतमिति न ज्ञायते । वस्तुत पिबजिघ्रधमादीनि । प्रत्यन्तराण्येवेत्युरूपम् । तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृत । रामायणेऽपि 'विधमिष्यामि जीमूतान्' इति सुन्दरकाण्डे (६७।१२) प्रयुज्यते । अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या ।

३ दशपादुणादिवृत्तौ (३।९ पृष्ठ १३२) क्वचित् 'धम' पाठ, क्वचिद् 'धाता' । तत्रापि 'धात' इत्येव शुद्ध पाठ । हैमोणादिवृत्तावपि 'धात' इत्येव (१३, पृष्ठ ९) पठ्यते ।

४ दशपादुणादिवृत्तौ क्वचित् 'धातु' नास्ति । (३।९, पृष्ठ १३२) ।

५ 'काञ्चनस्येव राशि' इति दशपादुणादिवृत्तौ पाठः (३।६ पृष्ठ १३२)

ति । समवप्रविभ्यः स्थः (१।३।२२) इत्यात्मनेपदम्—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते । स्थाघ्वोरिच्च (१।२।१७) समस्थित, समस्थिषाताम् । आङः स्थः प्रतिज्ञाने (१।३।२२ वा०) उपसंख्यानम्—अस्तिं सकारमातिष्ठते[1], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः । प्रकाशनस्थेयाख्ययोश्च (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानसंज्ञा; संशय्य कर्णादिषु तिष्ठते यः (किरात ३।१४) । उदोऽनूर्ध्वकर्मणि, उद ईहायाम् (१।३।२४ सू० वा०) गेहे उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—पीठादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति । उपान्मन्त्रकरणे (१।३।२५) ऐन्द्र्या गार्हपत्यमुपतिष्ठते[2], आग्नेय्याऽऽग्नीध्रमुपतिष्ठते[3]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपगमद् प्रकृतयः । अकर्मकाच्च (१।३।२६) भोजन उपतिष्ठते । उपाद् देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम् (सू० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गंगा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[4] । रथिकानुपतिष्ठते[5], मित्रीकरोतीत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते, प्राप्नोतीत्यर्थः । वा लिप्सायाम् (१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा । अधिशीङ्स्थासां कर्म (१।४।४६) गृहमधितिष्ठति । घुमास्था (६।४।६६) इतीत्वम्—स्थीयते । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम् । स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४) अधितष्ठौ । उदः स्थास्तम्भोः पूर्वस्य (८।४।६१) इति सस्य थः, झरो झरि सवर्णे (८।४।६५) इति तस्य[7] लोपः—उत्थितः[8] । गातिस्था (२।४।७७) इति सिज्लुक्—अभ्यष्ठात् । मातृमितादद्भ्यस्तायेऽपि

१. महाभाष्ये १।३।२२ आपिशलेरेतन्मतम् । यदाह भाष्यकारः—"सकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते ।………'स भुवि' इति स पठति ।" (भाग १ पृष्ठ २२६) ।

२. मै० सं० ३।२।४ ॥

३. मीमांसा शाबरभाष्ये ३।२।२१ उद्धृतः ।

४. 'गंगा……त्यर्थः' क्वचिन्न ।

५. इतोऽग्रे 'महामात्राननुपतिष्ठते' इत्यधिकम् ।

६. 'स्रुघ्नम्' मूले पाठः । 'द्वारकाम्' इति क्वचित् पाठा० ।

७. पक्षे थः ।

८. इतोऽग्रे 'उत्थितः' इत्यधिकम् ।

(८।३।६१) इति षत्वम् । चरणादे चरणानाम्[1], स्थेणोरद्यतन्यां च (२।४।३ सू० वा०) इति द्वन्द्वैकत्वम्—प्रत्यष्ठात् कठकौथुमम् । स्थाघ्वोरिच्च (१।२।१७) उपास्थित । तिष्ठतेरित् (७।४।५) अतिष्ठिपत् । मव्यगेयप्रवचनीय (३।४।६८) इति कर्तरि उपस्थानीयश्शिष्यो गुरोः । प्रहादौ (द्र० ३।१।१३४) स्थायी । आतश्चोपसर्गे (३।३।१०६)ऽङ्—आस्था, व्यवस्था । प्रष्ठोऽग्रगामिनि (८।३।९२) साधुः । सुपि स्थः (३।२।४) इति क—समस्थः । योगविभागाद् भावेऽपीष्यते—आखूत्थो वर्तते, अग्न्युत्थो वर्तते । अम्बाम्बगोभूमि (८।३।९७) इति षत्वम्—अम्बष्ठ, आम्बष्ठः, गोष्ठः, भूमिष्ठः । द्यतिस्यति (७।४।४०) इतीत्वम्—स्थितः । गत्यर्थाकर्मक (३।४।७२) इति क्तः—उपस्थितो गुरुं चैत्रः । ग्लाजिस्थश्च ग्स्नुः[2] (३।२।१३९) स्थास्नुः । लषपतपद (३।२।१५४) इत्युकञ्-स्थायुकः । स्थेशभास (३।२।१७५) इति वरच्—स्थावरः । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् । (३।३।५८ वा०) प्रस्थः । स्थागापापचो भावे (३।३।९५) क्तिन्—स्थितिः । अजिरशिशिर (उ० १।५४) इति स्थिरस्थविरौ । स्थाचतिमृजेर् (उ० १।११६) इति स्थाली । सव्ये स्थश्छन्दसि (उ० २।१०२) इति क्रुन्—सव्येष्ठा सारथिः, स्थास्थिन्स्थूणाम् (८।४।६७ सू० वा०) इति षत्वम् । परमे स्थ कित्[3] इतीन्—परमेष्ठी ब्रह्मा । स्थो णुः (उ० ३।३७) स्थाणुः । स्थः स्तोऽम्बजबकौ च (उ० उ० ४।९६) स्तम्बः स्तबकः । स्थायी भविष्यति गम्यादयः (३।३।३) प्रस्थायी । स्थूणा, स्थूरा जङ्घालोहपुत्तलिका ॥९०५॥

६६१. म्ना अभ्यासे । अभ्यासः पारम्पर्येण वृत्तिः । म्नो मनः (द्र० ७।३।७८)—आमनति । आम्नायः । नामन्सीमन् (उ० ४।१५१) इति नाम ॥९०६॥

६६२. दाण् दाने । णकारो दाणश्च सा चेद (१।३।५५) इत्यर्थः । दाणो यच्छ (द्र० ७।३।७८)—विप्राय यच्छति । दाणश्च सा चेच्च-

---

१ शाखाना मूलं चरणमुच्यते । तथा च भोजवर्मणः (१२ शताब्द्या) ताम्रपत्रम्—“जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकण्वशाखाध्यायिने……।” द्र० ‘वैदिक वाङ्मय का इतिहास’ संस्क० २, पृष्ठ १७३,१७४। २. ‘ग्स्नुः’ पाठा० ।

३. ‘परमे स्थ. कित्’ इति दश० उ० ६।६१ क्पाठः । अमरटीकासर्वस्वकारोऽप्येवमेव पठति, भाग १ पृष्ठ १५,७५ । सरस्वतीकण्ठाभरणेऽपि (२।१।२९२) ।

तुर्य्यर्थे (१।३।५५) इति तङ्—दास्या सम्प्रयच्छते । घुकार्यम्—दीयते (द्र० ६।४।६६), सिज्लुक् (२।४।७७) अदात् । दायादो मूलविभुजादित्वात् (द्र० ३।२।५ वा०), आतोऽनुपसर्गे कः (३।२।३) नास्ति[1] सोपसर्गत्वात् । प्रे दाज्ञः (३।२।६) अश्वप्रदः । गोदः (द्र० ३।२।३) । दो दद्घोः (७।४।४६) दत्तः । अच उपसर्गात् तः (७।४।४७) प्रत्तम् । दस्ति (६।३।१२४) इति दीर्घः —धीत्तम् । दाधेट्सिशदसदो रुः (३।२।१५९)—दानशीलो दारुः ॥९०७॥

९९३. ह्वृ कौटिल्ये । ह्वरति । छित्वरादौ (द्र० उ० ३।१) उपह्वरः ॥९०८॥

९९४. स्वृ शब्दोपतापयोः । स्वरति । समो गम्यृच्छि (१।३।२९) तङ्–संस्वरते । स्वरतिसूति (७।२।४४) इति वेट्–स्वरिता स्वर्ता । सनीवन्तर्ध (७।२।४९) इति सिस्वरिषति सुस्वूर्षति । स्वरः । शृस्वृस्निहि (उ० १।११) इत्युः—स्वरुर्नेत्रम् । स्वारयति । चुरादौ स्वर आक्षेपे (१०।२५०) अदन्तः [स्वरयति] ॥९०९॥

९९५. स्मृ चिन्तायाम् । स्मरति । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) इत्यात्मनेपदम्—सुस्मूर्षते । स्मृ आध्याने (१।५४४) मित्—स्मरयति । अत् स्मृदृत्वर (७।४।९५) इति असस्मरत् । स्मरः । स्मृतिः ॥९१०॥

९९६. द्वृ वरणे[2] । वरणं स्थगनम् । द्वरति । घञ् (द्र० ३।

१. दायाद इत्यत्र आङ्पूर्वत्वात् कस्य प्राप्तिर्नास्तीत्यर्थः ।

२. काशकृत्स्नचन्द्रजैनशाकटायनीयेषु धातुपाठेषु क्षीरमैत्रेयदीक्षितादिकृतेषु धातुव्याख्यानेषु, च अविगीतत्वेन 'द्वृ' पठ्यते (अनादरे-मैत्रेयः, संवरणे दीक्षितः) । सत्यप्येवं सायणो धातुवृत्तौ (पृष्ठ ११७) 'क्वचित् पठ्यते' इत्याह । हस्तलेखेषु प्रायेण 'धृ संवरणे' पाठ उपलभ्यते । वस्तुतस्तूभावपि स्वतन्त्रौ धातू । 'द्वृ' धातोः 'द्वाः, द्वारः' इत्यादयः सिध्यन्ति, 'धृ' धातोश्च 'वाः, वारः' इत्यादयो द्वारपर्यायाः । आसीच्च वार-शब्दस्य द्वारार्थे पुरा प्रयोगो लाटदेशे (सौराष्ट्रस्तो नीचैः) (द्र० तन्त्रवार्तिक १।३।२२) । अद्यापि वारशब्दस्य स्त्रीलिङ्ग 'बारी' पदं (बारी वा) गुर्जरवाहीकराजस्थानीयभाषासु सम्प्रति गवाक्षार्थे प्रयुज्यते (अत्र ह्रस्वार्थे ङीप्प्रत्ययः । यथा—घट-घटी) । नीचीनवारं (ऋ० ५।८५।३) जिह्मबारं (ऋ० १।११६।९॥८।४०।५) इत्यादिषु प्रयुज्यमानो वारशब्दोऽप्येतदर्थक एव । तदर्थं 'धृ' धातुरुक्तः । प्रमादिको

३।१९) द्वारम्[१] । द्वारयतेरणादिष्किन्[२] द्वाः [द्वारौ] द्वारः ॥२११॥

६६७. सृ गतौ । सरति, प्रसरति । पाघ्रा (७।३।७८) इति वेगितायां गतौ धावादेशः[३]—धावति । वसृश्वृ (७।२।१३) इति नेट्—सस्रुव । सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) लुङि अङ्—असरत् । उपसर्या काल्या प्रजने (३।१।१०४) । राजसूयसूर्य (३।१।११४) इति सूर्यः । पुसृल्वः समभिहारे वुन् (३।१।१४९) सरकः । सर्तेर्यः[४] सरति सरति वा—सर्यः[५] । ण्वुल्—अभिसारिका । पुरोऽग्रतोऽग्रेषु सर्तेः (३।२।१८) टः—पुरःसरः, अग्रतःसरः, अग्रेसरः । पूर्वे[६] कर्तरि (३।२।१९) पूर्वसरः । सम्पृच (३।२।१४२) इति—परिसारी । बाहुलकाद्[७] विसारी । प्रे लपसृ (३।२।१४५) प्रसारी । उद्-प्रतिभ्यामाङि सर्तेः (३।२।७८ कारिका)—उद्दासारी, प्रत्यासारी । जुचङ्क्रम्य (३।२।१५०) इति युच्—सरणः । सृघस्यदः क्मरच् (३।२।१६०) सृमरः । सृ स्थिरे, व्याधिमत्स्यबलेषु च (३।३।१७ पु०,वा०) घञ्—चन्दनसारः, अतीसारः, विसारः, सारम् । प्रजने सर्तेः (३।३।७१) अप्—उपसरो गवाम् । घञ् (द्र० ३।३।१८, १९) आसारः संसारः । बाहुलकाद्[८] विसरप्रसरौ ।

वुन् (द्र० ३।१।१४९) सरकः। सर्तेर्णिद् (दश० उ० ६।३०) इति थन्-सार्थः। सरतेरसुन् (द्र० दश० उ० ९।५०१) अप्सु सृता अप्सरसः। दृह-कडिवुषिभ्य इतिः (उ० ४।६७)—सरित्। असुन् (दश० उ० ३।४६)—सरः। अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः (उ० २।१०२) सरणिः। सर्तेरटिः (उ० १।१३४) सरट्। शकादिभ्योऽटन् (उ० ४।८१) सरटः कृकलासः। सर्तेर्युः (उ० ३।२२)—सरयुः, सरयूर्नदी। सर्तेरपः षुक् च (उ० ३।१४१) सर्षपः। अण्डन् कृसृ (उ० १।१२९) इति सरण्डः। सर्तेर्नुट् च (द० उ० ३।४२) इतीकफ्—सृणीका लाला। जनिदाच्युसृ (दश० उ० १०।१५) इति निक्[1]—सृणिरङ्कुशः। सर्तेर्णित् (दश० उ० १।४२) सारथिः। ह्वादौ सृ गतौ (३।१७) सिसर्ति। चुरादौ (१०।२५५ दुर्गमते) सारयति। युच् (द्र० ३।३।१०७) सारणा सन्धायोजना। ल्युट् (द्र० ३।३।११७) सारणी सेककुल्या ॥२१२॥

९९८. ऋ गतिप्रापणयोः। पाघ्राध्मा० (द्र० ७।३।७८) ऋच्छति। समो गम्यृच्छिप्रच्छिस्वरत्यर्ति (१।३।२९ कारिका) इत्यात्मनेपदम्—समृच्छते। तपोऽनिकियोगाघोः (७।४।२९) अर्यते। ऋच्छिचुरिपूनयमपर्वधर्मादीनाम् (३।१।२२ वा०) यङ्—अरार्यते। उपसर्गादृति धातौ (६।१।९१) वृद्धिः—उपार्छति। अर्ति—ह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ (७।३।३६) आरिथ। सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—आरत्। रिमपूङृज्वशां सनि (७।२।७४) इतीट्—अरिरिषति। अर्तिह्रीव्लीरी (७।३।३६) इति पुक्—अर्पयति, अर्पितः। अर्यः स्वामिवैश्ययोः (३।१।१०३), आर्योऽन्यः। अचि (द्र० ३।१।१३४) अरः। भिदादौ (गण० ३.३।१०४) धारा शरभ्याम्। ऋणमाधमर्ण्ये (८।२।६०), अन्यत्र ऋतम्। अर्तिलूधूसूखन (३।२।१८४) इतीत्रः—अरित्रं केनिपातकः (अमरकोष १।१०।१३) अर्तेश्च तुः (उ० १।७२) कित्व—ऋतुः। अर्तेः किदिच्च (उ० २।५१) इतीनच्—इरिणं निस्तृणं स्थलम्। अर्तिसृधृ (उ० २।१०२) इत्यरणिः। अर्तिपृवपि (उ० २।११७) इत्युस्—अरुर्मर्म। अर्तेश्च (उ० ३।६०) इत्युनन्—अरुणः। अर्तेर्निद् (दश० उ० ८।५) इत्यन्यच्—अरण्यम्। अर्तिकमिभ्रमि (उ० ३।१३२) इत्यरन्—अररं कपाटम्। उणादौ—अच इः (४।१३९)

1. 'ण्डि' पाठ०।

2. पञ्चपाद्यां (४।१०४) निन्प्रत्ययः, दशपाद्यां तु निक्।

अरिः[1] । अर्तिगृभ्यां भन् (तु० उ० ३।१५२)—अर्भः, अर्भकः । अर्तेश्च (उ० ५।७) इत्यरतिः । अरत्निः (द्र० उ० ४।२) । अर्तेर्भुविध्यक् (तु० दश० उ० ६।८२)—ऋभुक्षा इन्द्रः । अर्ते. क्युज् उच्च (तु० उ० ५।२७) उरणो मेषः । अर्तेरू च (उ० ४।४६ श्वेत०) इति मिः—ऊर्मिः । स्नामदिपद्यर्तिपृशकिभ्यो वनिप् (उ० ४।११३) अर्वा—अश्वः । उषिकुषिगार्तिभ्य स्थन् (उ० २।४)—अर्थः । अर्तेरुच्च (उ० ४।१९५) इत्यसुन्—उरो वक्षः । अर्तेर्ध्यांघौ शुट् च (तु० उ० ४।१९६) इत्यसुन्—अर्शः । उदके नुट् च (उ० ४।१९७) अर्णः । अर्तिस्तुसुहुसृ (तु० उ० १।१४०) इति मन्—अर्मोऽक्षिरोगः । आरुः पिङ्गलः (द्र० उ० १।८५) । अर्यमन् (द्र० उ० १।१५९) । निर्ऋतिः । अरुमर्भकः । ह्वादौ ऋ सृ गतौ (३।१७) इयर्ति ॥९१३॥

६६९. घृ घृ सेचने । गरति । घरति । अत्र[2] नियतविषयमाहुः[3] । अञ्जिघृसिभ्यः क्तः (उ० ३।८९) घृतम् । घृणा । चुरादौ घृ स्रावणे (१०।१००) तज्जानी—अभिघारयते । ह्वादौ घृ क्षरणदीप्त्योः (३।१५) जिघर्ति । घर्मः । घृणिः ॥९१४,९१५॥

६७०. ध्वृ हूर्छने । हूर्छनं कौटिल्यम् । ध्वरति विध्वर्यदेवहूय (३।१।१२३) इति ध्वर्यः । न ध्वरोऽध्वरो यज्ञः ॥९१६॥

६७१. स्रु श्रु गतौ[4] । स्रवति । स्रुद्रा प्ररोहः । ध्रुवः स्र च (३।१।७) इति द्रुः—आप्नोति[5] चैत्राय, सत्याद्भ्यां ध्रुवः पूर्वस्य कर्ता (१।४।४०)

---

१. 'अरति.' 'आरिः' पाठा० । २. 'अत्र' इति पुस्तकः पाठः ।

३. तुलना कार्या—अविहितस्मायविशेषेणोपदिष्टः । स घृतं घृणा घर्म इत्येवं विषयः (महा० ७।१।६५, ६६) इति पतञ्जलिवचन तु लोकविषयकम्, वेदे तिङन्तान्यपि दृश्यन्ते । अत्र 'अथापि नैगमेभ्यो भाषिकाः—उष्णम्, घृतम् (२१।२) इति निरुक्तवचनमप्यनुसन्धेयम् ।

४. स्मृतोऽत्र पाठः पुरुषकारे (पृष्ठ ३१) । सायणादयो नेमौ पठतः । अत्र बहवः पाठभेदा दृश्यन्ते तत्तद्ग्रन्थेषु ।

५. यदि 'स्रु' धातोः भ्वादिपाठे सत्यपि 'ध्रुवः स्र च' इत्यनेन नित्यं दुविधानं स्यात् तर्ह्यस्य भ्वादिपाठोऽनर्थकः स्यात्, तथा सति स्वादावेवेमं पठेत्, इत्यप्येवं यदयमाचार्यः स्रुधातुं भ्वादौ पठति, तज्ज्ञापयति च विदधाति, तेन न नित्यं

सम्प्रदानम् । समो गम्यृच्छि (१।३।२९ का०) इति तङ्—संशृणुते । श्र्युकः किति (७।२।११) इति नेट्—शुश्रोथ । भाषायां सदवसश्रुवः (३।२।१०८) क्वसुः—शुश्रुवान् । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) आत्मनेपदम्—शुश्रूषते । प्रत्याङ्भ्यां श्रुवः (१।३।५९) नास्ति—प्रतिशुश्रूषति । वौ क्षुश्रुवः (३।३।२५) घञ्—विश्रावः । स्रवतिशृणोतिद्रवति (७।४।८१) इत्योरित्वं वा—शिश्रावयिषति, शुश्रावयिषति; अशिश्रवत्, अशुश्रवत् । ग्रहादौ (द्र० ३।१।१३४) श्रावी, श्रयीत्येके । हुयामाश्रुभसिभ्यस्त्रन् (उ० ४।१६८)—श्रोत्रम् । उणादौ श्रवणोऽभ्यत्ययः[1] । ल्युट् (द्र० ३।३।११७) श्रवणं कर्णः । असुन् (द० उ० ४।४६) श्रवः । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् (द्र० उ० ४।५१) इति निः—श्रोणिः ॥९१७,९१८॥

९७२. षु प्रसवैश्वर्ययोः । सवति । सोता । [कर्मणि-] सुषुवे । सुतः । सवनः । सवः[2] । अदादौ (२।३३) सौति । स्वादौ षुञ् अभिषवे (५।१)—सुनोति ॥९१९॥

९७३. स्रु गतौ[3] । स्रवति । स्रवतिशृणोतिद्रवति (७।४।८१) इत्योरित्वं वा—सिस्रावयिषति, सुस्रावयिषति; असिस्रवत्, असुस्रवत् । णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८) असुस्रुवत् । क्विब्वचि प्रच्छि (उ० २।५७) इति स्रुः कामरूपी[4] । स्रुघ्नः । स्रुवः कः[5] (उ० २।६१) अपादाने । चिक् च (उ० २।६२) स्रुक् । स्रुरीभ्यां तुट् च (उ० ४।२०२) इत्यसुन्—स्रोतः । अस्यतेः

---

श्नुविकरणत्व इति ज्ञापयति । तथा सति 'श्रवति' इत्यादयोऽपि भौवादिकाः प्रयोगाः द्रष्टव्याः । (ऋग्वेदे शविकरणो बहुलं श्रूयते) । काशकृत्स्नीयकन्नडटीकायां 'श्रवति' इत्येव उदाह्रियते (पृष्ठ ७५) । तेन श्रवति शृणोति च स्वतन्त्रौ धातू । अत्र कन् करणे (२।६३६) धातोष्टिप्पणी द्रष्टव्या (पृ० ११०।३) ।

१. उज्ज्वलदत्तस्तु 'बहुलमन्यत्रापि' (उ० २।७८) इत्यत्र 'श्रवणा नक्षत्रम्' इत्याह । २. 'धानकाञ्चापत्य सवः' पाठ० ।

३. 'स्वामी तालव्यादिमप्युं पपाठ शु गतौ इति' धातुवृत्तिः (पृ० १८१) । क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते । ४. 'कामरूपः' पाठा० ।

५. 'स्रुवकः' इति मूल पाठः, स चायुक्तः । शिविरोन भाष्ये शोधितः । क्वचित् 'स्रुवकः' इति नास्ति ।

(४।१०४) अस्नुः (द्र० उ० ४।१०२)। सुयजीविस्नुभ्यः करणे क्तिन् (३।३।९५ वा०) स्नुतिः। प्रे द्रुस्तुस्रुवः (३।३।२७) घञ्—प्रस्नावः ॥९२०॥

६७४. ध्रु स्थैर्ये। ध्रवति। बाहुलकात् (द्र० ३।३।१) कः (द्र० उ० २।६१) ध्रुवः। तुदादौ (६।९८) ध्रुवति ॥९२१॥

६७५. दु द्रु गतौ। दवति। दुन्योरनुपसर्गे (३।१।१४२) णः—दावो वनाग्निः। ऋदोरप् (३।३।५७) दवः। समि युद्रुदुवः (३।३।२३) घञ्—संदाव। द्रुतनिभ्यां दीर्घश्च (उ० ३।९०) दूतः। द्रवति। द्रवः। द्रुतः। बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः (१।३।८६) इति णेः परस्मैपदम्—द्रावयति। श्र्युकः किति (७।२।११) इति नेट्—दुद्रोथ। णिश्रिद्रुस्रुभ्यः कर्तरि चङ् (३।१।४८)—अदुद्रुवत्। स्रवतिशृणोति (७।४।८१) इत्यभ्यासस्य ओरित्त्वम्—दिद्रावयिषति, दुद्रावयिषति; अदिद्रवत्, अदुद्रवत्। प्रे द्रुस्तु (३।३।२७) इति प्रद्रावः। समि युद्रु (३।३।२३) इति सन्द्रावः। उदि श्रयति (३।३।४९) इत्युद्द्रावः। प्रे लपसद्रुमथ (३।२।१४५) इति प्रद्रावी। द्रुमकरणे (३।२।१८० वा०) मितद्रुः। द्रुस्तरुः। द्रुमः। हरिमितयोर्द्रुवः (उ० १।३५) हरिद्रुः। द्रुदक्षिभ्यामिनन् (उ० २।५०)—द्रविणम्। कॄवृजॄषि (दश० उ० ५।४२) इति नः—द्रोणः। वहिश्रि (उ० ४।५१) इति निः—द्रोणिः। कृदिकारात् (गण ४।१।४५ सूत्रम्) इति ङीषि द्रोणी ॥९२२,९२३॥

६७६. जि जृ अभिभवे[1]। जयति। विपराभ्यां जेः (१।३।१९) आत्मनेपदम्—विजयते शत्रुम्। पराजेरसोढः (१।४।२६) इत्यपादानम्—अध्ययनात् पराजयते, अध्येतुं ग्लायतीत्यर्थः। सन्लिटोर्जेः (७।३।५७) कुत्वम्—जिगीषति, जिगाय। क्रीङ्जीनां णौ (६।१।४८) आत्वं—जापयति क्षय्यजय्यौ शक्यार्थे (६।१।८१)। विपूयविनीय (३।१।११७) इति जित्यो हलिः। सप्तम्याः (३।२।४६) धनञ्जयः। अभिजित् (द्र० ३।२।६१)। ग्लाजिस्थश्च ग्स्नुः[2] (३।२।१३९) जिष्णुः। इण्नशजि (३।२।१६३) इति क्वरप्—जित्वरः। कृवापाजि (उ० १।१) इत्युण्—जायुरौषधम्। तॄभूवहिवसि (उ० ३।१२८) इति झच्—जयन्तः। ल्युट् (द्र० ३।३।११७) उज्जयनी। जेर्द्रुट् चोदात्तः (उ०

१. पुरुषकारे (पृष्ठ २५) 'जिञि अभिभवे' इति मुद्रितपाठो दृश्यते, स चिन्त्यः। २ 'ग्स्नुः' पाठ०।

३।६१)—जीमूनः । जरति । त्रि इति दुर्गः—त्रयति ॥९२४,९२५॥

६७७. क्षि ऐश्वर्यं इत्येके । क्षयति । ऋभुं क्षयति ईष्टे-ऋभुक्षा[1]।

[अथात्मनेपदिनः]

६७८. स्मिङ् ईषद्धसने । स्मयते, विस्मयते । स्मिपूङ्रञ्ज्व (७।२।७४) इतीट्—विसिस्मयिषते, स्तौतिण्योरेव षणि (८।३।६१) इति नियमात् षत्वाभावः । भीस्म्योर्हेतुभये (१।३।६८) तङ्, नित्यं स्मयतेः (६।१।५७) णावात्त्वम्—मुण्डो विस्मापयते[2] । नमिकम्पि (३।२।१६७) इति रः—स्मेरं हास्यम् ॥९२७॥

६७९. गुङ् अव्यक्ते शब्दे । गवते । गोता । गोत्रम् । गु पुरीषोत्सर्गे इत्येके—गवति, गविता । तुदादौ (६।५७) गुवति, गुविता ॥९२८॥

६८०. गाङ् गतौ । एकद्विबहुत्वे—गाते, गाते, गाते । इणो गा लुङि (२।४।४५) अगात् । इह गै शब्दे (१।६५२) गायति ॥९२९॥

६८१. घुङ् कुङ् उङ् शब्दे । घवते । कवते । न कवतेर्यङि (७।४।६३) चुत्वम्—कोकूयते । यङ्लुकि नास्ति—न धुमताङ्गस्य (१।१।६३) इति[3]—चोकोति । कुयुभ्यो दीर्घश्च (तु० दश० उ० ७।५) इति पः—कूपः । कुवः करन् (उ० २।१११) कुररः । कुवश्चट् दीर्घश्च (उ० ४।९१)—कूचः, कूची[4] । घञ इः (उ० ४।११९)—कविः । अदादौ कु शब्दे (२।३४) कौति । तुदादौ (६।१००) कुवति । अवते । लुङि—औष्ट । इः (द्र० उ० ४।१३८)—अविः । ङुङ् इति च दुर्गः—ङवते । ङुङुवे । घुङ् इत्येके ॥९३०-९३२॥

६८२. च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ । च्यवते । स्रवतिशृणोति (७।४।८१) इति वाभ्यासस्योत इः—चिच्यावयिषति, चुच्यावयिषति; अचिच्यवत्, अचुच्यवत् । च्युतः । च्यवनः । छ्यवते । ज्यवते । जुङ्

1. उद्धृतमिदं किञ्चित् पाठान्तरेण पुरुषकारे (पृष्ठ २३) ।

2 इतोऽग्रे 'करणात् स्मये नास्ति—कुञ्चिकयैन विस्मापयति' इत्यधिकं क्वचित् ।

3 श्तिपा निर्देशात् श्लुत्वं न भवतीति भावः ।

4 इतोऽग्रे 'कूर्चं', कूर्चिका क्लिलादभेदः' इत्यधिकं क्वचित् ।

इति नन्दी—जवते। सुचङ्क्रम्य (३।२।१५०) इति युच्—जवनः। वृत्तिकृत् तु खं सौत्रमाह—जवः, प्रजवी। जोरी च (उ० २।२३) जीरम्। ऊतियूतिजूति (३।३।९७) इति जूतिः—क्विब्वचि (उ० २।५७) इति जूः पिशाचः[1]। प्रवते। कटप्रूर्नदीतारः[2]। पिप्रावयिषति, पुप्रावयिषति; अपिप्रवत्, अपुप्रवत्। बुधयुधनश (१।३।८६) इति ण्यन्तात् परस्मैपदम्—प्रावयति। प्रवणः। ह्रस्वः समभिहारे वुन् (३।१।१४९) प्रवकः। प्रोथोऽश्वघोणाग्रम्[3]। प्लुङोऽप्येवम्। मव्यमेय (१।४।९८), इत्याह्लाष्यश्वेत्रो नद्यः। पचादौ (द्र० ३।१।१३४) प्लवट्[4]। विभाषाङि रुप्लुवोः (३।३।५०) घञ्—आप्लावः, आप्लवः ॥९३३-९३७॥

९८३. रुङ् गतिरेषणयोः। रेषण हिंसायाम्दः। रवते[5]। आरावः आरवः (द्र० ३।३।५०)। सुयुरुवृञो युच् (उ० २।७४) रवणः। दशातिभ्यां कुन् (उ० ४।११२ श्वेत०) रुरुः। सम्भ.इः (उ० ४।१३९) रविः। अदादौ रु शब्दे (२।२५) रौति ॥९३८॥

९८४. धृङ् अवध्वंसने[6]। धरते। तुदादौ धृङ् आधारे[7] (६।११४)—ध्रियते। चुरादौ धृ धार्ये[8] धारयति। अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—धारयः। संज्ञायां (३।२।४६) वसुन्धरा। इङ्धार्योः शत्रकृच्छ्रिणि (३।२।१३०)—धारयन्। अर्तिस्तुसु (उ० १।१३९) इति मन्—धर्मः। अर्तिसृधृधमि (उ० २।१०२) इत्यनिः—धरणि,, धरणी। अच्चि (द्र० ३।१२४) धरोऽद्रिः, धरा भूः। भिदादौ (द्र० गण० ३।३।१०४) धारा। अध्यायन्याय (उ० ३।३।१२२ काशिका) इत्याधारः ॥९३९॥

---

१. द्र० दशपादी-उणादिवृत्ति १०।२ (पृ० ४२४)।

२. 'नदीमार.' पाठा०।

३. 'अश्वपुच्छाग्रम्' पाठा०। उणादौ २।१२ प्रोथो निपात्यते।

४. 'प्लवः' पाठा०। टित्वान्ङीप्—प्लवी। ५. उद्धृतं पुरुषकारे (पृष्ठ ३२)।

६. 'अविध्वंसने इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ३७) पाठः।

७. तुदादौ 'स्थाने' इति पठिष्यति क्षीरस्वामी।

८. चुरादौ नायमुपलभ्यते। न च तुदादौ चौरादिकं निर्देक्ष्यति क्षीरस्वामी।

६८५. मेङ् प्रणिदाने[1] । प्रणिदानं[2] प्रत्यर्पणम् । अपमयते, प्रणिमयते । सनि मीमाघु (७।४।२४) इति मित्सते । श्यावाभ्य (३।२।२) इत्यण्—धान्यमायः । उदीचां माङो व्यतिहारे (३।४।१९) क्त्वा—अपमित्य याचते, याचित्वा अपमयते, मयतेरिदन्यतरस्याम् (६।४।७०), पक्षे अपमाय । मापोररीच (दश० उ० १।१५७) मेरुः, सुमेरुः । माछाससिसूभ्यो यः (दश० उ० ४।१०१) माया । चन्द्रे मो ङित्[3] (उ० ४।२२८) इत्यसुन्—चन्द्रमाः । अदादौ मा माने (२।५४) माति । ह्वादौ माङ् माने (३।६) ममीते ॥९४०॥

६८६. देङ्[4] रक्षणे । दयते । दयतेर्दिगि लिटि (७।४।९)—अवदिग्ये । मनिन् (दश० उ० ६।७२) दामा । दाण् दाने (१।६६२) यच्छति । दैप् शोधने (१।६५६) दायति सुवर्णम् । अदादौ दाप् लवने (२।५१) दाति व्रीहीन् । ह्वादौ डुदाञ् दाने (३।१०) दत्ते, ददाति । दिवादौ दो अवखण्डने (४।३९) द्यति ॥९४१॥

६८७. श्यैङ् गतौ । श्यायते । श्याद्व्यध (३।१।१४१) इति णः, श्याग्रहणं सोपसर्गार्थम्—प्रतिश्यायः, अवश्यायः । द्रवमूर्तिस्पर्शयोः श्यः (६।१।२४) सम्प्रसारणम्—शीनं घृतम्, श्योऽस्पर्शे (८।२।४७) नत्वम्, नेह—शीतो वायुः । प्रतेश्च (६।१।२५) स्फैयकृतस्य पिता प्रतिशीनः । विभाषाऽभ्यवपूर्वस्य (६।१।२६) अभिशीनः, अभिश्यानः; अवशीनः, अवश्यानः । इषियुधि (उ० १।१४५) इति मक्—श्यामः, श्यामा, श्यामाकः । श्यास्त्याहृम् (उ० २।४६) इतीनच्—श्येनः । हृश्याभ्यामितन् (उ० ३।९३) श्येतः ॥९४२॥

---

स्मृतोऽयं पाठः पुरुषकारे (पृष्ठ २७) । सायणस्तु स्मृत्वा प्रत्याख्यातवान् (धातु० पृष्ठ १६३) ।

१. 'प्रतिदाने' इति काशकृत्स्नः (पृष्ठ १२८) । तथैव कातन्त्रे (हस्तलेख पृ० ८) चान्द्रे १।४८० च । 'प्रणिधाने' पाठा० । २. 'प्रणिधानम्' पाठा० ।

३. 'ङित्' इति प्रायशो पाठः । श्वेतवनवासिवृत्तौ क्वचिद् हस्तलेखे 'चन्द्रे मो ङित्' इत्येव उपलभ्यते । अपरस्मिन् 'चन्द्रे मो डिविच' इत्येवं पाठान्तरं दृश्यते (द्र० उ० वृ० पृष्ठ २०६) ।

४. 'दैङ् त्रैङ् पालने । दायते, त्रायते' इति काशकृत्स्नधातुपाठस्य कन्नड-टीकायाम् (पृष्ठ १२८) । तथैव कातन्त्रीयधातुपाठेऽपि (अस्मद्धस्तलेख पृष्ठ ८) ।

६८८. प्यैङ् वृद्धौ । आप्यायते । छित्वरादौ (द्र० उ० ३।१) पीवरः । प्याप्योः सम्प्रसारणं च (उ० ४।११५) इति क्वनिप्—पीवा ॥९४३॥

६८९. त्रैङ् पालने । चौरात् त्रायते (द्र० १।४।२५) । नुदवि दोन्दत्रा (८।२।५६) इति नत्व घा—त्राणः, त्रातः । नियम—

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ।[महाभाष्य ७।४।४१]॥९४४॥

६९०. अनुदात्ताः ॥

६९१. पूङ् पवने । पवन नीरजीकरणम् । इतश्चत्वारः सेटः । पवते । पविता । स्मिपूङ्रञ्ज्वशां सनि (७।२।७४) इतीट्, ओः पुयण्ज्यपरे (७।४।८०) इत्योरभ्यासस्येत्—पिपविषते । विपूयविनीय (३।१।११७) इति विपूयो मुञ्जे साधुः । न भाभूपूकमि (८।४।३४) इति कृति णत्व नास्ति—प्रपवनीयम् । पूङः क्त्वा च (१।२।२२) इति क्त्वानिष्ठयोर्वेट्—पूत, पवितः; पूत्वा, पवित्वा । पूङ्यजोः शानन् (३।२।१२८) पवमानः । ल्युः (द्र० ३।१।१३४) पवन । निरभ्योः पूल्वोः (३।३।२८) निष्पावः । हलसूकरयोः पुवः । (३।२।१८३) ष्ट्रन्—पोत्रम् । कर्तरि चर्षिदेवतयोः (३।२।१८६) इत्रन्—पवित्रम् । नप्तृनेष्टृत्वष्टृ (उ० २।९५) इति पोता ऋत्विक् । हसिमृग्रिण्वामि (उ० ३।८६) इति तन्—पोतः शावको, नौभेदश्च । आपूङ्-खञ्जिभ्यो गक् (तु० उ० १।१२४) पूग क्रमुक, संघ । पुवो ह्रस्वश्च (उ० ४।१६५) इति क्नः—पुन्नः । पूञो यण् णुग्घ्रस्वश्च (दश० उ० ८।१६ कपाठ)—पुण्यम् । इ (तु० ४।१३८) पविः । क्र्यादौ पूञ् (९।११) पुनीते, पुनाति ॥९४५॥

६९२. मूङ् बन्धने । मवते । ओः पुयण्ज्यपरे (७।४।८०) मिमावयिषति । मूङ्शोर्लोपश्च (तु० दश० उ० ६।१७)[1] इत्युपन्—तैजसावर्तनी मूषा (अमर० २।१०।३३) । तनिमृङ्भ्यां किच्च (दश० उ० ६।८)—मूत पुटबन्धः । जीवनस्य मूतः—जीमूतः, पृषोदरादि (द्र० ६।३।१०९) ॥

१. सूत्रमिद दशपाद्यामत्रोपलभ्यते । तत्र 'मूङ्स्त्रोर्लोपश्च' इति पाठः । स एव च शुद्ध पाठः । क्षीरस्वामी दशपादीपाठ प्रायेणानुसरति । तत्रापि च कमहकहस्तलेखस्य पाठन् । अत्र क्षी० त० २।६ यूष पद सिद्धिर्द्रष्टव्या ।

६९३. डीङ् विहायसा[1] गतौ। डयते। श्वीदितो निष्ठायाम्—डयितः, ङित्त्वं नेष्टम्। दिवादौ डीङ् गतौ (४।२५) डीयते, डीनः ॥९४७॥

[अथ सेट् परस्मैपदी]

६९४. तॄ प्लवनतरणयोः। प्लवनं मज्जनम्, तरणं लङ्घनम्। तरति। तारकः। वृतो वा (७।२।३८) इतीटोऽलिटि वा दीर्घः—तरिता, तरीता; तेरिथ। न लिङि (७।२।३९) तरिषीष्ट त्वया। सिचि च परस्मैपदेषु (तु० ७।२।४०) न दीर्घः—अतारिष्टाम्। इट् सनि वा (७।२।४१) तितीर्षति, तितरिषति, तितरीषति, तॄफलभज (६।४।१२२) इत्येत्वाभ्यासलोपौ—तेरुः। सप्तम्यां जनेर्डः (३।२।९७) इति ख़च्—रथन्तरं साम। अवे तॄस्त्रोर्घञ् (३।३।१२०) अवतारः। भिदादौ (गण० ३।३।१०४) तारा। पयन्ता-दुपधि (द्र० ३।१।१२४) तारो गुणः। रदाभ्यां निष्ठातो नः (८।२।४२) तीर्णः। स्त्रियां क्तिन् वदादिभ्यः क्तिन्निष्ठावत् (३।३।९४ कारिका) तीर्णिः। पातॄतुदिवचि (उ० २।७) इति थक्—तीर्थम्। अर्तिसृधृ (उ० २।१०२) इति तरणिः। भृमृदृ (तु० उ० ३।५३) इत्युनन्—तरुणः। त्रो रश्च लः (उ० १।५) तालु। भूसूवदि (तु० उ० ३।६२) इति सः—तर्पः। कॄतॄकृपिभ्यः कीटन् (उ० ४।१८५) तिरीटं शिरोऽलङ्कारः। अवितॄस्तृ (तु० ३।१५८) इतीः—तरीः। असुन् (दश० उ० ६।४६) तरस्। भृमृशीङ् (तु० उ० १।७) इत्युः—तरुः। यस्तन् (१।१२६) इति प्राक्प्रत्ययात्[2] तरण्डः प्लवविशेषः। गादिभ्यश्च (दश० उ० २।६०) इत्यङ्गच्—तरङ्गो वीचिः। पार तीर (१०।२९२) इत्यस्मात् तीरम् ॥९४८॥

६९५. उदात्ताः ॥

[अथानिट आत्मनेपदिनः]

६९६. गुप गोपने। इतो हृदान्ताः (१।७०३) अष्टावनिट आत्मनेपदिनश्च। गुप्तिज्किद्भ्यः सन् (३।१।५)—जुगुप्सते पापात्। निन्दायामुत्पत्तिश्चिकीर्षितम्, अन्यत्र—गोपते[3]। गुपू रक्षणे (१।२८०)—

१. 'विहायसि' पाठा०।

२. तुलनीयम्—प्राक्प्रत्ययनिर्देशः शारण्डादीनां प्रसिद्धयर्थः (दश० उ० पृ० ९।६)।

३. गोपते इति प्रत्युक्तं सायणेन (धातु० पृष्ठ १८८)।

गोपायति, आयप्रत्ययः (द्र० ३।१।२८)। चुरादौ भासार्थः (१०।१९७) गोपायति ॥९४९॥

६९७. तिज निशाने क्षमायाञ्च। निशानं तीक्ष्णीकरणम्। तितिक्षते कोपम्। क्षमायामुत्पत्तौ सन्विधेः (द्र० ३।१।५) निशाने प्रत्ययान्तरं क्षाप्यते—तेजते[1]। तेजः। तेजनम्। तेजनी। युजिरुचितिजां कुश्च (उ० १।१४६) इति मक्—तिग्मम्। तिजेर्दीर्घश्च (उ० ३।१८) इति स्नः[2]—तीक्ष्णः। चुरादौ (१०।१०२) उत्तेजयति ॥९५०॥

६९८. मान पूजायाम्। मान्बधदान्शान्भ्यः (३।१।६) इत्युत्पत्तौ विचारे सन्—मीमांसते। मीमांसा विचारणा। चुरादौ (१०।२३०) आधृषाद् वा (१०।२०१) इति मानयति, मानति। मानः। माननम्। नप्तृनेष्टृ (उ०।२।९६) इति माता ॥९५१॥

६९९. बध बन्धने। मान्बध (३।१।६) इति जुगुप्सायां सन्—बीभत्सते। अन्यत्र—बाधते। बधकः। चुरादौ बध संयमने (१०।१४) बाधयति ॥९५२॥

७००. रभ राभस्ये। राभस्यं कार्योपक्रमः। संरभते, आरभते। सनि मीमाघु (७।४।५४) इतीण्—आरिप्सते। पोरदुपधात् (३।१।९८) यत्—आरभ्यम्। रभेरशब्लिटोः (७।१।६३) नुम्—आरम्भः, आरम्भणम्। अच् (द्र० ३।१।१३४ वा०)—रम्भः, रम्भा। शकधृषज्ञा (३।४।६५) इति तुमुन्—आरभते भोक्तुम्। अत्यविचमि (उ० ३।११७) इत्यसच्—रभसो निर्विचारा प्रवृत्तिः ॥९५३॥

७०१. डुलभष् प्राप्तौ। लभते। लब्धिमम् (द्र० ३।३।८८; ४।४।२०)। उपलम्भा (द्र० ३।३।१०४)। बाहुलकाल्[3] लब्धिः[4]। लभेश्च

---

१. 'तेजते' प्रत्युक्तः सायणेन (धा० पृ० १८८)। २. 'क्स्नः' इति युक्तः पाठः। ३. अत्र लिबिशेन आन्त्या 'बहुलमेतन्निदर्शनम्' (१०।३२४) इत्यस्य सङ्ख्या निर्दिष्टा। अत्र पूर्वत्र (पृष्ठ १३१) निर्दिष्टा टिप्पणी (३) द्रष्टव्या।

४. यद्यपि लिबिशेन भ्रान्त्या काशिकायाः ३।३।९३ सङ्ख्या निर्दिष्टा। काशिकाकारस्तु लब्धिपदं 'क्तिचक्तौ च संज्ञायाम्' इति वार्तिकेन साधयति, क्षीरस्वामी तु बहुलग्रहणात् क्तिनमाह।

(७।१।६४) इति नुम्—आलम्भः, विलम्भनम्[1] विभाषा चिण्णमुलोः (७।१।६९) अलाभि, अलम्भि, सोपसर्गात् नित्यमाहुः (द्र० ७।१।६९ काशिका०) व्यलम्भि; लाभंलाभम्, लम्भंलम्भम् उपसर्गात् खल्घञोः (७।१।६७) ईषल्लम्भः, सुप्रलम्भः। न सुदुर्भ्यां केवलाभ्याम् (७।१।६८) सुलभम्, दुर्लभम्। आङो यि (७।१।६५)—आलम्भ्यम्। उपात् प्रशंसायाम् (७।१।६६) उपलम्भ्यम्। सनि मीमाघु (७।४।५४) इति लिप्सते। लभते भोक्तुम् (द्र० ३।४।६५)॥

७०२. ष्वञ्ज परिष्वङ्गे। दंशसञ्जस्वञ्जां शपि (तु० ६।४।२५) इति न लोपः, उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—परिष्वजते। सदिस्वञ्जोः परस्य लिटि (तु० ८।३।११८) इति षत्वं नास्ति, श्रन्थिग्रन्थिदम्भिस्वञ्जीनां च (द्र० १।२।६ का०) इति कित्त्वम् - परिषस्वजे। प्राक् सितादड्व्यवायेऽपि (८।३।६३) इति षत्वम्—पर्यष्वजत। सिवादीनां वाड्व्यवायेऽपि (८।३।७१) इति षत्वं वा—पर्यस्वजत। अस्वङ्क्ष्यः, इडभावः[2]—अस्वङ्क्षाताम्। जान्तनशां विभाषा

१. वस्तुतः सानुनासिका 'आरम्भः, आरम्भणम्, आलम्भः, विलम्भनम्' इत्येवमादयः प्रयोगा न रभलभधात्वोः, किन्तर्हि सानुनासिकयोर्धात्वन्तरयो रम्भलम्भयोः। अनयोः धात्वन्तरे किं मानमिति चेद् ब्रूमः, यत्रानयोर्नुम् विधीयते तत्र नुमाभावस्यापि प्रयोगदर्शनात्। तथा—

(क) चरकसंहितायाम् (चिकित्सा १९।४) 'आदिकाले यज्ञेषु पशवः समालभनीया बभूवुः, नालम्भाय प्रक्रियन्ते स्म' इति वाक्ये लभलम्भयोः पृथक् पृथक् प्रयोगदर्शनात्, अर्थान्तरश्रवणाच्च।

(ख) काशिकायाम् (७।१।६४) उद्धृते 'अग्निष्टोम आलम्भः' इति श्रौतवाक्ये प्राप्तोऽपि नुम् न श्रूयते।

(ग) काशकृत्स्नधातुपाठीयकन्नडटीकायां रभलभ धात्वोः 'रभकः, रभः, रभमाणः, रमणीयम्, लभिः, लभनम्, लभकः, लभमानः, इत्यादिप्रयोगेषु नुमोऽदर्शनात्।

तदेव लभलम्भयोः पार्थक्येऽर्थान्तरे च सति 'ब्रह्मणे ब्राह्मणमालभेत' (तै० ब्रा० ३।४।१—१८) इत्यादिषु आलभते इत्यस्य नालम्भनार्थः, अपि तु 'हृदयमालभते' (पार० गृह्य १।८) इत्यादिवत् स्पर्शार्थ एव। वस्तुतस्तु लाघवमिच्छद्भिः पाणिन्यादिभिराचार्यैरेकमेव धातुं पठित्वा द्विप्रकृतीनां शब्दानां साधुत्वमन्वाख्यातम् (अत्र निरुक्तस्य २।२ तथा स्वादादनन्तरमन्तस्थान्तो धातुर्भवतीत्यादिप्रकरणमनुसन्धेयम्)।

२. अनिट्त्वात् प्राप्नोति।

(६।४।३२) क्त्वि न लोपः—स्रङ्क्त्वा, स्रक्त्वा ॥९५५॥

७०३. हद पुरीषोत्सर्गे । हदते। हन्नम्। हन्ने पाने न गोमयमिति प्रमादात् ॥९५६॥

७०४. अनुदात्ता अनुदात्तेतः ॥

७०५. ञिक्ष्विदा अव्यक्ते शब्दे, ७०६. उदात्त उदात्तेत्। क्ष्वेदति । क्ष्वेदिता । यादितश्च (७।२।१६) इति नेट्—क्ष्विण्णः । विभाषा भावादिकर्मणोः (७।२।१७) क्ष्विण्णम्, क्ष्वेदितम्; प्रक्ष्विण्णः, प्रक्ष्वेदितः, निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (१।२।१९) इति सेटो निष्ठाया न कित्त्वम्। ञिक्ष्विदा (४।१३५) क्ष्विद्यति, अक्ष्विदत् ॥९५७॥

७०७. स्कन्दिर् शोषणे । इतः क्तिपर्यन्ताः (१।७१९) पञ्चदशानिटः परस्मैपदिनश्च । स्कन्दति, स्कद्यते । परिस्कन्दः प्राच्यभरतेषु (८।३।७५) वा षत्वम्—परिष्कण्णः, परिस्कन्नः । वेः स्कन्देरनिष्ठायाम् (८।३।७३) वा षत्वम्—विष्कन्दति, विस्कन्दति; नेह—विस्कन्न । परेश्च (८।३।७४) परिष्कन्दति, परिस्कन्दति। अस्कन्दत्, मास्कान्त्सीत् । नीग्वञ्चु (७।४।८४) इति चनीस्कद्यते । स्कन्देः सलोपश्च (उ० १।१५) इत्युः—कन्दुः स्वेदनी । अचि (द्र० ३।१।१३४) स्कन्दः । स्कन्देश्च स्वाङ्गे (उ० ४।२०६) घः—स्कन्धः । क्त्वि स्कन्दिस्यन्दोः ( ६।४।३१ ) इति नलोपो नास्ति—स्कन्त्वा । विशिपतिपदिस्कन्दां (३।४।५६) णमुल्—गेहावस्कन्दमास्ते॥९५८॥

७०८. यभ विपरीतमैथुने । यभति । यब्धा । यभ्यम् । जभि च इति दौर्ग.[1]—जम्भति ॥९५९॥

७०९. णम प्रह्वत्वे । प्रह्वत्वं नम्रत्वम् । प्रणमति । कर्मकर्तरि न दुहस्नुनमां यक्चिणौ (३।१।८९) नमते दण्डः स्वयमेव, अनंस्त । यमरमनमातां सक् (तु० ७।२।७३) अनंसीत् । ज्वलह्वलह्मलचलनमाम् (१।५५५) इति वा मित्—नामयति, नमयति । उपसर्गान्न नित्यम्—प्रणमयति । नमिकम्पि (३।२।१६७) इति रः—नम्रः । फलिपाटि (उ० १।१८) इति नाकुर्वल्मीकम् ॥९६०॥

---

१. कोऽभिप्रायः, कुत्रत्यश्च इति न ज्ञायते । 'हन्यमानः गायति प्रमादात्' पाठा० ।

२. काशकृत्स्न 'जभि गर्वे' पठति (पृष्ठ ७७ ।

७१०. गम्लृ सृप्लृ गतौ । इषुगमियमां छः (७।३।७७) गच्छति । समो गम्यृच्छि (१।३।२९) इति तङ्—संगच्छते । आगमत् (द्र० ३।१।५५) गमहनजन (६।४।९८) इत्युपधालोपः—जग्मुः । विभाषा गमहन (७।२।६८) इति क्वसौ वेट्—जग्मिवान्, जगन्वान् । गमेरिट् परस्मैपदेषु (७।२।५८) गमिष्यति, जिगमिषति । वा गमः (१।२।१३) इति वा लिङ्सिचोः कित्वम्—संगसीष्ट, संगंसीष्ट; समगत, समगंस्त । अज्झनगमां सनि (६।४।१६) इत्यणादेशस्य गमेर्दीर्घविधेः (द्र० काशिका ६।४।१६) अस्य नास्ति—संजिगंसते । गमश्च (३।२।४७) इति खच्—प्लवंगमः[1] । खच्च डिद् (३।२।३८ वा०) प्लवंगः[1] । डः (द्र० ३।२।३८,४८ भाष्य) प्लवगः[1] । विहायसो विह च (३।२।३८ वा०) विहंगमः । डे च (३।२।३८ वा०) विहगः । विहंगः (द्र० ३।२।३८ वा०) । उरसो लोपश्च (३।२।४८ वा०) उरगः । उरंगमोऽपीति केचित् । तुरस्य तुरादेशः—तुरंगमः । लषपत (३।२।१५४) इत्युकञ्—आगामुकः । गत्वरश्च (३।२।१६४) । सितनिगमि (उ० १।७०) इति तुन्—आगन्तुः । गन् गम्यद्योः (दश०उ० ३।६१) गङ्गा । गमेर्डोः (उ० २।६७) गौः । वर्तमाने पृषद् (उ० २।८४) इति जगत् । लीलंगुः (द्र० उ० १।३७) क्रिमिः । गमेर्गश्च (उ० २।७७) इति क्युन्[2]—गगनम् । भविष्यति गम्यादयः (३।३।३), गमेरिनिः (उ० ४।६) गामी ग्रामम् । आङि णित् (उ० ४।७) आगामी । गमेरा च (उ० ४।१६६) इति अन्—गाम्रम् । ग्रहवृदृनिश्चिगमश्च (३।३।५८) इत्यप्—गमः । गोचरसंचर (३।३।११९) इति निगमो वेदादिः । सर्पति, असृपत् । सर्पोऽहि । के (द्र० ३।१।१३५) सृपः । स्फायि (उ० २।१३) इति रक्—सृप्रचन्द्रमाः, सृप्रा नाडी । अर्चिशुचि (उ० २।१०८) इतीस्—सर्पिः ॥९६१,९६२॥

७११. यम उपरमे । उपरमो निवृत्तिः । इषुगमियमां छः (७।३।७७) यच्छति । उपाद् यमः स्वकरणे (१।३।५६) तङ्—स्वकरणं परिणयः[3]—उपयच्छते कन्याम् । आङो यमहनः (१।३।२८) आयच्छते । समुदाङ्भ्यो यमोऽग्रन्थे (१।३।७५) संयच्छते । यमो गन्धने (१।२।१५) कित्वम्—

१. 'प्लवङ्गमः, प्लवङ्गः, प्लवगः' पाठा० ।

२. अनेन सूत्रेण युच् विधीयते, न क्युन् । ।

३. भाष्यकारस्तु स्वकरणमात्र आह ।

उदायत । विभाषोपयमने (१।२।१६) उपायत, उपायंस्त । यमरमनमातां सक्[1] च (तु० ७।२।७३) अयंसीत् । यंयम्यते (द्र० ७।४।८५) । यमोऽपरिवेषणे (१।५५९) मित्—नियमयति । वाचि यमो व्रते (३।२।४०) खच्, वाचंयमपुरन्दरौ (६।३।६९) । अच् (द्र० ३।१।१३४) यमः । नियतः । यतिः । नियतिः । न पादमि (१।३।८९) इति तङ्—आयामयते । यमः समुपनिविषु च (३।३।६३) इति वा घञ्-संयमः, संयामः; उपयमः, उपयामः; नियमः, नियामः; वियमः, वियामः । ट्वित् (द० उ० ८।७९) यन्त्रम् उदिदिति श्रीभोज:[2]—यत्वा, यमित्वा ॥९६३॥

७१२. तप संतापे । तपति । निसस्तपतावनासेवने (८।३।१०२) षत्वम्—निष्टपति । उद्विभ्यां तपः (१।३।२७) तङ्—उत्तपते, वितपते । स्वाङ्गकर्मकाच्च (१।३।२७ वा०) उत्तपते पृष्ठम् । तपस्तपः कर्मकस्यैव (३।१।८८) कर्तुः कर्मत्वम्—तप्यते तपस्तापसः, तपोऽर्जयतीत्यर्थः । तपोऽनुतापे च (३।१।६५) इति न यक्चिणौ—अतप्त तपस्तापसः, अन्वतापि पापेन कर्मणा । नन्द्यादौ (गण० ३।१।१३४) तपनः सूर्यः । असूर्यललाटयोर्दृशितपोः (३।२।३६) खश्—ललाटन्तपः । द्विषत्परयोस्तापे (३।२।३९) द्विषन्तपः, संज्ञायाम् (३।२।४६) परन्तपः[3] । असुन् (द० उ० ९।४९) तपः ॥९६४॥

७१३. त्यज हानौ । हानिस्त्यागः । त्यजति । त्याज्यम्—त्यजियज्योः कुत्वं नेष्टम्[4] ॥९६५॥

७१४ षञ्ज सङ्गे । दन्शसञ्जस्वञ्जां शपि (तु० ६।४।२५) नलोपः, उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—व्यतिषजति । स्थादिष्वभ्यासे चाभ्यासस्य (८।३।६४) अभिषषञ्ज । जान्तनशां विभाषा (६।४।३२)

---

१. 'सृक्' पाठ० । 'सक्' इति काशिका । २. द्र० पुरुषकारः, पृष्ठ १०० ।

३. परन्तपस्तु 'द्विषत्परयोस्तापे' (३।२।३९) इत्यनेनैव सिद्ध्यति । अत्र कश्चित् पाठभ्रंशो जातः । "द्विषन्तपः, परन्तपः । संज्ञायाम् (३।२।४६) शत्रुंतपः" इति युक्तः पाठः स्यात् ।

४. यजेण्यंति कुत्वाभावः 'यजयाज' ७।३।६६ इत्यनेनैव सिद्धः, त्यजेश्च 'ण्यति प्रतिषेधे त्यजेरुपसंख्यानम्' इति तत्रस्थेनैव वार्तिकेन ।

क्त्वि नलोपः—सक्त्वा, सङ्क्त्वा। उत्सङ्गोऽङ्कः। प्रासङ्गः। निषङ्गस्तूणी[1]। षञ्जिमञ्जिभ्यां क्थिन् (उ० ३।१५४) सक्थि ॥९६६॥

७१५ दृशिर् प्रेक्षणे। पाघ्राध्मा (७।३।७८) इति पश्यादेशः—पश्यति। समो गम्यृच्छि (१।३।२९) इत्यत्र[2] दृशेश्च (१।३।२९ काशिका) इति तङ्—सम्पश्यते। विभाषा सृजिदृशोः (७।२।६५) थलीट्—ददर्शिथ, दद्रष्ठ। सृजिदृशोर्झल्यमकिति (६।१।५८) इत्यमागमः—द्रष्टा। स्यसिच्सीयुट्तासिषु (६।४।६२) इति चिण्वदिट् च—दर्शिष्यते त्वया। इरितो वा (३।१।५७) इत्यङ्, ऋदृशोऽङि गुणः (७।४।१६)—अदर्शत्, अद्राक्षीत्, न दृशः (३।१।४७) इति क्सो नास्ति। ज्ञाश्रुस्मृदृशां सनः (१।३।५७) तङ्—दिदृक्षते। न दृशः उदर्शत् (७।४।४७) वा—अददर्शत्, अदीदृशत्। अभिवादिदृशोरात्मनेपदे (१।४।५३ वा०) वा कर्तुः कर्म संज्ञा—राजा दर्शयते भृत्यान्, भृत्यैर्वा। पाघ्राध्माधेड्दृशः शः (३।१।१३७) उत्पश्यः। असूर्यललाटयोर्दृशितपोः (३।२।३६) खश्—असूर्यम्पश्या राजदाराः। उग्रम्पश्येरम्मदपाणिन्धमाश्च (३।२।३७)। त्यदादिषु दृशोऽनालोचने कञ्च (३।२।६०) तादृक्, तादृशः। तादृक्षः (द्र० ३।२।६० काशिका)। समानान्ययोश्च (३।२।६० वा०) सदृशः, अन्यादृशः। दृशेः क्वनिप् (३।२।९४) पारदृश्वा। दृशः, आदर्शः। अजिदृशिकम्यमि (उ० १।२७) इति पशुः। भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् (३।३।१३० वा०) सुदर्शनं। कर्मणि दृशिविदोः साकल्ये (३।४।२९) णमुल्—कन्यादर्शं वरयति ॥९६७॥

७१६. दन्श दशने। दशनं दन्तकर्म। दंशसञ्जस्वञ्जां शपि (तु० ६।४।२५) इति नलोपः—दशति। लुपसद (३।१।२४) इति भावगर्हायां यङ्—जपजभदहदश (७।४।८६) इति अनुस्वारागमः—दन्दश्यते। यजजपदशां यङः—(३।२।१६६) इत्यूकः—दन्दशूकः। कर्मण्यण् (३।२।१) धूर्तदंशो मार्जारः। दशने (धातुसूत्र १।७१६) इति निर्देशात्[3] नलोपः। उपदंशस्तृतीयायाम् (३।४।४७) इति णमुल्—मूलकोपदंशं भुङ्क्ते। दाम्नी (३।२।१८२) इति ष्ट्रन्—दंष्ट्रा। तुदशो गुणश्च (तु० उ०

१. तूणी इषुधिः। द्र० अमर २।८।८९।

२ 'इति वर्तमाने' पाठा०।

३. स्मृत धातुवृत्तौ (पृष्ठ १९९)।

२।१४९ नारा०) दशा । [1]षिद्भिदादिभ्योऽङ् (३।३।१०४) दशा वर्तिरवस्था च, दशा वस्त्रान्तावयवाः ॥९६८॥

७१७. कृप विलेखने । विलेखनं हल्योत्किरणम् । कर्पति । तुदादौ (६।६) कृपति । स्पृशमृशकृषतृपदृपां सिज्वा (३।१।४४ वा०) अक्राक्षीत्, अकार्क्षीत्; पक्षे क्सः अकृक्षत । उर्ऋत् (७।४।७) वा—अचकर्षत् अचीकृषत् । नन्द्यादौ (गण ३।१।१३४) संकर्षणः । अचि (द्र० ३।१।१३४) कर्षः, आकर्षो द्यूतफलकम् । सप्तम्यां चोपपीडरुधकर्षः (३।४।४९) भ्राष्ट्रोपकर्षं धानाः खादति । कृषिचमितनि (उ० १।८०) ऊः—कर्षूः । इक् कृष्यादिभ्यः (३।२।१०८ वा०) कृषिः । कृषेर्वृद्धिश्चोदीचाम् (उ० २।३८) कर्षकः कार्षकः । श्विकृषोः किकन् (द० उ० ३।१२) कृषिकः । कृषेरादेश्च चः (द० उ० १।४) चर्षणिर्वेदया[2] । कृषेर्वर्णे (उ० ३।४) नक्—कृष्णः ॥९६९॥

७१८. दह भस्मीकरणे । दहति । लुपसदचर (३।१।२४) इति यङ्—दन्दह्यते । दादेर्घः[3] (कातन्त्र ३।८।५७) दग्धा, धक्ष्यति (द्र० ८।२।३७) न्यङ्क्वादौ (गण० ७।३।५३) दाघः, निदाघः, अवदाघो मध्ये[4] । अवदाहोऽन्यः ॥९७०॥

७१९. मिह सेचने । मेहति । मेहनम् । क्वसि मीढ्वान् (द्र० ६।१।१२) दाम्नी (३।२।१८२) इति ष्ट्रन्—मेढ्रम्[5] । न्यङ्क्वादौ (गण० ७।३।५३) मेघः ॥९७१॥

७२०. कित निवासे रोगापनयने च । गुप्तिज्किद्भ्यः (३।१।५) इत्यु पसौ सन्—चिकित्सति । चकरात् संशये च—विचिकित्सति । निवासे नास्ति—केतति । केतनम् । संकेतः । केतुः । केतकी । चुरादौ केत निमन्त्रणे (१०।२७६)—संकेतयति ॥९७२॥

७२१. अनुदात्ता उदात्तेतः ॥

७२२. दान अवखण्डने । इतो वहान्ता (१।७२१) दशानिट

---

१. इत आरभ्य आ अन्तं क्वचित् । २. द्र० हैमोणादि ६४१ ।

३. अत्र क्षीरेण पाणिनिसूत्रस्य पाठान्तरं मत्वा तदीयसूत्रसंख्या निर्दिष्टा ।

४. न्यङ्क्वादिगणे—'संज्ञायामघनिदाघनिदाघाः' इत्येवं पठ्यते ।

५. 'मेढ्रः' पाठा० ।

उभयपदिनश्च । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य (३।१।६) इति सन्—दीदांसते, दीदांसति ॥९७३॥

७२३ शान तेजने । शीशांसते शस्त्रम्, शीशांसति ॥९७४॥

७२४. डुपचँष् पाके । सानुनासिकोऽकारः सर्वेषामुपलक्षणार्थः । उपदेशेऽजनुनासिक इत् (१।३।२) इतीत् संज्ञा यथा स्यात् । पचते, पचति । पक्त्रिमम् । षित्त्वात् (द्र० ३।३।१०४) अङ्—पचा । स्थागापापचो भावे (३।३।९५) क्तिन्—पक्तिः । पचो वः (८।२।५२) पक्वम् । पचादौ (गण० ३।१।१३४) श्वपचः । अणपीष्यते—श्वपाकः मांसपाकः न्यङ्कुश्वादिः (गण० ७।३।५३), तत्रैव निपातनात् कर्मकर्तरि उण्[1]—दूरेपाकुः फलेपाकुः । परिमाणे पचः (३।२।३३) खश्—द्रोणम्पचः । मितनखे च (३।२ ३४) मितम्पचः[2], नखम्पचः । राजसूयसूर्य (३।१।११४) इति कृष्टपच्यः । अलङ्कृञ् (३।२ १३६)—इष्णुच्—पचिष्णुः । पचेरेलिमः कर्मकर्तरि (द्र० कारिका ३।१।९६) पचेलिमा माषाः । मांसस्य पचि युड्घञोः (द्र० का० ६।१।१४४) लोपो वा—मांस्पाकः मांसपाकः; मांस्पचनम्[3] मांसपचनम्[3] ॥

७२५. भज सेवायाम् । भजते भजति । तृफलभज (६।४।१२२) इति भेजे, भेजुः । भजो ण्विः (३।२।६२) अर्धभाक् । सम्पृचानुरुध (३।२।१४२) इति घिनुण्[4]—भागी । भज भगः पद च (द्र० काशिका ३।३।१२५) इति भगः । घञ् (द्र० ३।३।१८—१९) भागः । भक्तुम् । भक्ता । चुरादौ भाज पृथक्कर्मणि (१०।२७१)—विभाजयति ॥९७६॥

७२६. रञ्ज रागे । रञ्जेश्च (६।४।२६) इति शपि न लोपः—रजते, रजति । कुषिरजोः प्राचां श्यन् परस्मैपदं च (३।१।९०) रज्यति वस्त्रं स्वयमेव । घञि च भावकरणयोः (६।४।२७) न लोपः—रागः, अधिकरणे रङ्गः । रञ्जेर्णौ मृगरमणे (६।४।२४ वा०) रजयति मृगान्, नेह-

---

१. 'उञ्' पाठा० ।     २. इतोऽग्रे 'कृपचः । आत्मनेपदे किंपचानः' इति क्वचिदधिकम् । अत्र अमरकोशो (२।९।४८) द्रष्टव्यः ।

३. 'मास्पचनी, मांसपचनी' पाठा० ।

४. अष्टाध्याय्यां घिनुण् प्रत्ययः ।

रञ्जयति नटः । रजनरजकरजःसु कित्वम् (तु० ६।४।२४ वा०) शिल्पिनि ष्वुन् नृतिखनिरञ्जिभ्यः (३।१।१४५ सू० वा०) रजकः[1] । महारजनं कुसुम्भम्[2]। गौरादौ (गण ४।१।४१) रजनी । जनीजृष्क्नसुरञ्जोऽमन्ताश्च (१।५५४) इति मितसंज्ञाशासनादन्यत्राप्याहुर्यथा—राजर्षिकल्पो रजयन्[3] । सम्पृच (३।२।१४२)—रागी । पृषिरञ्जिभ्यां कित् (उ० ३।१११) इत्यतच्—रजतम् ॥९७७॥

७२७. शप आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । वाचा शरीरस्पर्शने चानेकार्थत्वात् । शपते, शपति । शप उपलम्भने (१।३।२१ वा०) तङ्, श्लाघह्नुङ्स्थाशपां (१।४।३४) इति सम्प्रदानम्—शपते चैत्राय । शपति रिपुं पुरोधाः । शीङ्शपिरुहि (तु० उ० ३।११३) इत्यथच्—शपथः । शाशपिभ्यां ददनौ (उ० ४।९७) शब्दः[4] । शपेर्वश्च (उ० १।१०५) इति कलः—शबलो वर्णः ॥९७८॥

७२८. त्विष दीप्तौ । त्वेषते, त्वेषति । त्विट् । नप्तृनेष्टृ (उ० २।९५) इति त्वष्टा अर्कः[5]। अवपूर्वो दाननिरसनयोश्चेति दुर्गः । निरसनमपाकरणम् । अवत्वेषति गां द्विजाय, अवत्वेषते मलम् ॥९७९॥

७२९. यज देवपूजासंगतिकरणदानेषु । यजते, यजति । वचिस्वपियजादीनां किति (६।१।१५) सम्प्रसारणम्—इज्यते, इष्टः, इष्टिः । लिट्यभ्यासस्योभयेषाम् (६।१।१७) इयाज । यजयाचरुच (७।३।६६) इति कुत्वं नास्ति—याज्यम् । प्रयाजानुयाजौ यज्ञाङ्गे (७।३।६२) अन्यत्र—प्रयागः, अनुयागः । करणे यजः (३।२।८५) णिनिः—अग्निष्टोमयाजी । सुयजोर्ङ्वनिप् (३।२।१०३)—यज्वा । पूङ्यजोः शानन् (३।२।१२८)—यजमानः । ऋत्वि- यजति (द्र० ३।२।५९)—ऋत्विक् । यजजपदशां यङः (३।२।१६६) इत्यूकः यायजूकः । यजयाच (३।२।९०) इति नङ्—यज्ञः । व्रजयजोर्भावे क्यप् (३।३।

१. यथाह सायणः—'ण्यामे तु यङ्कीत्यपि रञ्जेर्मित्त्वविधानाद्विकल्पेन नलोप इति तरङ्गिणीपदमञ्जर्यौ' (पृष्ठ २०४) । अयं पाठो नोपलभ्यतेऽत्र तरङ्गिण्याम् ।

२. 'काञ्चनं कुसुम्भं च' पाठ० ।  ३. अनुपलब्धमूलम् ।

४. इतोऽग्रे 'शब्दनम्' इति क्वचिदधिकम् ।

५. 'सूर्यः' पाठ० ।

९८) इज्या। उणादौ यष्टिः[1]। यर्तिपूवपि (उ० २।११८) इत्युस्—यजुः काठकम्[2] ॥९८०॥

७३०. डुवप् बीजसन्ताने। बीजानां सन्तानः क्षेत्रे विस्तारणम्। वपते, वपति। [प्रणिवपते] प्रणिवपति (द्र० ८।४।१७)। उप्यते। वप्ता। उवाप, ऊपुः, ऊपे। उप्तः। ऋहलोर्ण्यत् (३।१।१२४) इति ण्यत्—वाप्यः। उप्त्रिमम्। गृधिवपिभ्यां रन् (तु० उ० २।२७) वप्रः। अर्तिपृवपि (उ० २।११८) इत्युस्—वपुः। वसिवपियजिराजि (द० उ० १।५१) इतीञ्—वापिः। भिदादौ (गण० ३।३।१०४) वपा ॥९८२॥

७३१. वह प्रापणे। वहते, वहति। प्रणिवहते, प्रणिवहति (द्र० ८।४।१७)। उवाह, ऊहुः, ऊहे। सहिवहोरोदवर्णस्य (६।३।११२) वोढा। वादिखादिनीवहीनाम् (१।४।५२ वा०) कर्मसंज्ञा नास्ति—वाहयति भारं चैत्रेण मैत्रः। वहं करणम् (३।१।१०२)। कर्त्रोर्जीवपुरुषयोर्नशिवहोः (३।४।४३) णमुल्—पुरुषवाहं वहति प्रवाहः। उह्यतेऽनेनेति वाहः[4] स्कन्धोऽध्वश्च[5]। गोचरसंचर। (३।३।११९) इति वहः साधुः वहो ध च (द० उ० १।१६६ कपाठः) इत्यूः—वधूः। वहिश्रिश्रुयुद्रुग्लाहा (उ० ४।५१) इति निः—वह्निः। परिसाद्भ्य इत्रोत्रौ (उ० ४।१७३)—वहित्रम् ॥९८३॥

७३२. अनुदात्ताः स्वरितेतः ॥

७३३. वस निवासे। ७३३. अनुदात्त उदात्तेत्। वसति। उवास, ऊषुः। उष्यते, शासिवसिघसीनां च (८।३।६०) इति षत्वम्। निवत्स्यति (द्र० ७।४।४९)। न पादमि (१।३।८९) इति तङ्—वासयते। मायायां सदासश्रुवः (३।२।१०८) ऊषिवान्। अमावास्यदन्यतरस्याम् (तु० ३।१।१२२) अमावास्या, अमावस्या। वसतिक्षुधोरिट् (७।२।५२) गत्यर्थाकर्मक (३।४।७२) इति क्तः—उषितः। मृडमृद (१।२।७) इति [illegible]

१ वसेस्तिः (उ० ४।१७६) इति बाहुलकाद् यजेरपि।

२. क्षीरस्वामी कठशाखाध्यायी आसीदिति समाव्यत। [illegible] कठशाखा उपलभ्यन्ते। ३. 'टुवप' इति काशकृत्स्न. [illegible]

४. 'वह.' पाठा०। तथासाधु, उत्तरत्र वहशब्दस्य निर्देशात्।

५. 'स्कन्धदेश.' पाठा०।

क्त्विच—उषित्वा । वसेस्तव्यत् कर्तरि णिच्च ( ३।१।९६ वा० )—वास्तव्यः । अमेरातिः, वहिवस्यर्तिभ्यश्चित् (उ० ४।५९,६०)—वसतिः । शृस्वृस्निहि (उ० १। ११) इत्युः—वसुः । वसेस्तुन् (उ० १।७६) वस्तु । अगारे णिच्च (उ० १। ७७) वास्तु । अर्तिकमिभ्रमिदेविवासिभ्यश्चित् (तु० द० उ० ८।६२) इत्यरन्—वासरम् । वसिवपि (उ० ४।१२५) इतीञ्—वासिः, वासी तक्षभाण्डम् रक् (द्र० उ० २।१३)—उस्रो रश्मिः, षत्वं नेष्यते । धापॄवस्यज्यतिभ्यो नः (उ० ३।६) वस्नं मूल्यम् । वसेः सरः (द्र० उ० ३।७१)—वत्सरः । वसेः कसुन् (द्र० उ० ४।२३४)—उषः । उपसर्गे वसेः (उ० ३।११४) इत्यथः—आवसथः तृभूवहिवसि (उ० ३।१२८) इति झच्—वसन्तः वसस्तिप् (तु० द० उ० १।७४—कपाठ) वस्तिर्मेढ्रोर्ध्वे नाभेरधः, वस्तयो वस्त्रान्तावयवाः । वस्त गन्ध अर्दने (१०।१३३) अस्य वस्त इञागः । अदादौ वस आच्छादने ( २।१४ ) वस्ते वस्त्रम्, वाससम् । दिवादौ वसु स्तम्भे (४।१०९) वस्यात । चुरादौ वस स्नेहच्छेदापहरणेषु[1] (१०।१८२), वास उपसेवायाम् (१०।२६६) वासयति ॥९८३॥

७३५. वेञ् तन्तुसन्ताने । इतस्त्रयोऽनिटः । वयते, वयति । वेञो वयिः (२।४।४१) ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्। लिटि वयो यः (६।१।३८) इति यकारस्य नास्ति—ऊयुः । थलि च[2]—उवयिथ । वश्चास्यान्यतरस्यां किति (६।१।३९) ऊवुः । लिट्यन्यतरस्याम् (२।४। ४०) इति यदा वयिर्नास्ति तदा वेञ इति धातोरभ्यासस्य च सम्प्रसारणनिषेधः—ववौ, ववुः । शाच्छासाह्वाव्यावेपां युक् (७।३।३७) वाययति । ह्वावामश्च (३।२।२) इत्यणि तन्तुवायः[3] । ल्यपि च (६।१।४१) इति न सम्प्रसारणम्—प्रवाय । ऊतियूतिजूति (३।३।९७) इत्यूतिर्वपनम् । वेञो डिः (तु० द० उ० १।६२) विः पक्षी । मनिन् (द० उ० ६।७३) वेमा । वेञो डिच् (द० उ० १।३९)—वीचिः ॥९८४॥

---

१. '० च्छेदोपसंहरणेषु' पाठा० ।

२. अत्र लिनिर्देशेन भाव्यमिदं सूत्रप्रतीकमिति मत्वा ६।४।१२१ सङ्ख्या निर्दिष्टा, नास्य सूत्रस्य किञ्चित् कार्यम् ।

३. 'तन्त्रवायः' पाठा० ।

७३६. व्येञ् संवरणे। संवरणमाच्छादनम्[1] । व्ययते, व्ययति। संवीयते । न व्यो लिटि (६।१।४६) इत्येच आत्वं नास्ति—संविव्याय । इडत्यर्तिव्ययतीनाम् (७।२।६६) संविव्ययिथ । अनभ्यासस्य[2] इत्युपधादीर्घो नास्ति । स्वपिस्यमिव्येञां यङि (६।१।१९) सम्प्रसारणम्—संवेवीयते । व्यश्च (६।१।४३) इति न ल्यपि सम्प्रसारणम्—संव्याय । विभाषा परेः (६।१।४४)—परिवीय परिव्याय । शाच्छासाह्वा (७।३।३७) इति युक्—संव्याययति । नौ व्यो यलोपः पूर्व[पद]स्य च दीर्घः (उ० ४।१३६) नीविः, नीवी[3] ॥९८५॥

७३७. ह्वेञ् स्पर्धायां शब्दे च[4] । ह्वयते, ह्वयति । निसमुपविभ्यो ह्वः (१।३।३०) तङ्—निह्वयते, संह्वयते, उपह्वयते, विह्वयते । स्पर्धायामाङः (१।३।३१) मल्लो मल्लमाह्वयते । आह्वयते । ह्वः सम्प्रसारणम्, अभ्यस्तस्य च (६।१।३२,३३) जुहावयिषति, णौ च संश्चङोः[5]—जुहावयिषति, अजूहवत् । लिपिसिचिह्वश्च (३।१।५३) इत्यङ्—आह्वत । आत्मनेपदेष्वन्यतरस्याम् (३।१।५४) आह्वत आह्वास्त । शाच्छासा (७।३।३७) इति युक्—ह्वाययति । ह्वावामश्च (३।२।२) इत्यण्—स्वर्गाह्वायः । आतश्चोपसर्गे (३।१।१३६) प्रह्वः । ह्वः सम्प्रसारणं च न्यभ्युपविषु (३।३।७२) इत्यप्—निहवः । आङि युद्धे (३।३।७३) आहवः । निपानमाहावः (३।३।७४) । भावेऽनुपसर्गस्य (३।३।७५) हवः । छित्वरादौ (द्र० उ० ३।१) उपह्वरः । बाहुलकात् आह्वयः ॥९८६॥

---

१ 'संवरणमुपयोगः । व्ययति व्ययते व्यय करोतीत्यर्थः' इति काशकृत्स्नधातुपाठकन्नडटीकानुसारमर्थनिर्देशः (द्र० पृष्ठ १६०) । एतद्धातुनिष्पन्ने 'व्यय' शब्दे चायमेवार्थः स्पष्टमुपलभ्यते ।

२. अत्र लिडिति आन्त्या ६।१।८ सूत्रसंख्या निर्दिष्टा । वाक्यस्यास्य तात्पर्यं न विद्मः ।

३. 'मूलधनम्' इति क्वचिदधिकम् ।

४. 'स्पर्धायां वाचि' इति काशकृत्स्नः (पृ० १६१) ।

५. ह्वः संप्रसारणम् (६।१।३२) इत्यत्र 'णौ च संश्चङोः' इत्यनुवर्तनादिति भावः । लिडिशेनात्र आन्त्या सूत्रनिर्देश इति बुद्ध्वा ६।१।३१ सूत्रसंख्या निर्दिष्टा । 'णौ च संश्चङोः' इत्यनेन सूत्रेण (६।१।३१) तु श्वयतेर्विभाषा सम्प्रसारणं विधीयते ।

७३८. [अनुदात्ताः][१]।

७३९. वद व्यक्तायां वाचि, ७४०. 'वदात्त उदात्तेत्[२]।

वदति। वादिता। भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (१।३।४७) तङ्—वदते चार्वी लोकायते, भातीत्यर्थः; गेहे वदते, यतत इत्यर्थः, क्षेत्रे विवदन्ते, नाना वदन्तीत्यर्थः; परदारानुपवदते, रहस्युपच्छन्दयतीत्यर्थः। व्यक्तवाचां समुच्चारणे (१।३।४८) सम्प्रवदन्ते[३] द्विजाः। विभाषा विप्रलापे (१।३।५०) विप्रवदन्ते मौहूर्तिकाः, विप्रवदन्ति वा[४]। अनोरकर्मकात् (१।३।४९) अनुवदते कठः कलापस्य[५]। अपाद् वदः (१।३।७३) अकर्त्रभिप्राये क्रियाफले—अपवदते, अपवदति। उद्यते। वदव्रज (७।२।३) इति वृद्धिः—अवादीत्। न पादम्याङ्यमाङ्यसपरिमुह-रुचिनृतिवदवसः (१।३।८९) आत्मनेपदं णिचि—वादयते वीणाम्। अवद्यपण्यवर्या गर्ह्य (३।१।१०१) इत्यवद्यं गर्ह्यं साधु। राजसूयसूर्य (३।१।११४) इति मृषोद्यम्। वदः सुपि क्यप् च (३।१।१०६) ब्रह्मोद्यम्, ब्रह्मवद्यम्। प्रियवशे वदः खच् (३।२।३८) प्रियंवदः, वशंवदः। यजजपदशां यङः (३।२।१६६) वदेरपीष्यते[६] वावदूकः। उषितः—नितु (७।२।९) इति नेट्, इडपीष्यते—उदितिः। मृडमृद (१।२।७) इति क्त्वा कित्—उदित्वा। शब्द-गत्यर्थवदेषु (१।४।६९) गतिसंज्ञः—अच्छोद्य। वृतॄवदि (उ० ३।६२) इति स.—वत्सः। वदान्य. (उ० ३।१०४) वदान्यो दाता[७]। वदन्योऽपीष्टः। वमिवदि-वदि (द० उ० १।४२) इतीञ्—वादिः। मुवादिभ्यो णित्र् (उ० ४।१७७) इवेत०) वादित्रम् ॥९८७॥

---

१. केनाऽपि नाममनुदात्तत्वविधानार्थं सूत्रमिदमपेक्षते, न चोपलभ्यते।

२. काशकृत्स्न्यायेन सूत्रमिदमनेनोत्तरेण चोभाभ्यां सबध्यते।

३. 'प्रवदन्त' पाठा०।

४. 'वा' क्वचिन्न।

५. 'कलापकस्य' पाठा०।

६ 'यजजप इत्यत्र वदेरनुपदेशः कार्य इति पदकारवचनाद्वृषः' इति अमरटीकायां (३।१।२५) क्षीरस्वामी। लिङ्गिलेशानाम तुलनार्थं उणादेः ४।४१ सत्रा निर्दिष्टा। चिन्त्या, यजजप इत्याद्यङ्विधायकस्य सूत्रस्य ग्रन्थस्य निर्देशात्।

७ 'दानशीलः' पाठा०।

## ॥ अथादादिगणः ॥

### [ अथानिटौ परस्मैपदिनौ ]

१. अद भक्षणे । इतो द्वावनिटौ परस्मैपदिनौ च । अत्ति, अदिप्रभृतिभ्यः शपः (२।४।७२) लुक् । अदन् अदती । व्यतिहारे (द्र० १।३।१४) व्यत्यदन्ते[1] । लुङ्सनोर्घसॢ (२।४।३७)—अघसत्, जिघत्सति । लिट्यन्यतरस्याम् (२।४।४०)—जघास, जक्षुः, शासिवसिघसीनां च (८।३।६०) इति षत्वम् । आद । इडत्त्यर्तिव्ययतीनाम् (७।२।६६) आदिथ । अत्स्यति । अदः सर्वेषाम् (७।३।१००) इति लङ्यट्—आदत् । अदिखादिनीवहीनां (१।४।५२ वा०) कर्मसंज्ञा नास्ति—आदयति पिण्डीं चैत्रेण । अदो जग्धिर्ल्यप्ति किति (२।४।३६) जग्धम्, जग्ध्वा, प्रजग्ध्य । उणादावप्सम् (द्र० उ० ३।१०) । सृघस्यदः क्मरच् (३।२।१६०) अद्मरः, घस्मरः । घस्लृ-भावेऽच्युपसंख्यानम् (२।४।३७ वा०) प्रात्तीति प्रघसः । उपसर्गेऽदः (३।३।५९) विघसः, नेह—घासः, घञपोश्च (२।४।३८) इति घस्लादेशः । नौ ण च (३।३।६०)—न्यादः, निघसः । अदोऽनन्ने (३।२।६८) विट्[2]—आममत्ती त्यामात्[3], नेह—अन्नादः, अण् (द्र० ३।२।१) । क्रव्ये च (३।२।६९) क्रव्यात्[4], क्रव्यादः । अदिशदि (उ० ४।६५) इति क्रिन्—अद्रिः । अदेरिनन् त्रिनिश्च (द्र० द० उ० १।३७) अत्रिर्मुनिः, अत्री क्रिमिः । जस्त्वादौ (द्र० उ० ४।१०२) अत्नुः[5] । अदेर्धश्च (द० उ० ६।७१) इति क्वनिप्—अध्वा मार्गः । अदो नुम् धौ च (द० उ० ९।६९) इत्यसुन्—अन्धोऽन्नम् । घसेः किच्च (उ० ४।३४) इतीरन्—क्षीरम् ॥१॥

२. हन हिंसागत्योः । हन्ति । हन्ता । ऋद्धनोः स्ये (७।२।७०) इतीट्—हनिष्यति । हो हन्तेर्ञ्णिन्नेषु (७।३।५४) इति घः—अघानि,

---

१. 'व्यत्यने' पाठा० ।

२. सार्वत्रिकोऽप्ययपाठोऽयम् 'विट्' इति शुद्धः पाठः ।

३. अथ वा [ऽग्निना] ऽऽमाद् येनेद मनुष्याः पक्वाऽश्नन्ति । श० ब्रा० १।२।१।४ ॥

४. येन [अग्निना] पुरुषं दहन्ति स क्रव्यात् । श० ब्रा० १।२।१।४ ॥

५. 'यसुः हृञ्ज नु.' इति हैमोणादिः (सूत्र ८०६) ।

घ्नन्ति। नेर्गद (८।४।१७) इति णत्वम्—प्रणिहन्ति। हन्तेरत्पूर्वस्य (८।४।२२) प्रहण्णनम्। वमोर्वा (तु० ८।४।२३) प्रहण्व. प्रहन्मः, प्रहण्मः प्रहन्मः। आङो यमहनः (१।३।२८) इत्यकर्मकात् तङ्—आहते। स्वाङ्गकर्मकाच्च (१।३।२८ वा०)—आहते शिरः, नेह—आहन्ति शिरः शत्रोः। व्यतिहारे—न गतिहिंसार्थेभ्यः (१।३।१५) व्यतिघ्नन्ति। गमहन (६।४।९८) इति अल्लोपः, अभ्यासाच्च (७।३।५५) इति घः—जघान, जघ्नुः। विभाषा गमहनविदविशाम् (७।२।६८) इति वेट्—जघन्थ, जघनिथ। स्यसिच्सीयुट्तासिषु (६।४।६२) इति चिण्वदिट् घ—घानिष्यते। हन्तेर्जः (६।४।३६) जहि शत्रुम्। हनो वध लिङि (२।४।४२)—वध्यात्। वधिभावात् सीयुट्चिण्वद्भावो[1] विप्रतिषेधेन (पु० ६।४।६२ वा०)—वधिषीष्ट, घानिषीष्ट। लुङि च (२।४।४३) अवधीत्। आत्मनेपदेष्वन्यतरस्याम् (२।४।४४) आहत, आवधिष्ट। हनः सिच् (१।२।१४) इति कित्त्वम्। अज्झनगमां सनि (६।४।१६) दीर्घः—जिघांसति। यङ्—जङ्घन्यते, हन्तेर्हिंसायां घ्नी (७।४।३० वा०)[2] जेघ्नीयते। हनस्तोऽचिण्णलोः (७।३।३२) घातयति, अजीघतत्। हनो वा वध च (३।१।९७ वा०) इति वा यत्—वध्यः, घात्यः। हनस्त च (३।१।१०८) इति भावे क्यप्—ब्रह्महत्या। लषपतपद (३।२।१५४) इत्युकञ्—घातुकः। हनश्च वधः (३।३।७६) वधः, घातो वा। मूर्तौ घनः (३।३।७७) दधिघनः। अन्तर्घनो देशे (३।३।७८)। अगारैकदेशे प्रघणः प्रघाणश्च (३।३।७९)। उद्घनोऽत्याधानम् (३।३।८०), निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः (अमर २।२।३५)। अपघनोऽङ्गम् (३।३।८१)। करणेऽयोविद्रुषु (३।३।८२) अयोघनः। स्तम्बे क च (३।३।८३) स्तम्बघ्नः, स्तम्बघनः। परौ घः (३।३।८४)—परिघः। उपघ्न आश्रये (३।३।८५) संघोद्घौ गणप्रशंसयोः (३।३।८६)। निघो निमितम् (३।३।८७)। घनर्थे कविधानात् (द्र० ३।३।५८ वा०) विघ्नः, निघ्न आयत्ते (तु० अमर ३।१।१६)। घे

1. 'सुट्सीयुट्चिण्वद्भावाः' पाठा०। 'सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति युक्तः पाठः। द्र० महाभाष्य ६।४।६२॥ लिङ्विशेषेण नानाग्रन्थनिदर्शः कृतः।

2. अत्र लिङ्विशेषेण सत्यपि पाठभेदे काशिकाया निर्देश कृतः

हनः (३।४।३७) इति णमुल्—उपलघातं हन्ति । समूलाकृतजीवेषु हनकृञ्ग्रहः (३।४।३६) समूलघातं हन्ति । हिंसार्थानां च समानकर्मकाणाम् (३।४।४८) दण्डघातं गाः कालयति[1] । चरिचलिपतिवदीनां वा द्वित्वमाक् चाभ्यासस्य, हन्तेर्घत्वं च (६।१।१२ वा० काशिका)—घनाघनः । आशिषि हनः (३।२।४९) डः—अरातिहः, तिमिहः[2] । अपे क्लेशतमसोः (३।२।५०) क्लेशापहः, तमोपहः । अन्येभ्योऽपि[3] इति वराहन्ति—वराहः, पटे हन्यते—पटहः, कलं हन्ति—कलहः । कुमारशीर्षयोर्णिनिः (३।२।५१) कुमारघाती, शीर्षघाती । लक्षणे जायापत्योष्टक् (३।२।५२) जायाघ्नस्तिलकः, पतिघ्नः । शक्तौ हस्तिकपाटयोः[4] (३।२।५४) हस्तिघ्नः, कपाटघ्नः[4] । पाणिघताडघौ शिल्पिनि (३।२।५५) । अकच्याद् (द्र० ३।२।५५ वा०) राजघः । दारावाहनोऽण् अन्त्यस्य च टः संज्ञायाम् (३।२।४९ वा०) दारावाघाटः, दारावाघातः । चारौ च (तु० ३।२।४९ वा०) चारावाघाटः, चारावाघातः । समि च वर्णे (तु० ३।२।४९ वा०) वर्णसंघाटः, वर्णसंघातः । कर्मणि हनः (३।२।८६) णिनिः—पितृघाती । ब्रह्मभ्रूणवृत्रेषु क्विप् (३।२।८७) ब्रह्महा । संभृच (३।२।१४२) इत्यभ्याघाती । शृस्वृस्निहि (उ० १।१०) इत्युः—हनुः । हन्तेर्हि च (द० उ० ७।३४) हिमम् । हनो वधः वधुश्च (तु० उ० २।३६)—वधकः[5] । वृतृवदि (तु० उ० ३।६२) इति सः—हंसः[6] । हन्तेर्मुट् च हिश्च (तु० उ० ३।१२९)—हेमन्तः । हन्तेरंह च (उ० ४।६२)—अंहतिः । वसिवपि (उ० ४।१२५) इतीञ्—घातिः । आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४।१३८)—अहिः । नञ्याहन एह च (तु० उ० ४।२२४) इत्यसुन्—अनेहा कालः, उशनसपुरुदंसोऽनेहसां (७।१।९४) साधनू[7] । हन्तेर्घुर च (तु० श्वेत० उ० ४।७०) इति घोरः । हन्तर्घ च[8] इति युः—जघनम् ।

---

१. 'घातयति' पाठा० । २. 'तिमिरहः' पाठा० ।

३. अत्र लिबिशेन '३।२।७५' सूत्र सङ्ख्या निर्दिष्टा । नह्यनेन डो भवति । वचनमिदं नान्यत्र दृष्टम् ।

४. '०कवाटयोः' 'कवाटघ्नः' पाठा० ।

५. 'वधिः प्रकृत्यन्तरम् । द्र० काशिका ७।३।३५ ॥

६. 'हम्मतेर्हंसः । कः पुनराह-हम्मतेर्हंसः । किं तर्हि-हन्तेर्हंसः' इति भाष्यवचनम् (६।१।१३) अत्रानुसंधेयम् ।

७. 'अनङ्' शुद्धः पाठः । ८. अनुपलभ्यमूलम् ।

हन्तेर्घुट् धात्वन्तयोर्घ्नतत्ते च[1] (तु० उ० ३।४२। द० उ० ६।८४)—परिघातनः, परिघः (तु० अमर २।८।९२) ॥२॥

३. अनुदात्तावनुदात्तेतौ ॥

[ अथानिट उभयपदिनः ]

४. द्विष अप्रीतौ । हलन्तत्वादनिट् उभयपदिनश्च । द्विष्टे, द्वेष्टि, द्वेष्टा । सत्सूद्विष (३।२।६१) इति क्विप्—मित्रद्विट् । द्विषोऽमित्रे (३।२।१३१) शत्रा[2] द्विषन् । द्विषः शतुर्वा वचनम् (२।३।६९ वा०)—चौरस्य द्विषन्, चौरं द्विषन् । द्विषश्च (३।४।११२) इति वा जुस्—अद्विषुः, अद्विषन् ॥३॥

५. दुह प्रपूरणे । प्रपूरणं पूरणाभावः,[3] उपसर्गोऽत्र धात्वर्थं बाधते प्रस्थानवत् । गां दुग्धे, दोग्धि । दोग्धा । न दुहस्नुनमां यक्चिणौ (३।१।८९)—दुग्धे गौः स्वयमेव; अदुग्ध । शल इगुपधादनिटः क्सः (३।१।४५)—अधुक्षत, अधुक्षन्त[4], अदुग्ध गौः स्वयमेव । दुहश्च (३।१।६३) इत्यदोहि गौः स्वयमेव । बहुवचने[5] क्सस्याचि (७।३।७२) लुक् । लुग् वा दुहदिह (७।३।७३) इति क्सस्य वा लुक्—अदुग्ध अदुग्धाः, अधुक्षत अधुक्षथाः । शसिदुहि (३।१।१०६ काशिका) इति क्यप्—दुह्यम् । ण्यत् (द्र० ३।१।१२४) अपि दृश्यते—दोह्यम् । सत्सूद्विष (३।२।६१) इति क्विप्—गोधुक् । दुहः कप् घश्च (३।२।७०) कामदुघा । नप्तृनेष्टृ (उ० २।९५) इति दुहिता । अन्येभ्योऽपि[6] दृश्यते (३।३।१३०) इति युच्—सुदोहनः, गोदोहनो घटः; गौरादौ[7] (द्र० गण ४।१।४१) गोदोहनी[7] । उणादौ दोहदो[8] ऽभिलाषविशेषः ॥४॥

---

१. अत्र लिङ्गेन नान्तस्यानिर्देशः कृतः ।

२. 'शतरि' इति साधु ।     ३. प्रपूरणं रिक्तीकरणमित्यन्ये ।

४. अत्र सायणोक्ता धातुवृत्तिर्द्रष्टव्या, स्वाभिमतं तत्र निराकृतम् ।

५. 'बहुवचने' सार्वत्रिकः पाठः सम्प्रति निरर्थकः, बहुवचनादन्यत्रापि लोपदर्शनात्—अधुक्षाताम् अधुक्षाथाम्, अधुक्षि ।     ६. 'अन्येष्वपि' पाठा० ।

७. नहि गौरादिषु पठ्यते । 'पिप्पल्यादयश्च' इत्यत्रान्तर्गणत्वादुपपद्यत इति समस्ति ।     ८. द्र० हैमोणादि २४४ ।

६. दिह उपचये । उपचयोऽत्र लेपः । नेर्गदनद (८।४।१७) इति णत्वम्—प्रणिदेग्धि । शिष्टं प्राग्वत् । दिग्धः, संदिग्धः । देहनो घटः, गौरादौ (द्र० गण ४।१।४१) देहनी[1] । उणादौ—देहली[1] द्वार-धो दारुः । देहः ॥५॥

७. लिह आस्वादने । लेढि, लीढे । अलिक्षत् । क्सस्याचि (७।३।७२) अलिक्षाताम् । लुग् वा दुह (७।३।७३) इत्यलीढ अलीढाः, अलिक्षत अलिक्षथाः । श्याद्व्यध (३।१।१४१) इति णः—लेहः । वहाभ्रे लिहः (३।२।३२) खश्—वहंलिहः, अभ्रंलिहः । घञ् (द्र० ३।३।१८, १९)—लेहः । आलीढः[3] ॥६॥

[ ८. अनुदात्ताः स्वरितेतः ॥ ]

९. चक्षिङ् व्यक्तायां वाचि, १२. अनुदात्तोऽनुदात्तेत् । ङित्करणं नुम्निषेधार्थम्, अन्तग्रहणम् हि तत्र (७।१।५८ सूत्रे) अनुवर्तते[4], गणकृतमनित्यम् (तु० सी० परि १२१) इति ज्ञापनार्थं च[5] । यथा—स एवायं नागः सहति कलभेभ्यः परिभवम् (सुभाषित १२१) । आचष्टे । चक्षिङः ख्याञ् (२।४।५४)—आख्याता । वा लिटि (२।४।५५)—चख्यौ चख्ये, चचक्ष चचक्षे । अस्यतिवक्तिख्यातिभ्योऽङ् (३।१।५२)—आख्यत् । न ख्यापया (८।२।५७) इति ख्यातः । चक्षेः शिच्च (उ० २।११६) इत्युसुन्—चक्षुः । चक्षेर्बहुलं शिच्च (४।२३३) इत्यसुन्—नृचक्षा राक्षसः, अघचक्षाः ॥ ७ ॥

[ अथ सेट आत्मनेपदिनः ]

११. ईर गतौ । इतः पृचिपर्यन्ता (२।२१) द्वादश सेट आत्मने-

---

१. पूर्वं (१६७) पृष्ठस्था टिप्पणी ७ द्रष्टव्या ।

२. सरस्वतीकण्ठा० २।३।१८॥ हैमोणादि ४६५ ।

३. अत्र क्षीरस्वामिनोऽमरटीका (२।८।८६) द्रष्टव्या ।

४. अयं भावः—यत्रान्ते इकार इद् भवति, तत्रैव नुम्विधानम् । अत्र तु इकारस्येत्त्वेऽपि नान्त इकार इत् , तेनात्र नुम् भवति ।

५. 'वा' पाठा० । सायणेन मतमिदं निराकृतम् धातुवृत्तौ (पृष्ठ २३०) ।

पदिनश्च । ईर्ते । ईरिता । चुरादौ ईर चेपे (१०।२०५) ईरयति । कम्पने च इत्येके[1] ॥९॥

१२. ईड स्तुतौ[2] । ईट्टे, ईडिता । ईडजनोर्ध्वे च (७।२।७८) इतीटि ईडिषे, ईडिध्वे । ईडा । इडाया वा (८।३।५४) इति लिङ्गाद् इडा । ईड्यः ॥९॥

१३. ईश ऐश्वर्ये । भुव ईष्टे । ईशः से (७।२।७७)—ईशिषे । ईशिता । अधीगर्थदयेशां कर्मणि (२।३।५२) षष्ठी[3] । ईशानः । ईशः । स्थेशभास (३।२।१७५) इति वरच्—ईश्वरः[4] ॥१०॥

१४. आस उपवेशने । आस्ते । आसिता । अधिशीङ्स्थासां कर्म (१।४।४६)—खट्वामध्यास्ते । ईदासः (७।२।८३)—आसीनः । दयायासश्च (३।१।३७) इत्याम्—आसांचक्रे । गत्यर्थाकर्मक (३।४।७२) इति क्तः—उपासितो गुरुं चैत्रः । ण्यासश्रन्थो युच् (३।३।१०७)—आसना ॥११॥

१५. आङः शासु इच्छायाम् । आशास्ते । आशासिता । शासु अनुशिष्टौ (२।७२) तु धात्वन्तरं ह्रस्वनिषेधादिविषयम्—नाग्लोपि-शास्वृदिताम् (७।४।२) अशशासत्[5] । शास इदङ्हलोः (६।४।३४)—अशिषत् । क्वावुपसंख्यानम् (६।४।३४ वा०)—आशीः । क्ते (द्र० ७।२।१५) आशास्तः । अनुदात्तेतश्च हलादेः (३।२।१४९) युच्—आशासनः । आशास्तिः—गुरोश्च हलः (३।३।१०३) इति नास्ति निष्ठायां सेटोऽकारवचनात् (३।३।९४ वा०)[6] । उदितो वा (७।२।५६) आशास्त्वा, आशासित्वा ।

---

१. काशकृत्स्नः (पृष्ठ १७०), दुर्गसिंहश्च इत्थमेव पठतः ।

२. 'ईड ईल स्तुतौ' इति काशकृत्स्नः (पृष्ठ १७०) । अत्र पूर्वोल्लिखिता (पृष्ठ ५१) टिप्पणी (१) द्रष्टव्या । ३. 'भुव ईष्टे' इति प्रायुक्ते प्रयोगे ।

४. वरचि स्त्रियामीश्वरा । अश्नोतेराशुकर्मणि वरट् च (उ० ५।५७) इति वरटष्टित्वात् स्त्रियामीश्वरी भवति ।

५. अत्र एतद्धातुसूत्रस्था सायणीया भानुवृत्तिरनुसन्धेया । तत्र स्वामिमतेन प्रकारान्तरेण शासुधातोरप्युपधा ह्रस्वत्वनिषेध उक्तः । इह तु न तथा पाठ उपलभ्यते ।

६. अत्र लिपिदोषेण वार्तिकस्थानसंकेतो निर्दर्शितः ।

शाङः, शास इति दीर्घः[1]—आशासित्वा, आशासितः ॥१२॥

१६. वस आच्छादने । वस्ते पटम् । वसिता । वसानः । वसितः । श्र्युकः (१७३३) उदितः । अच् (द्र० ३।१।१३४ वा०)—वसः । भिदाद्यङ् (द्र० ३।३।१०४) वसा[2] । वसनम् । वसस्तिप् (तु० द० उ० १।७४ कपाठः) वस्तिमेढ्रोर्ध्वम् । ष्ट्रन् (द० उ० ८।७१)—वस्त्रम् । वसेर्णिद् (उ० ४।२१८)—वासः । चादित्वात् (द्र० ६।४।१२६) लिट्येत्वाभ्यासलोपौ न स्तः—ववसे, ववसिषे ॥१३॥

१७. कसि गतिशासनयोः । कंसते, कंसिता । कंसनः । कंसः । कस इत्येके ॥१४॥

१८. णिसि चुम्बने । निंस्ते । वा निसनिक्षनिन्दाम् (८।४।३३) इत्यत्वम्—प्रणिंस्ते[4], प्रनिंस्ते ॥१५॥

१९. णिजि शुद्धौ । निङ्क्ते । प्रणिङ्क्ते । निञ्जिता ॥१६॥

२० शिजि अव्यक्ते[5] शब्दे[6] । शिङ्क्ते । शिञ्जानः । शिञ्जिता । शिजि पिजि इति कौशिकः—पिङ्क्ते, पिञ्जानः । खर्जपिञ्जादिभ्य ऊरोलचौ (उ० ४।९०)—पिञ्जूलः पिञ्जलः[7] । वृजी वर्जने इति दीर्घः[8] वृक्ते, वर्जिता, वृक्तः ॥१७॥

२१. पृची सम्पर्के । सम्पर्को मिश्रणम् । पृक्ते । सम्पृक्तः । रुधादौ (७।२४) पृणक्ति । पृचि इति कौशिकः—पृङ्क्ते ॥१८॥

---

१. काशकृत्स्नीये दैवे च धातुपाठे 'शाङः शासु' इत्येव पाठ उपलभ्यते ।

२. 'भिदादयङि वसा' इति क्वचित् ।

३. उद्धृतं पुरुषकारे (पृष्ठ ११०) धातुवृत्तौ (पृष्ठ २२४) च ।

४. प्रत्याख्यातमिदं सायणेन ।

५. 'शिञ्जि' इति काशकृत्स्नः (पृष्ठ १७१) ।

६. अत्राव्यक्तशब्दो भूषणरवः । 'भूषणानां तु शिञ्जितम्' इत्यमरः (१।५।२६) । ७. 'पिञ्जः' पाठा० ।

८. काशकृत्स्नोऽपि 'वृजी' इत्येव पपाठ (पृष्ठ १७१) । सायणस्तु 'अत्र स्वामी वृज इति दीर्घः—वेषां वृक्ते, वर्जिता' इत्येवमुद्धृतवान् (धातु० पृष्ठ २३५) ।

२२. उदात्ता अनुदात्तेतः ॥

२३. षूङ् प्राणिगर्भविमोचने । इत ऊर्णुञन्ता (२।३१) नव सेटः । सूते । स्वरतिसूति (७।२।४४) इति वेट्—सोता, सविता । सुषुवे । भूसुवोस्तिङि (७।३।८८) इति गुणो नास्ति—सुवावहै । स्तौतिण्योरेव षण्यभ्यासात् (८।३।६१) इति षत्वम्—सुषावयिषति । सुविनिर्दुर्भ्यः सुपिसूति (८।३।८८) इति सुषूतिः । राजसूयसूर्य (३।१।११४) इति राजसूयः साधुः । सूतः, सूतकम्, मायकान्तात् कन्, सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् (तु० ७।३।४५ वा०) इति सूतका सूतिका । सुसूधागृधिभ्यः क्रन् (श्वेत० उ० २।२७)—सूरोऽर्कः । सुवः कित् (उ० ३।३५)—सूनुः । क्रिन् (द्र० उ० ४।६४)—सूरिः । दिवादौ षूङ् प्राणिप्रसवे (४।११)—प्रसूयते । तुदादौ षू प्रेरणे (६।१०६)—सुवति ॥१९॥

२४. शीङ् स्वप्ने । शेते । अधिशीङ्स्थासां कर्म (१।४।४६)—ग्राममधिशेते । शीङो रुट् (७।१।६)—शेरते । शीङः सार्वधातुके गुणः, अयङ् यि क्ङिति (७।४।२१,२२)—शय्यते । अधिकरणे शेतेः (३।२।१५)—खशयः, पार्श्वादिभ्यः काथे (तु० ३।२।१५ वा०)—पार्श्वशयः । गत्यर्थाकर्मक (३।४।७२) इति क्तः, निष्ठा शीङ्स्विदि (१।२।१९) इत्यकित्त्वम्—शयितः । आलुच् वक्तव्यात् (द्र० ३।२।१५८ वा०) शयालुः । मने (३।२।८०) णिनिः—स्थण्डिलशायी । एरच् (३।३।५६)—संशयः । व्यपयोः शेतेः पर्याये (३।३।३९) घञ्—तवाद्य राजोपशाय, विशायः । संज्ञायां समज (३।३।९९) इति क्यप्—शय्या । भृमृशी (उ० १।७) इत्युः—शयुरजगरः । शीङो धुक्लक्वलन्वालनः (तु० उ० ४।३८)—शीधुः, शीलम्, शवलम्, शेवलम्, शैवालम् । शृङ्शीभ्यां ह्रस्वश्चाशयोः पुट् च (द० उ० ६।६१) इत्यसुन् शेपो लिङ्गम् । शीङः किद्[1] भरच्च (तु० द० उ० ३।५७)—शिरः । शिखरम्, शेखरम् । शय्या तु शय्यतेः (१।९०), आनक् शीङ्भियो. (तु० उ० ३।८२)—शयानकः । निशेरतेऽस्मिन्निति निशीथः (द्र० उ०

---

१. 'निद्' इति द० उ०, श्वेत०, नारा० । शिखाशब्दस्यानुनासिकदर्शनात् 'निद्' पाठेन भाव्यम् । गुणस्तु ह्रस्वविधानसामर्थ्यादेव न भविष्यति इति 'किद्' पाठश्चिन्त्यः ।

२।९)। हलूशीभ्यां वन् (उ० ४।१५२)—शेवः सुखम् ॥२०॥

२९. यु मिश्रणे। यौति, उतो वृद्धिर्लुकि हलि (७।३।८९)। यविता। सनीवन्तर्ध (७।२।४९) इति वेट्—युयूषति यियविषति। ऋहलोर्ण्यत् (३।१।१२४) इति ण्यत्—याव्यम्। श्रदोरप् (३।३।५७)—यवः, स्वार्थेऽण्[1] यावः, कनि (द्र० ५।४।२९) यावकोऽल्पफलकः। समि युद्रुदुवः (३।३।२३) घञ्—संयावो गुडमिश्रं खाद्यम्*। उदि श्रयतियौतिपूद्रुवः (३।३।४९)—उद्यावः। नन्द्यादी (द्र० ३।१।१३४) ल्युः—यवनः। कनिन् युवृषि० (उ० १।१५६) इति कनिन्—युवा। तिथपृष्ठ (उ० २।१२) इति यूथः। कुयुभ्यां दीर्घश्च (तु० द० उ० ७।५)—यूपः। यजियुधूनीभ्यो दीर्घश्च (उ० ३।४७)—यूका। सृयुवचिभ्योऽन्युजागूजक्नुचः (उ० ३।८१)—यवागूः। वहियुभ्यां च (उ० ३। ११४ श्वेत०)—इत्यसच्—यवसो[2] घासः। वहिश्रिश्रु (तु० उ० ४।५१) इति निः—योनिः। [3]पूञ्ज्योर्लोपश्च (तु० द० उ० ६।१६) ह्स्वूवन्—यूपः। यूपे[4] सौत्राद् योषा[5]। हसृरुहि (उ० १।९७) इति योषित्। यवासो[6] (द्र० उ० ४।२) दुरालभा[7]। ऊति यूति

1. प्रज्ञादिभ्यश्च (५।४।३८) इति प्रज्ञादराकृतिगणत्वात्, यावादिभ्यः कन् (५।४।२९) इति सूत्रे यावपदनिर्देशाद् वा। * 'गुडगोधूमखाद्यम्' पाठा०।

2. उणादिसूत्रपाठस्तु श्वेतवनवासिपाठेन संवदति, परं स विस्वमन्तु थार्थं यावसपदं व्युत्पादयति। वेदे (यजु० २१।४३) 'यवस' शब्दोऽन्तोदात्त उपलभ्यते। तदर्थं 'वहियुभ्यां नित्' इति दशपादीसूत्रे (६।४७) णित्त्व नानुवर्तनीयम्।

3. अत्र 'पूञ्ज्योर्लोपश्च' इति शुद्धः पाठो द्रष्टव्यः, तथैव दशपाद्युणादौ निर्देशात्, स्वयं च 'मूङ् बन्धने'(१।५६२) सूत्रव्याख्याने तथैवोद्धरणात् (पृ० १४८)।

4. 'युष' इति शुद्धः पाठो द्रष्टव्यः। 'इषमदिहिपुषिभ्यः इनि०' इत्युणादे सूत्रे (१।८७) पाठदर्शनात् 'युष सौत्रो धातु'। अपि च 'यूष' पाठे लघूपधत्वाभावाद् 'योषा' इत्यत्र गुणोऽपि न स्यात्।

5. इतोऽग्रे लिबिशेन श्रा त्वा उणादेः ३।६१ सूत्रमस्या तुलनाय निर्दिष्टा। अत्र सूत्रे उज्ज्वलदत्तेन यूधातोः सप्रत्यये योषापदसिद्धिरुक्ता, क्षीरस्वामिना ▮ युषधातोः। लिबिशेनैतदपि न दृष्टं यत् युष धातोः स-प्रत्यये योषापदसिद्धिः कथं भविष्यति?

6. जवासा इति लोके प्रसिद्धा।

7. निघण्टु क्वचिद् दुरालम्भा इत्यपि पाठ उपलभ्यते। अत्र दुरालमा-

जूति (३।३।९७) इति यूतिः । संयोऽप्युतसिद्धानाम्[1] इत्यादिदर्शनाद् यु प्रमिश्रण इत्येके[2] । क्र्यादौ युञ् बन्धने (९।७)—युनाति । चुरादौ यु जुगुप्सायाम् (१०।१५७)—यावयते, याव्यः ॥२१॥

२६. रु शब्दे । रौति, तुरुस्तुशम्यमः सार्वधातुके (७।३।९५) हलादौ वा ईट्—रवीति । रविता । सनि ग्रहगुहोश्च (७।२।१२) इतीण्नास्ति—रुरूषति । ऋदोरप् (३।३।५७)—रवः । उपसर्गे रुवः (३।३।२२) घञ्—संरावः । विभाषाऽऽङि रुप्लुवोः (३।३।५०)—आरवः, आरावः । भ्वादौ रुङ् गतिरेषणयोः (१।६८२) रवते । रवणः । रुशातिभ्यां क्रुन् (द० उ० १।१५१)—रुरुर्मृगः । अच इः (उ० ४।१३९)—रविः । असुन्[3]—पुरूरवाः (उ० ४।२३२) । मह्यां रौति (द्र० ६।३।१०९ काशिका)—मयूरः ॥२२॥

२७. णु स्तुतौ । नौति, प्रणविता । आङि नुप्रच्छ्योः (१।३।२१ वा०) तङ्—आनुते । नुनूषति । नवः, प्रणवः । नुदशोर्गुणश्च[4] (क्षु० द० उ० ६।५४) इति नव ॥२३॥

२८. टुक्षु शब्दे । क्षौति । क्षवथुः । क्षविता । क्षवः । क्षवम् । वौ क्षुश्रुवः (३।३।२५) घञ्—विक्षावः ॥२४॥

२९. क्ष्णु तेजने । क्ष्णौति शस्त्रम् । समः क्ष्णुवः (१।३।६५) तङ्—संक्ष्णुते, चुक्ष्णूषति ॥२५॥

३०. ष्णु प्रस्रवणे । स्नौति । स्नुक्रमोरनात्मनेपदनिमित्ते (७।२।३६) इतीट्—प्रस्नविता । सुस्नूषति । न दुहस्नुनमां यक्चिणौ (३।१।८९)—प्रस्नुते गौः स्वयमेव, प्रास्नोष्ट । स्नुव्रश्चि (उ० ३।६६) इति कित् सः—स्नुषा ॥२६॥

३१. ऊर्णुञ् आच्छादने । ऊर्णोतेर्विभाषा (७।३।९०) हलादौ

---

दुरान्मयोर्विषये पूर्वं १५१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

१. धनुशालम्बमूलम् । २. प्रक्रियासर्वस्वे धृतमिदम् ।

३. अत्र शिविनैव स्वर्थेन ४।१८८ उणादिसूत्रे रवा निर्दिष्टा ।

४. अत्र लिदिशेन सूत्रसंस्थानमनिर्दिष्टयोऽस्मद्दर्शितपाठवृत्तौ बाहुलकात् प्रत्याधिकरणपदव्युत्पत्तिस्वारस्य (उ० १।२५६) निर्देशः कृतः ।

२।९)। इण्शीभ्यां वन् (उ० ४।१५२)—शेवः सुखम् ॥२०॥

२५. यु मिश्रणे। यौति, उतो वृद्धिर्लुकि हलि (७।३।८९)। यविता। सनीवन्तर्ध (७।२।४९) इति वेट्—युयूषति यियविषति। आसुयुवपि (३।१।१२६) इति ण्यत्—याव्यम्। ऋदोरप् (३।३।५७)—यवः, स्वार्थेऽण्[1] यावः, कनि (द्र० ५।४।२९) यावकोऽलक्तकः। समि युद्रुदुवः (३।३।२३) घञ्—संयावो गुडमिश्रं खाद्यम्*। उदि श्रयतियौतिपूद्रुवः (३।३।४९)—उद्यावः। नन्द्यादौ (द्र० ३।१।१३४) ल्युः—यवनः। कनिन् युवृषि० (उ० १।१५६) इति कनिन्—युवा। तिथपृष्ठ (उ० २।१२) इति यूथः। कुयुभ्यां दीर्घश्च (तु० द० उ० ७।५)—यूपः। यजियुधूनीभ्यो दीर्घश्च (उ० ३।४७)—यूका। सृयुवचिभ्योऽन्युजागूजक्नुचः (उ० ३।८१)—यवागूः। वहियुभ्यां च (उ० ३।११४ श्वेत०)—इत्यसच्—यवसो[2] घासः। वहिश्रिद्रु (तु० उ० ४।५१) इति निः—योनिः। [3]मृद्र्योर्लोपश्च (तु० द० उ० ६।१६) इत्यूषन्—यूषः। युषेः[4] सौत्राद् योषा[5]। हृसृरुहि (उ० १।९७) इति योषित्। यवासो[6] (द्र० उ० ४।२) दुरालभा[7]। ऊतियूति

---

१. प्रज्ञादिभ्यश्च (५।४।३८) इति प्रज्ञादराकृतिगण-त्वात्, यावादिभ्यः कन् (५।४।२९) इति सूत्रे यावपदनिर्देशाद् वा। * 'गुडगोधूमखाद्यम्' पाठा०।

२. उणादिसूत्रपाठस्तु श्वेतवनवासिपाठेन संवदति, परं स विश्वसनुवर्त्यं यावसपद व्युत्पादयति। वेदे (यजु० २१।४३) 'यवस' इत्यप्याद्युदात्त उपलभ्यते। तदर्थं 'वहियुभ्यां णित्' इति दशपादीसूत्रे (६।४७) णित्त्वं नानुवर्तनीयम्।

३. अत्र 'मृद्र्योर्लोपश्च' इति शुद्धः पाठो द्रष्टव्यः, तथैव दशपाद्युणादौ निर्देशात्, स्वयं च 'मृद् बन्धने'(२ ४६२) सूत्रव्याख्याने तथैवोदाहरणात् (पृ० १४८)।

४. 'युषेः' इति शुद्धः पाठो द्रष्टव्यः। 'हृसृरुहियुषिभ्यः इतिः' इत्युणादि-सूत्रे (१।९७) पाठदर्शनात् 'युष सौत्रो धातुः'। यदि च 'यूष' पाठे लघूपधत्वाभावाद् 'योषा' इत्यत्र गुणोऽपि न स्यात्।

५. इतोऽग्रे लिबिशेन आन्ध्रा उणादेः ३।६१ सूत्रसंख्या तुलनाय निर्दिष्टा। अत्र सूत्रे उज्ज्वलदत्तेन यूषधातोः सप्रत्यये योषापदसिद्धिरुक्ता, क्षीरस्वामिना तु युषधातोः। लिबिशेनैतदपि न बुद्धं यत् यूष धातोः स-प्रत्यये योषापदसिद्धिः कथं भविष्यति?

६. जवासा इति लोके प्रसिद्धा।

७. निघण्टौ क्वचिद् दुरालम्भा इत्यपि पाठ उपलभ्यते। अत्र दुरालभा-

जूति (३।३।९७) इति यूतिः। सघोऽस्युतसिद्धानाम्[1] इत्यादिदर्शनाद् यु प्रसिथण इत्येके[2]। क्र्यादौ युञ् बन्धने (९।७)—युनाति। चुरादौ यु जुगुप्सायाम् (१०।१५७)—यावयते, याव्यः ॥२१॥

२६. रु शब्दे। रौति, तुरुस्तुशम्यमः सार्वधातुके (७।३।९५) हलादौ वा ईट्—रवीति। रविता। सनि ग्रहगुहोश्च (७।२।१२) इतीण्नास्ति—रुरूषति। ऋदोरप् (३।३।५७)—रवः। उपसर्गे रुवः (३।३।२२) घञ्—संरावः। निमाश्चित्ति रुप्लुवोः (३।३।५०)—आरवः, आरावः। भ्वादौ रुङ् गतिरेषणयोः (१।६८२) रवते। रवणः। दशातिभ्यां क्रुन् (द० उ० १।१५९)—रुरुंमुगः। यच रुः (उ० ४।१३९)—रविः। असुन्[3]—पुरूरवाः (उ० ४।२३२)। मह्यां रौति (द्र० ६।३।१०९ काशिका)—मयूरः ॥२२॥

२७. णु स्तुतौ। नौति, प्रणविता। याङि नुप्रच्छयोः (१।३।२१ वा०) तङ्—आनुते। नुनूषति। नवः, प्रणयः। नुदशोर्णवश्च[4] (तु० द० उ० ६।५४) इति नथ ॥२३॥

२८. टुक्षु शब्दे। क्षौति। क्षवथुः। क्षविता। क्षवः। क्षुतम्। वौ क्षुश्रुवः (३।३।२५) घञ्—विक्षावः ॥२४॥

२९. क्ष्णु तेजने। क्ष्णौति शस्त्रम्। समः क्ष्णुवः (१।३।६५) तङ्—संक्ष्णुते, चुक्ष्णूषति ॥२५॥

३०. ष्णु प्रस्रवणे। स्नौति। स्नुक्रमोरनात्मनेपदनिमित्ते (७।२।३६) इतीट्—प्रस्नविता। सुस्नूषति। ॥ दुहस्नुनमां यक्चिणौ (३।१।८९)—प्रस्नुते गौः स्वयमेव, प्रास्नोष्ट। स्नुव्रश्चि (उ० ३।६६) इति कित् क्सः—स्नुषा ॥२६॥

३१. ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषा (७।३।९०) हलादौ

---

दुराग्रमगोर्विषये पूर्वां १५१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या।

१. अनुपलब्धमूलम्। २. प्रक्रियाकौमुद्यां स्पष्टमिदम्।

३. अत्र शिशिरेण व्यर्थैव ४।१८८ उणादिसूत्र-संख्या निर्दिष्टा।

४. अत्र लिङ्गेन सूत्राक्षरस्थानमनिर्दिश्योज्ज्वलदत्तीये णादिवृत्तौ बाहुलकात् प्रमाधिननरपदव्युपतिस्थारय (उ० १।१२६) निर्देशः कृतः।

पिति सार्वधातुके वृद्धिः, पक्षे गुणः—प्रोर्णौति प्रोर्णोति । ऊर्णोतेर्वि भाषा (७।२।६) इति वृद्धिः—प्रौर्णावीत् प्रौर्णवीत् । गुणोऽपृक्ते (७।३।९१) प्रौर्णोत् । सनीवन्तर्ध (७।२।४९) इति वेट्—प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति । सृचिसृत्रि ( ३।१।२२ वा० ) इति यङ्—प्रोर्णोनूयते । विभाषोर्णोः (१।२।३) ङित्त्वम्—प्रोर्णुवितव्यम्, प्रोर्णवितव्यम् । ऊर्णोतेर्डः (उ० ५।४७)—ऊर्णा । ऊर्णोतेर्नुलोपश्च (उ० १।३०) इति कुः—ऊरुः । महति ह्रस्वश्च (उ० १।३१)—उरुः ॥२७॥

३२. उदात्ताः ।

३३. द्यु अभिगमने । इतो मापर्यन्ताः (२।५५) त्रयोविंशतिरनिटः । द्यौति । द्योता । द्यौः ॥२८॥

३४. षु प्रसवैश्वर्ययोः । सौति । सोता । सुषाव । स्तुसुधूञ्भ्यः परस्मैपदेषु (७।२।७२) सिचीट्—असावीत् । सुतः । भ्वादौ ( १।६७२ ) सवति, सविता[1] । स्वादौ ( ५।१२ ) सुनोति । क्रुसुपुभ्यश्च (द० उ० ७।५) इति सूपः ॥२९॥

३५. कु शब्दे । कौति । कोता । कुपः । भ्वादौ कुङ् (१।६०१) कवते । तुदादौ कु शब्दे ( तु० ६।१०७ )—कुवति । शाब्दस्त्वेऽर्थेऽप्येषां कौतिः शब्दमात्रे, कुवतिरार्तस्वरे, कवतिरव्यक्ते शब्दे[3] ॥३०॥

३६. ष्टुञ् स्तुतौ । स्तौति । उपसर्गात् सुनोति (८।३।६५) इति षत्वम्—अभिष्टौति । स्तोता, प्रस्तोता, स्तुषु (७।२।११) इति नेट्—तुष्टोथ । सिवादीनां वाड्व्यवायेऽपि (८।३।७१) इति षत्वम—पर्यष्टौत् पर्यस्तौत् । स्तौतिण्योरेव षण्यभ्यासात् (८।३।६१) षः—तुष्टूषति । परिनिविभ्यः सेव ( ८।३।७० ) इति षः—परिष्टौति । एतिस्तुशास ( ३।१।१०९ ) इति क्यप्—स्तुत्यः । अप् (द्र० ३।३।५७)—स्तवः । प्रे द्रुस्तुस्रुवः ( ३।१।२७ )

१. भौवादिकः सवतिरनिट्, तेन सोता इत्येव युक्तः पाठः ।

२. तुदादौ 'कुङ्' पठ्यते । तेन 'कवते' इत्यात्मनेपदं युक्तम् ।

३. अत्र "कवतिस्तावदव्यक्ते शब्दे वर्तते—उष्ट्रः कोकूयते इति । कुवतिरार्तस्वरे—कोकूयते वृषल इति, पीडित इत्यर्थः । कौतिस्तु शब्दमात्रे" इति न्यासवचनम् (७।४।६३) अयनुसन्धेयम् । स्मृत क्षीरपाठः दुर्घटकारे (पृष्ठ १२) ।

घञ्—प्रस्तावः। यज्ञे समि स्तुवः (३।३।३१)—संस्तावः, अन्यत्र संस्तवः। भ्राजभास (३।२।१७७) इति क्विप्—ग्रावस्तुत्। करणे क्तिन् इष्यते[1] स्तुतिः। दाम्नी (३।२।१८२) इति ष्ट्रन्—स्तोत्रम्। अर्तिस्तुसु (उ० १।१४०) इति मन्—स्तोमः। ष्टुभु स्तम्भे (१।२७८) ऽस्मात् नु स्तोभः गीतोऽनर्थकः श्रुतिपूरणः[2] ॥३१॥

३७. ब्रूञ् व्यक्तायां वाचि। ब्रुव ईट् (७।३।९३) ब्रवीति। णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् (३।१।८९ वा०) इति कर्मकर्तरि यक्चिणौ न स्तः—ब्रूते कथा स्वयमेव, अवोचत। ब्रुवः पञ्चानामादित आहो ब्रुवः (३।४।८४)—आह, आहुः। आहिभुवोरीट्प्रतिषेधः (१।१।५६ वा०) आहस्थः (८।२।३५)—आत्थ। ब्रुवो वचिः (२।४।५३)—वक्ता। भव्यगेय (३।४।६८) इति कर्तरि—प्रवचनीयश्चैत्रोऽनुवाकस्य। चेलड्ब्रुव (६।३।४३) इति लिङ्गात् क—ब्राह्मणब्रुवः। क्वसौ (द्र० ३।२।१०७) ऊचिवान्। उपेयिवाननाश्वाननूचानश्च (३।२।१०६) वचिना ग्रहणात्[3] ॥३२॥

३८. इण् गतौ। एति। एत्येधत्यूठ्सु (६।१।८९) इति वृद्धिः—उपैति। इतः। इणो यण् (६।४।८१)—यन्ति। लिटि—दीर्घ इणः किति (७।४।६९)—ईयुः। एता। एतेर्लिङि (७।४।२४) उपसर्गाद् ह्रस्वः—समियात्। इणो गा लुङि (२।४।४५), गातिस्था (२।४।७७) इति सिज्लुक्, गापोर्ग्रहणे इण्पिबत्योर्ग्रहणात् (द्र० २।४।७७ वा०)—अगात्, अगुः। णौ गमिरबोधने (२।४।४६)—गमयति, बोधने—प्रत्याययति। सनि च (२।४।४७)—जिगमिषति, बोधने—अर्थान् प्रतीषिषति। उपेयिवाननाश्वान् (३।२।१०९) इत्युपेयिवान्। एतिस्तुशास (३।१।१०९) इति क्यप्—

१. स्तुयजिस्तुभ्यः करणे (३।३।९४) इति वार्तिकेनेति शेषः। वार्तिकं च वैपुल्यसाधनार्थम्।

२. साम्नि (गीतौ) प्रयुज्यमाना मन्त्रभाषा 'ओ हाइ' इत्येवमाद्योऽनर्थकाः शब्दाः। तत्सामान्यादनर्थकोऽप्य स्तोभशब्दः। यदाह पुराणकृत्—अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः (वायु पुराण ५९।१४२) इति।

३ तादृशनिपातनात् वचेरनूचान इति भावः।

इत्यः । श्याद्व्यध (३।१।१४१) इति णः—अत्यायः । इण्नशजि (३।२।१६३) इति क्वरप्—इत्वरः । एरच् ( ३ । ३ । ५६ )—अन्वयः, समयः । परिन्योर्नीणोर्द्यूताभ्रेषयोः ( ३।३।३७ ) घञ्—न्यायः । परावनुपात्यय इणः (३।३।३८) सवाद्य पर्यायः[1], नेह विपर्ययः । संज्ञायां समज (३।३।९९) इति क्यप्—इत्या । छन्दसीणः (उ० १।२) उण्—आयुः । किंजरयोः श्रिणः (उ० १।४) ञुण्—जरायुः । दुरीणो लोपश्च (उ० २।२०) इति रक्—दूरम् । एतेर्णिच्च (उ० २।११८) इत्युसिः—आयुस् । इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३।२)—इनः । इण्भीका (उ० ३।४३) इति कन्—एकः । हसिमृग्रिण्वा (उ० ३।८६) इति तन्—एतो वर्णः । इणः किद् (उ० ३।१५१) इति भः—इभः । अध्यायन्यायोद्याव[2] (३।३।१२२) इति न्यायः । इण आगसि, (उ० ४।१९८) इत्यसुन् नुट् च—एनस् । असुन् (द० उ० ९।४६) अयः शस्त्रम । इण आगोऽपराधे (उ० ४।२१७ श्वेत०)—आगस् । रक् (द्र० (उ० २।२८) इरा[3] । समीणः (उ० २।११) इति थक्—समिथः संगमः । सानसिवर्णसि (उ० ४।१०७) इतीत्वसलोऽसुरः । कुन्शब्द दीर्घश्च, समीणः[4] उ० ४।१२,९३) समीचः समुद्रः । एतीत्येणो मृगः ॥३१॥

३२. इङ् अध्ययने । इङोऽधिनाव्यभिचारी योगः । यदाह—कश्चित् तमनुवर्तते[5] । अधीते । अधीयते—अकृत्सार्वधातुकयोर्दीर्घः (७ । ४ । २५) । गाङ् लिटि (२।४।४९) अधिजगे वेदम् । विभाषा लुङ्लृङोः (२।४।५०) गाङ्कुटादिभ्योऽञ्णिन्ङित् ( १ । २ । १ ) इति ङित्त्वम्, घुमास्थागापाजहाति (६।४।६६) इतीत्वम—अध्यगीष्ट, अध्यैष्ट; अध्यगीष्यत, अध्यैष्यत । इङश्च (२।४।४८) इति सनि गमिः, अज्झनगमां सनि (६।४।१६) इति दीर्घः—अधिजिगांसते । क्रीङ्जीनां णौ (६।१।४८) आत्त्वम्—अध्यापयति,

---

१. इतोऽग्रे 'क्रमः' इत्यधिकं क्वचित् ।

२ उणादिप्रत्ययान्तेषु कथमष्टाध्याय्याः सूत्रमुद्धृतम् ? किमत्र पाठभ्रंशो जात ?

३ 'गीर् भीर् वार्' इत्यधिकं क्वचित् ।

४. 'समीणः' सूत्रमुणादौ द्विः पठ्यते । सन्देहनिवृत्त्यर्थमत्र पूर्वसूत्रेण सह निर्दिष्टम् ।

५. अयं तु यः पाठः—धातवं धातने कश्चिद् कश्चिदमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ।

बुधयुध (१।३।८६) इत्यतङ्[1]। णौ च संश्चङोः (२।४।५१)—अधिजिगापयिषति, अध्यापिपयिषति; अध्यजीगपत्, अध्यापिपत्। इङ्धार्योः शत्रकृच्छ्रिणि (३।२।१३०)—अधीयन् पारायणम्। इङश्च (३।३।२१) इति घञ्—उपाध्यायः। अपादाने स्त्रियां वा ङीष् (३।३।२१ वा०)—उपाध्यायी, उपाध्याया। अध्यायन्यायोद्याव (३।३।१२२) इत्यध्यायः साधुः ॥३४॥

४०. इक् स्मरणे। ककारोऽधीगर्थ (२।३।५२) इति विशेषणार्थः—मातुरध्येति। इण्वदिकः (२।४।४५ वा०) अतिदेशाद् अध्यगात्, अधियन्ति, अधिगमयति, अधिजिगमिषति। अधीत्य ॥३५॥

४१. वी गतिप्रजनकान्त्यसनखादनेषु। प्रजनः प्रथमगर्भग्रहणम्, असनं क्षेपः, अशनं व्याप्तिरित्येके। वेति। प्रजने वीयतेः (६।१।५५) इति णावात्त्वं वा—पुरोवातो गाः प्रवापयति, प्रवाययति। वीपतिभ्यां तनन् (उ० ३।१५०)—वेतनम्। विपसूद् च (द०उ० ६।४५) इत्यसच्—वेतसः। वसुन् (द० उ० ९।४९)—वयस्। वीज्याज्वरिभ्यो निः (उ० ४।४८)—वेणिः। गुधृवीपचिवचि (द० उ० ८।८९) इति त्रन्[2]—वेत्रम्। अजिवृरीभ्यो निच्च (उ० ३।३८) इति णुः—वेणुः। वीतम् असारं हस्त्यश्वम्। क्तिच्क्तौ (द्र० ३।३।१७४) वीतिरश्वः ॥३६॥

४२. या प्रापणे। नेर्गद (८।४।१७) इति णत्वम्—प्रणियाति। आच्छीनद्योर्नुम् (७।१।८०) वा—याती यान्ती। लङः शाकटायनस्यैव (३।४।१११) इति झेर्जुस् वा—अयान्, अयुः। लुङि—यमरमनमातां सक् च (तु० ७।२।७३) इट् च—अयासीत्। यश्च यङः (३।२।१७६) वरच्—यायावरः। यो द्वे च (उ० १।२१) इति यायुरश्वः। कमिमनिजनि (उ० १।७३) इति तुः—यातुः राक्षसः। हुयामा (उ० ४।१६८) इति त्रन्—यात्रा। गवादौ (गण० ३।३।३) यायी। मृगय्वादयश्च (उ० १।३७) इति मृगयुः साधुः। अर्तिस्तुसु (उ० १।१४०) इति मन्—यामः ॥३७॥

---

१. अतङ् अर्थाद् आत्मनेपदाभावः, परस्मैपदमिति यावत्।

२. अत्र लिखितेन 'ष्ट्रन्' पाठोऽशुद्ध इति मत्वा 'सार्वत्रिकोऽयं पाठः' इति टिप्पणी कृता। यद्यपि पञ्चपाद्यां, क्वचिद् दशपाद्यां 'त्र.' इत्येवोपलभ्यते, तथापि दशपाद्याः क ख ग. हस्तलेखेषु 'त्रन्' इत्येव पठ्यते।

४३. वा गतिगन्धनयोः[1] । वाति । नेर्गद (८।४।१७) इति णत्वम्—प्रणिवाति । वाती, वान्ती । वो विधूनने जुक् (७।३।३८)—पक्षेकेनोपवाजयति । 'वीजयतिः' इति तु लौकिको धातुः[2] । निर्वाणोऽवाते (८।२।५०) साधुः, वाते तु निर्वातो वायुः, गत इत्यर्थः । अर्तिस्तुसु (उ० १।१४०) इति मन्—वामः । कृवापाजि (उ० १।१) इत्युण्—वायुः । हसिमृग्रिण्वा (उ० ३।८६) इति तन्—वातः ॥३८॥

४४. भा दीप्तौ । भाति । दाभाभ्यां नुः (उ० ३।३२)—भानुः । चिन्तिपूजि (३।३।१०५) इति चकाराद् भानं[3] भा । भास्तु भासेः (१।४।१२) । न माभूपूकमि (८।४।३४) इति प्रभानम् । प्रभा (द्र० ३।३।१०६) । सर्वादिपाठाद् (गण० १।१।२७) भवतु ॥३९॥

४५. ष्णा शौचे । स्नाति । निष्णाति । ग्लास्नावनुवमां च (१।५५६) इति मित्त्वम्—प्रस्नपयति,[4] अनुपसर्गाद् वा[5] (द्र० १।१५५)—स्नापयति स्नपयति । निनदीभ्यां स्नातेः कौशले (८।३।८९) षत्वम्—निष्णातः, नदीष्णः । घञर्थे कः (द्र० ३।३।५८ वा० )—प्रस्नः । स्फायी ओप्यी वृद्धौ (१।६४४)—स्नायति । स्नामदि (उ ४।१११) इति वनिप्—स्नावा, स्नायुः ॥४०॥

---

१. 'गन्धन मर्दनम्' इत्यधिकं क्वचित् ।

२. द्र० क्षीरतरङ्गिण्याम् 'ईज' (१।११२) धातुव्याख्यानम्—"वीजेर्लौकिकाद् अवीजयत् । तत्रैव टिप्पणमपि द्रष्टव्यम् (पृष्ठ २७ टि० ६) ।

३. लिङ्गेशान 'चकाराद् भानं' इत्यनेन वाक्यमात्रमिति निर्दिष्टम्, तदनन्तरं 'भा इत्येनाथ् एतन्नमुदाहरणं स्वीकृतम्, तदसत् । नहि 'चिन्तिपूजि' (३।३।१०५) इत्यनेन 'भानम्' पदं सिध्यति, यदि त्वनेन सूत्रेण चिन्तादिपदसिद्धये 'अङ्' विधीयते । तस्मादयमत्र क्षीरस्वामिन आशयः—अङ्विधायके 'चिन्तिपूजि' इत्यादिसूत्रे चकारेण 'भा' धातोरपि स्त्रियां भावेऽङ्प्रत्ययो बोध्यः, तेन (टापि) भा 'भा' इत्याकारान्तं भापदं प्रसिद्ध्यति ।

४. भाषयोरमामौ विकल्प इत्युक्त प्राक् (१।५५६ व्याख्याने) । तदनुसारं सोपसर्गाद् प्रस्नापयति इत्येव प्राप्नोति । तथैव पूर्वम् (१।५५६) उदाहृतमपि ।

५. अनुपसर्गाद्वा इति तत्रानुवर्तमान पदमत्र निर्दिष्टम् ।

४६. श्रा पाके । श्राति, पच्यते स्वयमेवेति कर्मकर्तर्याहुः[1] । णौ मित् (द्र० धातुसूत्र १।५४७)—श्रपयति । श्राणा यवागूः । शृतं पक्वे, क्षीरहविषोः (६।१।२७ सू० भाष्यं च) ण्यन्ताण्यन्तयोर्निपातनम्[2]॥

४७. द्रा कुत्सितायां गतौ । कुत्सिता गतिः पलायनम्, निद्रा च ।[3] द्राति । नेर्गद (८।४।१७) इति णत्वम्—प्रणिद्राति । स्पृहिगृहिपति (३।२।१५८) इत्यालुच्—निद्रालुः । निद्राणः । भ्वादौ द्रै स्वप्ने (१।६४५)—द्रायति ॥४२॥

४८. प्सा भक्षणे । प्रणिप्साति (द्र० ८।४।१७)—स्वनुहर् (उ० १।१५१) इति धिप्सप्साऽग्निः ॥४३॥

४९. पा रक्षणे । पाति । पातेर्लुक् (७।३।३७ वा०) णौ-पालयति । नप्तृनेष्टृ (उ० २।९५) इति पिता । रक् (द्र० उ० २।१३)—पिप्रः । अच्छुनि पातस्थुक् (तु० उ० ४।२०४)—पाथोऽम्बु । पानीविषिभ्यः पः (उ० ३।२३)—पापम् । स्तूमीपापा (उ० ३।४१)—इति कन्—पाको[4] बालः । पातेर्डतिः (उ० ४।५७)—पतिः । नभ्राण्नपात् (६।३।७५) इति नपात्[5] पातेर्डुम्सुन् (उ० ४।१७८)—पुमान् । के—नृपः (द्र० ३।२।३) अधिपः (द्र० ३।१।१३६) । नामन्सामन् (द० उ० ६।७५) इति पाप्मा । ड्रन् (द० उ० ८।७१)—पात्रम् । मनिन् ( द० उ० ६।७३ )—पामा । भ्वादौ पा पाने (१।६५७)—पिबति, पै ओवै शोषणे (१।६५४)—पायति ॥४४॥

५०. रा दाने । राति । रातेर्डैः (उ० २।६६) इति रा धनम् । कन् (द्र० उ० ३।४०) राका पूर्णिमा । राशदिभ्यां त्रिप् (द० उ० ४।६६ पाठः)—रात्रिः ॥४५॥

---

१. क इति न ज्ञायते । २. अत्र प्रदीपोद्योतावपि द्रष्टव्यौ ।

३. स्मृतमिदं धातुवृत्तौ (पृष्ठ २५५) ।

४. पाकशब्दः पवित्रार्थेऽपि प्रयुज्यते । तथा च मन्त्रवर्णः—यो मा पाकेन मनसा चरन्तमभिचष्टेऽनृतेभिर्वचोभिः (ऋ० ७।१०४।८) । अयमेव शब्दोऽस्मिन्नेव अर्थे फारसीभाषायामपि प्रयुज्यते । अत्र विशेषः—सं० व्या० शास्त्र का इतिहास—नाम्नि ग्रन्थे (भाग १ पृष्ठ २७) ऽवलोकनीयः । ५. इतोऽग्रे—'पातयतेस्त्विद निपातनं युक्तम्—नत्वनपात् (अष्टा० ६।२।१४०)' इत्यधिकम् ।

५१. ला आदाने । लाति । लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने[1] (तु० ३।३९) णौ—घृतं विलालयति, विलापयति । आतोऽनुपसर्गे कः (३।२।३)—बहुलः[2] ॥४६॥

५२. दाप् लवने । पकारो दाधा घ्वदाप् (१।१।२०) इत्यर्थः[3] । दाति क्षेत्रम् । दायन्ते व्रीहयः । दाता । दाम्नी (३।२।१८२) इति ष्ट्रन्—दात्रम् ॥४७॥

५३. ख्या प्रकथने ।[4] आख्याति । ख्याता[5] । अस्यतिवक्ति-ख्यातिभ्योऽङ् (३।१।५२)—आख्यत् । न ध्याख्या (८।२।५७) इति निष्ठा-नत्वं नास्ति ख्यातः । समाने ख्यश्च[6] (तु० उ० ४।१३७)-इति सख्या ॥४८॥

५४. प्रा पूरणे । प्राति । वले (द्र० ८।२।४३)—प्राणः ॥४९॥

५५. मा माने । मानं वर्तनम् । पात्रे माति, प्रणिमाति । माती मान्ती । घुमास्था (६।४।६६) इतीत्वं नास्ति, सर्वत्र हि पानाग्रहणं-लुग्विकरणस्य णत्ववर्जम्[7]—मायते । सनि मीमा (७।४।५४) इत्यच इस्—

१. 'त्रिपातने' पाठान्तरम् । २. 'बहुलम्' पाठा० ।
३. 'इति पिदर्थः' पाठा० । ४. 'प्रथने' पाठा० ।
५. 'ख्यात.' पाठा० ।
६. नैतादृश्यानुपूर्वी क्वचिदुपलभ्यते । सायण ऋग्भाष्ये (१।२२।८) 'समाने ख्यश्चोदात्तः' इत्येवं पठति ।

७. उद्धृतमिदं प्रक्रियाकौमुद्याः (भाग २, पृष्ठ १९०) । धातुवृत्तौ स्मृ वा निराकृतम् (पृष्ठ २५८) । इह हि वैयाकरणानां त्रिविधाः प्रवादा दृश्यन्ते । तथाहि—"गामादाग्रहणेष्वविशेषः" (परि० सीरदेव १०८, नागेश ११५ शेषाद्रिनाथ ६८) इत्यनया परिभाषया लुग्विकरणपरिभाषा (परि० सीर० ८६, नागेश ९१) न बाध्यत इति सीरदेवनागेशशेषाद्रिनाथाः । वृत्तिकारोऽप्येवं शङ्कते इति न्यासकार आह (६।४।६६) । तथा सति घुमास्था (६।४।६६) इत्यादिना ईत्वे मीयत इत्येव भवितव्यम् । मतान्तरे 'गामादा' परिभाषया लुग्विकरणपरिभाषा न बाध्यत इत्यपि न्यासकारसीरदेवावाहतुः । तथा सति मायत इत्येव भवति । क्षीर-स्वाम्युक्त मत नास्माभिः क्वचिदुपलब्धम् । यदि नेत्रसे दान (८।४।१७) एव माना-मा ग्रहणस्य ग्रहणमभिमतं स्यात्तर्हि परिभाषायां ग्रहणं दनिर्देशो व्यर्थ एव, तत एव तदा

मिस्सति। हुयामाश्रुभसिभ्यस्त्रन् (द० उ० ४।१६८)—मात्रा। चन्द्रे मो डित् (उ० ४।२२८)—चन्द्रमाः। द्यतिस्यतिमा (७।४।४०) इतीत्—मितः। मः सः[1]—मासः। मापो रुद्री च (द० उ० १।१५७)—मेघः। माछाससिसूभ्यो यः (उ० ४।१०८ श्वेत०)—माया। ऋज्रेन्द्र (उ० २।२८) इति माला ॥५०॥

५६. अनुदात्ताः।

## [अथानिट् परस्मैपदी]

५७. वच भाषणे[2], ५८. अनुदात्त उदात्तेत्। वक्ति। वक्ता। वचिस्वपि (६।१।१५) इति सम्प्रसारणम्—उवाच,[3] उक्तम्। अस्यतिवक्तिख्यातिभ्योऽङ् (३।१।५२), वच उम् (७।४।२०) अवोचत्। भव्यगेय (३।४।६८) इति कर्तरि प्रवचनीयोऽनुवाकस्य चैत्रः। यजयाचरुच (७।३।६६) इति कुत्वं नास्ति—प्रवाच्यम्। वचोऽशब्दसंज्ञायाम् (७।३।६७)—वाच्यम्, शब्दे—वाक्यम्। घञ् (द्र० ३।३।१९)—अनुवाकः, वाकः। उपेयिवान् (३।२।१०९) इत्यनूचानः। श्लोकवचः पचादौ[4] (गण० ३।१।१३४)। कृके वचः कश्च (उ० १।६) इति क्षुण्—कृकवाकुः कुक्कुटः। पातृतुदिवचि (उ० २।७) इति थक्—उक्थं साम। शुधूवीपचिवचि (उ० ४।१६७) इति क्नन्—वचनम्। क्विब्वचि (उ० २।५७) इति दीर्घः—वाक्। असुन् (द० उ० ७।४०)—वचस्। पुंसि संज्ञायां घः (३।३।११८)—वकः। वचन्तीति नेष्यते, अनभिधानात्[5]। चुरादौ—

व्याख्यानमसङ्गतम्। अपि च णत्वेऽपि क्षुभ्नादित्वपरिभाषा कुतो न प्रवर्तते इति वक्तव्यम्। तस्मात् बहुमतानुसारमीत्वेन भवितव्यमेव इति युक्तं पश्यामः।

१. 'मासश्च' इति दशपाद्युणादि-पाठः (९।२७), 'माङः सः' इति कातन्त्रोणादिदुर्गसिंहवृत्तौ (५६४) पाठ उपलभ्यते। लिबिशेन तु हैमोणादिसूत्रनिदर्शनाय ५६४ संख्या निर्दिष्टा।

२. 'परिभाषणे' पाठान्तरम्।

३. उवाचेत्यत्र तु 'लिट्यभ्यासस्य' (६।१।१७) इति सम्प्रसारणम्।

४. पचादौ 'श्लोकवचः' न पठ्यते। तस्याकृतिगणत्वात्साधुत्वं मन्यन्ते।

५. उद्धृतमिदं धातुवृत्तौ (पृष्ठ २५०)। वचन्ति प्रयोगोऽनभिधानान्न भवतीत्यत्र न किञ्चिदाचार्य शिष्टवचनमुपलभ्यते। धातुवृत्तौ (पृष्ठ-२५८) तु

५१. ला आदाने । लाति । लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने[1] (तु० ३।३९) णौ—घृतं विलालयति, विलापयति । आतोऽनुपसर्गे कः (३।२।३)—बहुलः[2] ॥४६॥

५२. दाप् लवने । पकारो दाधा घ्वदाप् (१।१।२०) इत्यर्थः[3] । दाति क्षेत्रम् । दायन्ते व्रीहयः । दाता । दाम्नी (३।२।१८२) इति ष्ट्रन्—दात्रम् ॥४७॥

५३. ख्या प्रकथने ।[4] आख्याति । ख्याता[5] । अस्यतिवक्तिख्यातिभ्योऽङ् (३।१।५२)—आख्यत् । न ध्याख्या (८।२।५७) इति निष्ठानत्वं नास्ति ख्यातः । समाने ख्यश्च[6] (तु० उ० ४।१३७)—इति सखा ॥४८॥

५४. प्रा पूरणे । प्राति । कते (द्रु० ८।२।४३)—प्राणः ॥४९॥

५५. मा माने । मानं वर्तनम् । पात्रे माति, प्रणिमाति । माती मान्ती । घुमास्था (६।४।६६) इतीत्वं नास्ति, सर्वत्र हि पाणामहणं लुग्विकरणस्य णत्वर्जम्[7]—मायते । सनि मीमा (७।४।५४) इत्यच इस्—

1. 'विपातने' पाठान्तरम् । 2. 'बहुलम्' पाठा० । 3. 'इति पिदर्थः' पाठा० । 4. 'प्रथने' पाठा० । 5. 'ख्यातः' पाठा० ।

6. नैतादृश्यानुपूर्वी क्वचिदुपलभ्यते । सायण ऋग्भाष्ये (१।२२।८) 'समाने ख्यश्चोदात्तः' इत्येवं पठति ।

7. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २, पृष्ठ १६०) । धातुवृत्तौ स्मृत्वा निराकृतम् (पृष्ठ २५८) । इह हि वैयाकरणानां त्रिविधाः प्रवादा दृश्यन्ते । तथाहि—"गामादाग्रहणेष्वविशेषः" (परि० सीरदेव १०८, नागेश ११५ शेषाद्रिनाथ ९८) इत्यनया परिभाषया लुग्विकरणपरिभाषा (परि० सीर० ८६, नागेश ९१) न बाध्यत इति सीरदेवनागेशशेषाद्रिनाथाः । वृत्तिकारोऽप्यत्रैवानुकूल इति न्यासकार आह (६।४।६६) । तथा सति घुमास्था (६।४।६६) इत्यादिना ईत्वे मीयत इत्येव भवितव्यम् । मतान्तरे 'गामादा' परिभाषया लुग्विकरणपरिभाषा न बाध्यत इत्यपि न्यासकारसीरदेवावाहतुः । तथा सति मायत इत्येव भवति । क्षीरस्वाम्युक्तं मतं नास्माभिः क्वचिदुपलब्धम् । यदि केवले पाठ (८।४।१७) एव मामान्यस्य ग्रहणमभिप्रेतं स्यात्तर्हि परिभाषाया शब्दनिर्देशो व्यर्थ एव, तत्र सूत्र एव तथा

मित्सति । हुयामाश्रुभसिभ्यस्त्रन् (तु० उ० ४।१६८)—मात्रा । चन्द्रे मो डित् (उ० ४।२२८)—चन्द्रमाः । यतिस्यतिमा (७।४।४०) इतीत्—मितः । मः सः[1]—मासः । मापो रुरी च (द० उ० १।१५७)—मेरुः । माछाससिसूभ्यो यः ( उ० ४।१०८ श्वेत० )—माया । अजेन्द्र (उ० २।२८) इति माला ॥५०॥

५६. अनुदात्ताः ।

[अथानिट् परस्मैपदी]

५७. वच भाषणे[2], ५८. अनुदात्त उदात्तेत् । वक्ति । वक्ता । वचिस्वपि ( ६ । १ । १५ ) इति सम्प्रसारणम्—उवाच,[3] उक्तम् । अस्यतिवक्तिख्यातिभ्योऽङ् (३।१।५२), वच उम् (७।४।२०) अवोचत् । भव्यगेय (३।४।६८) इति कर्तरि प्रवचनीयोऽनुवाकस्य चेत्रः । यजयाचरुच (७।३।६६) इति कुत्वं नास्ति—प्रवाच्यम् । वचोऽशब्दसंज्ञायाम् (७।३।६७)—वाच्यम्, शब्दे-वाक्यम् । घञ् (द्र० ३।३।१९)—अनुवाकः, वाकः । उपेयिवान् (३।२।१०९) इत्यनूचानः । श्लोकवचः पचादौ[4] (गण० ३।१।१३४) । इके वचः कश्च (उ० १।६) इति क्रुण्—कृकवाकुः कुक्कुटः । पातृतुदिवचि (उ० २।७) इति थक्—उक्थं साम । शुषिचीपचिवचि (उ० ४।१६७) इति मन्—वक्त्रम् । क्विब्वचि (उ० २।५७) इति दीर्घः—वाक् । असुन् (द० उ० ७।४१)—वचस् । पुंसि संज्ञायां घः (३।३।११८)—वकः । वचन्तीति नेष्यते, अनभिधानात्[5] । जुहोत्यादौ—

व्याख्यानसमन्वात् । अपि च यत्वेऽपि लुग्विकरणपरिभाषा कुतो न प्रवर्तते इति वक्तव्यम् । तस्मात् बहुमतानुसारमौरेवेन भवितव्यमेव इति युक्तं पश्यामः ।

१. मासश्च' इति दशपाद्युणादि-पाठ. (९।२७), 'माङः सः' इति कातन्त्रोणादिदुर्गसिंहवृत्तौ ( ५.६४ ) पाठ उपलभ्यते । लिबिशेन तु हैमोणादिसूत्रनिदर्शनाय ५६४ सङ्ख्या निर्दिष्टा ।

२. 'परिभाषणे' पाठान्तरम् ।

३. उवाचेत्यत्र तु 'लिट्यभ्यासस्य' (६।१।१७) इति सम्प्रसारणम् ।

४. पचादौ 'श्लोकवचः' न पठ्यते । तस्याकृतिगणत्वात्साधुत्वं सम्भवति ।

५. उद्धृतमिदं धातुवृत्तौ ( पृष्ठ २५० ) । वचन्ति प्रयोगोऽनभिधानान्न भवतीत्यत्र न किंचित्प्राचां शिष्टवचनमुपलभ्यते । धातुवृत्तौ ( पृष्ठ-२५८ ) तु

वाचयति[1] । पारायणिकैर्नाधीतोऽयम्[2] ॥५१॥

[अथ सेटः परस्मैपदिनः]

५९. विद ज्ञाने । इतश्चत्वारः सेटः परस्मैपदिनश्च । वेत्ति, वित्तः, विदन्ति । विदो लटो वा (३।४।८३) इति णलादयो वा—वेद, विदतुः, विदुः । दश्च (८।२।७५) इति दस्य वा रुः—अवेः, अवेत् । समो गमि (१।३।२९) इति तङ्—संवित्ते । वेत्तेर्विभाषा (७।१।७) इति रुट्—संविद्रते बुधाः, संविदते । रुदविदमुष (१।२।८) इति सेट् सन् क्त्वा च कितौ वा[3]—विविदिषति विवेदिषति, विदित्वा, वेदित्वा । उषविदजागृभ्योऽन्यतरस्याम् (सू० ३।१।३८) इत्याम् वा विदांचकार, आमि विदेरगुणत्वमाहुः (सू० ३।१।३८ भाष्य), विवेद । सिजभ्यस्तविदिभ्यश्च (३।४।१०९) इति झेर्जुस्—अविदुः । विदांकुर्वन्त्वित्यन्यतरस्याम् (३।१।४१), पक्षे—विदन्तु । णौ अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—वेदयः । सत्सूद्विष (३।२।६१) इति क्विप्—वेदवित् । क्ते[4] विदितः । विदिभिदिच्छिदेः कुरच् (३।२।१६२)—विदुरः । विन्दुरिच्छुः (३।२।१६९) इति विन्दुः विद्वान् । विदि अवयवे ( १।५३ ) इत्यस्मात् तु बिन्दुर्जलकणः[5]

मतान्तरमप्युपन्यस्यते—वानेयस्तु एकवचनान्तानुदाहृत्य अन्यत्राभिधानमित्येके इति[1]। स्कन्दस्वामी तु स्वभाष्ये (१।५४।८) 'अवचन्ति' इत्यपि प्रयुक्तवान् ।

१. क्षीरस्वामी चुरादौ स्वयं न पठति, 'वद सन्देशने ( १०।२२४ ) इति सूत्रव्याख्याने चान्द्रमतेनोपन्यस्यति । यथाह—'चन्द्रो वर्णेन यपाठीत्' ।

२. सायणेनाप्ययं 'पारायणिकैरेव परिभाषया धातुर्न पठितः' इत्यस्य धातुवृत्त्यारम्भे धातोः प्रामाणिकता प्रत्यपादि । ( पृ० २५६ ) चौरादिको वद सन्देशने पारायणिकैर्न पठित इति तु स्वामिनोऽभिप्रायः । अयमेव चाभिप्रायः पुरुषकारेऽपि स्वामिनाम्ना स्मृतः (पृष्ठ ५१) । प्रक्रियाकौमुद्यामपि (भाग २ पृष्ठ १२७) द्रष्टव्यम् ।

३. अत्र स्वामी भ्रान्तः । रुदविदसूत्रं हि रलो व्युपधाद्धलादेः संश्च (१।२।२६) इत्यादिना विकल्पे प्राप्ते नित्यं कित्त्वं विधत्ते । तेन विविदिषति विदित्वा इत्येव भवति । अत्र 'रुदिर् अश्रुविमोचने' (२।६२) इति सूत्रस्य तरङ्गिण्यपि द्रष्टव्या ।

४. अत्र लिपिकरेण भ्रान्त्या इत्वविकल्पविधायकसूत्रस्य (१।२।२६) संख्या निर्दिष्टा ।

५. 'बाहुलकाद्बः' इति विदि अवयवे (१।५३) इत्यत्र स्वामी ।

ओष्ठ्यादिः। संज्ञायां समज (३।३।९९) इति क्यप्—विद्या। घट्टिवन्दिविदिभ्यो (३।३।१०७ वा०) युच्—वेदना। कर्मणि दृशिविदोः साकल्ये (३।४।२९) णमुल्—ब्राह्मणवेदं भोजयति। विदेः शतुर्वसुः (७।१।३६) वा—विद्वान्, विदन्। विभाषा गमहन (७।२।६८) इतीट्—विविद्वान् विविदिवान्। हृपिशिरुहि (द० उ० १।४७) इतीन्—वेदिः। हलश्च (३।३।१२१) इति करणे घञ्—वेदः। नभ्राण्नपात् (६।३।७५) इति न विद्यते—नवेदाः, असुन् सर्ववेदाः[1] सर्वस्वदक्षिणक्रतुयाजी[2]। दिवादौ विद सत्तायाम् (४।६३)—विद्यते। तुदादौ विदॢ लाभे (६।१४२)—विन्दति। रुधादौ विद विचारणे (७।१३)—विन्ते, विनत्ति[3]। चुरादौ विद चेतनाख्याननिवासेषु (१०।१५५) तङानौ—वेदयते ॥५२॥

६०. **अस भुवि**। भवनं भूः, सत्ता। अस्ति। श्नसोरल्लोपः (६।४।१११)—स्तः, सन्ति, सन्। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः (८।३।८७) इति षः—अभिष्यात् अभिषन्ति, प्रादुःष्यात् प्रादुःषन्ति, नेह—अभिस्तः। तासस्त्योर्लोपः (७।४।५०)—त्वमसि, व्यतिसे। रि च (७।४।५१)—व्यतिरे। ह एति (७।४।५२) इति सस्य हः—व्यतिहे। ध्वसोरेद्धावभ्यासलोपश्च (६।४।११९)—एधि। अस्तिसिचोऽपृक्ते (७।३।९६) इतीट्—आसीत्। अस्तेर्भूः (२।४।५२), गातिस्था (२।४।७७) इति सिज्लुक्, पाहिभुवोरीट्प्रतिषेधः (१।२।२६ भा०), भूसुवोस्तिङि (७।३।८८) इति गुणाभावः—अभूत्। अनुप्रयोगे तु भुवोऽस्त्यबाधनम् (२।४।५२ भा०)—कारयामास। कृभ्वस्तियोगे (५।४।५०) च्विः—शुक्लीस्यात् ॥५३॥

६१. **मृजूष् शुद्धौ**। व्रश्चभ्रस्ज (८।२।३६) इति षः, मृजेर्वृद्धिः (७।२।११४)—मार्ष्टि। मृजेरजादौ संक्रमे विभाषा वृद्धिः[4]—परिमृजन्ति परिमार्जन्ति। ऊदित्त्वात् (द्र० ७।२।४४) वेट्—मार्ष्टा मार्जिता। मृष्टः। मृजेर्विभाषा (३।१।११३) क्यप् परिमृज्यः, परिमार्ग्यः। तुन्दशोकयोः

---

1. उज्ज्वलदत्तेन 'गतिकारकयोः' (उ०।४।२२६) सूत्रवृत्तौ व्याख्यातः।
2. 'सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः' इत्यमरः (२।७।९)।
3. रुधादौ विदधातुरनुदात्तेत् पठ्यते (द्र० क्षीर० ७।१३)। तेन 'विनत्ति' इति रूपं चिन्त्यम्।
4. 'अथान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते' इति भाष्यम् (१।१।३) अत्रानुसन्धेयम्।

परिमृजापनुदोः (३।२।५) कः—तुन्दपरिमृजोऽलसः । घञ् (द्र० ३।३।१८,१९)—मार्गः । भिदादौ (गण० ३।३।१०४) मृजा । कञ्जिमृजिभ्यां चिद् (उ० ३।१३७) इत्यारन्—मार्जारः, मार्जालः । मृजेष्टिलोपश्च (उ० १।११०) इति कलच्—मलः । चुरादौ मृजूष् शौचालंकारयोः (१०।२३६)—मार्जयति । मार्जना (द्र० ३।३।१०७) । मार्जितः, मार्जिता रसालेति रूढिः (द्र० अमर २।९।४४) ॥५४॥

६२. रुदिर् अश्रुविमोचने । रुदादिभ्यः सार्वधातुके (७।२।७६) इतीट्—रोदिति । लङि—रुदश्च पञ्चभ्यः (७।३।९८) इतीट्—अरोदीत्, अड् गार्ग्यगालवयोः (७।३।९९)—अरोदत् । यासुट्—इतीडटौ पूर्वविप्रतिषेधेन बाधित्वा यासुट्[1] (द्र० ३।४।१०३) । इरितो वा (३।१।५७) इत्यङ्—अरुदत् अरोदीत् । रलो व्युपधाद (१।२।२६) इति निषेधे प्राप्ते रुदविदमुष (१।२।८) इति संश्च क्त्वा च कितौ वा[2]—रुरुदिषति, रुरोदिषति, रुदित्वा रोदित्वा । रोदेर्णिलुक् च (उ० २।२२) इति रक्—रुद्रः ॥५५॥

६३. उदात्ता उदात्तेतः ॥

[अनिट् परस्मैपदी]

६४. ञिष्वप् शये, ६५ अनुदात्त उदात्तेत् । स्वपिति । सुष्वाप । सुविनिर्दुर्भ्यः (८।३।८८) इति षः । सुषुप्यते । वचिस्वपि (६।१।१५) इति सम्प्रसारणम्—सुषुपुः । लङि (द्र० ७।३ ९८,९९) अस्वपीत् अस्वपत् । लुङि अस्वाप्सीत् । रुदविद (१।२।८) इति सुषुप्सति, सुप्त्वा । स्वापेश्चङि (६।१।१८) सम्प्रसारणम्—असूषुपत् । स्वपो नन् (३।३।९१)—स्वप्नः । ञीतः क्तः (३।२।१८७)—सुप्तः । स्वपितृषोर्नजिङ् (३।२।१७२)—स्वप्नक् ॥५६॥

---

१. उद्धृतं धातुवृत्तौ (पृष्ठ २६२) ।

२. अत्रापि भ्रान्तः स्वामी । न हि 'रलो व्युपधाद' (१।२।२६) इति क्त्वासनोः कित्वं प्रतिषेधति, किं तर्हि विकल्पं विधत्ते । 'रुदविद' (१।२।८) इति [redacted] नित्यं कित्वं प्रतिपादयति, न विकल्पम् । अतः 'रुदविदमुष रुदित्वा' इत्येव साधु । विद ज्ञाने (२।५२) सूत्रव्याख्यानेऽपीयमेवास्य भ्रान्तिः ।

## [अथ सेटः परस्मैपदिनः]

६६. श्वस प्राणने । प्राणनं जीवनम् । इतो षष्ट्यन्ता (२।८२) द्वादश सेटः । श्वसिति । अश्वसीत्, अश्वसत् । लुङि—यतो हलादेर्लघोः (७।२।७) वा[1] वृद्धिः—अश्वसीत्, अश्वासीत् । श्याद्व्यध (३।१।१४१) इति णः—श्वासः । काशकृत्स्ना अस्य निष्ठायाम् अनिट्त्वमाहु[2]— आश्वस्तः, विश्वस्तः । चलनशब्दार्थाद् (३।२।१४८) युच्—श्वसनः ॥५७॥

६७. अन च । चात्[3] प्राणने । प्रपूर्व—प्राणिति । प्राणीत् प्राणत् । अनितेः (८।४।१९) इति णत्वम् । अन्तः (८।४।२०)—प्राण् । उभौ साभ्यासस्य (८।४।२१)—प्राणिणिषति । कृवृजृसि (उ० ३।१०) इति नः—अन्नम् । अनुर् (द० उ० ६।४६)—अनः शाकटम् । अघ्न्यादिषु (गण० उणादि ४।११२) अन्यः । अनिदंशिभ्यां चित् (तु० द० उ० ३।४१) अनीकम् । प्राणाद्या[4] घञि ।

६८. जक्ष भक्षहसनयोः । [जक्षिति], जक्षति । अजक्षीत्, अजक्षत् । जक्षित्यादयः षट् (६।१।६) अभ्यस्तः । नाभ्यस्ताच्छतुः (७।१।७८) इति न नुम्—जक्षत् । वा नपुंसकस्य (७।१।७९) जक्षति कुलानि, जक्षन्ति । सिजभ्यस्त (३।४।१०९) इति झेर्जुस्—अजक्षुः । लुङि—अजक्षिषुः ॥५८॥

६९. उदात्ता उदात्तेतः ।

७०. रुद । रुदादयः पञ्चोक्ताः ॥

---

१. क्षीरस्वामी 'ह्म्यन्तक्षण' (७।२।५) सूत्रे 'शस' इति पठति । तेन 'अशसीत्' इति शसेर्वृद्धिनिषेधो भवति (द्र० क्षीरतरङ्गिणी २।४८०) । तेनात्र स्वामी मते वृद्धिविकल्पः । ये तु ह्म्यन्तक्षण (७।२।५ सूत्रे) 'श्वस' इति पठन्ति तेषां 'अश्वसीत्' इत्येव भवति, शसधातोस्तु अशसीत् अशासीत् इत्युभयथा ।

२. स्मृतमिदं धातुवृत्तौ (पृष्ठ २६४) । काशकृत्स्नधातुपाठस्य कन्नडटीकायामेतद्धातुसूत्रव्याख्याने तादिप्रत्ययसामान्य इडभाव उदाह्रियते । यथा—'श्वस्ति, श्वस्तम् श्वस्तव्यम्' इति (पृष्ठ १६५) ।

३. 'चकारात्' पाठा० । ४. प्राण अपान-व्यान-उदान-समानाः ।

७१. जागृ निद्राक्षये। सेट्। जागर्ति, जाग्रतः[1], जाग्रति बुधाः। रिङ् शयग्लिङ्क्षु (७।४।२८) इति प्राप्ते जाग्रोऽविचिण्णल्ङित्सु (७।३।८५) इति गुणः—जागर्यते। उषविद—जागृभ्[2]यन्यतरस्याम् (तु० ३।१।३८) इत्याम् वा—जागरांचकार, जजागार। णलुत्तमो वा (७।१।९१) णित्—जजागार, जजागर। ह्म्यन्तक्षण (७।२।५) इति वृद्धिर्नास्ति—अजागरीत्। जागर्तेरकारो वा (३।३।१०१ वा)० जागरा, जागर्या। जागुरूकः (३।२।१६५)—जागरूकः। जॄशॄस्तॄजागृभ्यः क्विन् (उ० ४।५४)—जागृविः ॥५९॥

७२. दरिद्रा दुर्गतौ। सेट्। दरिद्राति। इद् दरिद्रस्य (६।४।११४)—दरिद्रितः। श्नाभ्यस्तयोरातः (६।४।११२) लोपः—दरिद्रति। दरिद्रातेरमार्धधातुके (कातन्त्र ३।८।२४)[3] दरिद्र्यते, दरिद्रायते इत्येके। पचादौ (द्र० ३।१।१३४) दरिद्रः। दरिद्रातेर्वा[4] इत्याम्—दरिद्रांचकार। ददरिद्रौ[5]। अभ्यस्ताच्च (द्र० ३।४।१०९) झेर्जुस्—अदरिद्रुः। लुङि वा[6]—अदरिद्रीत् अदरिद्रासीत्। तनिपतिदरिद्राणां (तु० ७।२।४९ वा०) सनि वेट्—दिदरिद्रासति दिदरिद्रिषति। न दरिद्रायके लोपो दरिद्राणे च नेष्यते, दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा (६।४।११४ वा०)। दरिद्रितः, यस्य विभाषा (७।२।१५) इतीण्निषेधो नास्ति, सर्वेकाच् इत्यनुवृत्तेः। दरिद्रातेर्यालोपश्च (उ० ४।६०) इत्युः—दर्द्रुः ॥६०॥

७३. उदायौ। नोदाहृतेमौ, दरिद्राजागृत्यनित्वस्मरणात्[7] ॥

७४. चकासृ दीप्तौ। चकास्ति। चकासति। चकासत्। कास्यनेकाज्ग्रहणात् (द्र० ३।१।३५ भाष्य) आम्—चकासांचकार। तिप्यनस्तेः (८।२।७३) इति सस्य दः—अचकाद् भवान्। सिपि धातोरुर्वा

---

1. 'जागृतः' इति शुद्ध पाठो द्रष्टव्यः। 2. 'जागृभ्यः' पाठः।
3. अत्र लिङ्निशेनाइवृत्त्या भाष्यवार्तिक द्रष्टव्यं ६।४।११४,१ संख्या निर्दिष्टा।
4. अनुपलब्धमूलम्। मतमिदं स्मृतं धातुवृत्तौ (पृष्ठ २१६)। अत्र धातुवृत्तिरनुसन्धेया।
5. स्मृतमिदं धातुवृत्तौ (पृष्ठ २१६)।
6. 'यथावन्यो वा' इति वार्तिकम् (६।४।११४) अनानमधेयम्।
7. कुत्र स्मर्यत इति न ज्ञायते। पारम्पर्यमेवेति शेषः स्यात्।

( ८।२।७४ )—अचकात् त्वम्, अचकास्त्वम् । अचकासीत् । चकासिता ॥६१॥

७५. शासु अनुशिष्टौ । अनुशिष्टिर्नियोगः । शास्ति । शासति । शासिता । शास इदङ्हलोः (६।४।३४) शासिवसि (८।३।६०) इति षः—शिष्टः । शा हौ ( ६।४।३५ )—शाधि । तिप्यनस्तेः ( ८।२।७३ ) इति दः—अशाद् भवान् । सिपि धातोर्वा ( ८ । २ । ७४ ) अशात् त्वम्, अशास्त्वम् । झेर्जुस् (द्र० ३।४।१११)—अशासुः । सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—अशिषत् । नाग्लोपिशास्वृदिताम् (७।४।२)—अशशासत् । एतिस्तुशास्वृ ( ३।१।१०९ ) इति क्यप्—शिष्यः । तन्वन्यो[1] शंसिघसादिभ्यः संज्ञायां चानिटौ (उ० २।९४)—शास्ता[2] बुद्धः, प्रशास्ता ऋत्विक् । क्तिन् आबादिभ्यः (३।३।९४ वा )—शिष्टिः । शास्तिरुणाद्वौ[3] । भाषायां शासियुधि (३।३।१३०) इति युच्—दुःशासनः । उदितो वा ( ७।२।५६ ) इट्—शिष्ट्वा, शासित्वा । शिष्टः ॥६२॥

७६. उदात्तानुदात्तेतौ ।

[अथ सेटावात्मनेपदिनौ]

७७. दीधीङ् दीप्तिदेवनयोः[4] । देवनं क्रीडा । आदीधीते । यीवर्णयोर्दीधीवेव्योः (७।४।५३) लोपः—आदीध्यते, आदीधिता । दीधीवेवीटाम् (१।१।६) इति गुणवृद्धी न स्तः—आदीध्यनम्, आदीध्यकः । दीधितिः—अग्रहादीनाम् (७।२।९ वा०) इति पर्युदासात् तितुत्र (७।२।९) इतीण्निषेधो नास्ति ॥६३॥

७८. वेवीङ् वेतिना तुल्ये[4] । वी गत्यादौ ( २।३६ ), तत्तुल्येऽर्थे । वेतनातुल्य इत्यपपाठः । आवेवीते । शिष्टं प्राग्वत् ॥६४॥

---

१. तन्वन्यो पाठा० । २ अप्स्तृन्तृच् (६।४।११) सूत्रे 'प्रशास्तृ' शब्दे सोपसर्गस्यादर्शनात् दीर्घ[1] । द्र० धातुवृत्तिः (पृष्ठ २६७) ।

३. अत्र पक्षान्तराणि धातुवृत्तौ द्रष्टव्यानि (पृष्ठ २६७) ।

४. इमौ छान्दसाविति भाष्यम् (१।१।६) । नेति कातन्त्रीयाः । पाणिनिस्तु न विशेषमाह । अत्रास्मदीयः 'संस्कृत व्याकरण शास्त्र का इतिहास' नामा ग्रन्थो (पृष्ठ २९, ३०) द्रष्टव्यः ।

७९. उदाचौ। नोदात्तेतौ अनित्वस्मरणात्।

८०. दृत्। जक्षित्यादयः प्रसवाग्यस्ता वृत्ताः।

## [अथ सेटौ परस्मैपदिनौ]

८१. षस [1] ने। सस्ति। माछाससिसूभ्यो यः (उ० ४।१०६)—सस्यम्। रास्नासास्ना (उ० ३।१५)। सस्ति[2] ससेन इति चैके पेठुः[3]—संस्ति ॥६५॥

८२. वश कान्तौ। कान्तिरिच्छा। वष्टि। ग्रहिज्यावयि (६।१।१६) इति संप्रसारणम्—उष्टः उशन्ति; उशन्, उशती। वशिष्यति। विवशिषति। यङि न वशः (६।१।२०) सम्प्रसारणम्—वावश्यते। ण्यन्तात्ल्युः (गण० ३।१।१३४)—वाशनः। वशेः कित् (द० उ० ८।७३) इतीरन्—उशीरम्। वशः कनस् (क्षु० उ० ४।२३९)—उशनाः। उशिक्। (क्षु० उ० २।७१)। वशिरण्योरुपसंख्यानम् (३।३।५८ वा०)—वशः ॥६६॥

८३. उदात्ता उदात्तेतः।

८४. चर्करीतं च। चर्करीत परस्मैपदम्[4]। यङ्लुकः पूर्वाचार्यसंज्ञैषा। शपो लुक् प्रयोजनम्। चवदीति, नर्नर्ति। दीधीवेवीटाम् छान्दसाः[5]॥

## [अथानिट् आत्मनेपदी]

८५. ह्नुङ् अपनयने, ८६. अनुदात्तः। अपनयम् अपला-

---

१. 'षस स्वप्ने' इति स्वामिपाठ इत्याह सायणः (धातु पृ० ०६०)।

२. अत्र 'सस्ति' इति शुद्ध पाठः स्यात् 'सस्ति' रूपनिदर्शनात्।

३. अत्र धातुवृत्तिः (पृष्ठ २६७, २६८) द्रष्टव्या।

४. सर्व एव धातुवृत्तिकारा एतत्सूत्रव्याख्याने 'परस्मैपदम्' इति व्याचक्षते। तदयुक्तम्। यस्मात्सूत्रात् प्रागेव 'उदात्ता उदात्तेतः' इति सूत्रस्य पाठात्। अपि च 'परस्मैपदम्' इति व्याख्याने 'दाधर्ति (७।४।६५) सूत्रभाष्यमपि न सगच्छते। तत्र हि 'तेतिक्ते' निपातनाद् यङ्लुकः परस्मैपदित्व ज्ञापितम्। द० पृष्ठ ८ टि० ४।

५. नेदं धातुसूत्रम्। स्वामिवचन चैतत्। दीधीवेव्योश्छान्दसत्व उक्तम्।

पः। निह्नुते चैत्राय, श्लाघह्नुङ्स्था (१।४।३४) इति सम्प्रदानम्। अपह्नोता ॥६७॥

८७ वृत्। स्वपादयः स्वरार्थे वर्तिताः[1]।

भट्टेश्वरस्वामिपुत्र-क्षीरस्वाम्युत्प्रेक्षितायां धातुवृत्तौ क्षीरतरङ्गिण्यां लुग्विकरणोऽदादिगणः सम्पन्नः समाप्तः[2]।



१. स्वापादिहिंसामच्यनिटि (६।१।१८८) इति धातुदात्तत्वार्थम्।
२. 'इति क्षीरतरङ्गिण्यां लुग्विकरणा अदादयः समाप्ताः.' पाठ०।

७९ उदात्तौ । नोदात्तेतौ अनित्वस्मरणात् ।

८०. इत् । जक्षित्यादयः प्रभवात्यस्ता वृत्ताः ।

[अथ सेटौ परस्मैपदिनौ]

८१. षस ने । सस्ति । माछासससिसूभ्यो यः (उ० ४।१०६)—सस्यम् । शास्नासास्ना ( उ० ३।१५ ) । सस्ति[2] ससेन इति चैके पेठुः[3]—संस्ति ॥६५॥

८२. वश कान्तौ । कान्तिरिच्छा । वष्टि । ग्रहिज्यावयि (६।१।१६) इति संप्रसारणम्—उष्टः उशन्ति; उशन्, उशती । वशिष्यति । विवशिषति । यङि न वशः (६।१।२०) सम्प्रसारणम्—वावश्यते । ण्यन्ताल्ल्युः (गण० ३।१।१३४)—वाशनः । वशेः कित् (द० उ० ८।७३) इतीरन्—उशीरम । वशः कनस् ( द्र० उ० ४।२३९ )—उशनाः । उशिक् । ( द्र० उ० २।७१ ) । वशिरण्योरुपसंख्यानम् (३।३।५८ वा०)—वशः ॥६६॥

८३. उदात्ता उदात्तेतः ।

८४. चर्करीतं च । चर्करीत परस्मैपदम्[4] । यङ्लुकः पूर्वाचार्यसंज्ञैषा । शपो लुक् प्रयोजनम् । वावशीति, नर्नर्ति । दीधीवेव्यादयश्छान्दसाः[5] ॥

[अथानिट् आत्मनेपदी]

८५ ह्नुङ् अपनयने, ८६. अनुदात्तः । अपनयम् अपला·

---

१. 'षस स्वप्ने' इति स्वामिपाठ इत्याह सायणः (धातु पृ० २६०) ।

२. अत्र 'सस्ति' इति शुद्ध पाठः स्यात् 'सस्ति' रूपनिदर्शनात् ।

३. अत्र धातुवृत्तिः (पृष्ठ २६७, २६८) द्रष्टव्या ।

४. सर्वं एव धातुवृत्तिकारा एतत्सूत्रव्याख्यान 'परस्मैदम्' इति व्याचक्षते । तदयुक्तम् । यस्मात्सूत्रात् प्रागेव 'उदात्ता उदात्तेतः' इति सूत्रस्य पाठात् । अपि च 'परस्मैपदम्' इति व्याख्याने 'दाधर्ति (७।४।६५) सूत्रभाष्यमपि न सगच्छते । तत्र हि 'तेतिक्ते' निपातनाद् यङ्लुक' परस्मैपदित्व ज्ञापितम् । द्र० पृष्ठ ८ टि० ५।

५. नेद धातुसूत्रम् । स्वामिवचन चैतत् । दीधीवेव्योश्छादसत्व उक्तम् ।

पः। निह्नुते चैत्राय, श्लाघह्नुङ्स्था० (१।४।३४) इति सम्प्रदानम्। अपह्नोता ॥६७॥

८७ वृत्। स्वपादयः स्वरार्थं वर्तिताः[1]।

भट्टेश्वरस्वामिपुत्र-क्षीरस्वाम्युत्प्रेक्षितायां
धातुवृत्तौ क्षीरतरङ्गिण्यां
लुग्विकरणोऽदादिगणः
सम्पन्नः समाप्तः[2]।



१. स्वपादिर्हिंसामच्यनिटि (६।१।१८८) इति आद्युदात्तत्वार्थम् ।
२. 'इति क्षीरतरङ्गिण्यां लुग्विकरणा अदादयः समाप्ताः' पाठा० ।

# ॥ अथ जुहोत्यादिगणः ॥

१. हु दानादनयोः । दानमत्र हविः प्रक्षेपः, अदनं भक्षणम् । इतो जुधाश्रन्ता ( ३।१० ) इत्यनिट्: । जुहोत्यादिभ्यः श्लुः (२।४।७५) श्लौ (६।१।१०) इति द्विर्वचनम्—जुहोति, जुहुतः । हुश्नुवोः सार्वधातुके (६।४।८७) यण्—जुह्वति, अदभ्यस्तात् ( ७।१।४ ) । भीह्रीभृहुवां श्लुवच्च (३।१।३९) इति वाऽऽम्—जुहवांचकार जुहाव । हुझल्भ्यो हेर्धिः ( ६।४।१०१ )—जुहुधि । होता । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः (उ० २।१०८) इतीसिः—हविः । अर्तिस्तुसु (उ० १।१४०) इति मन्—होमः । हुयामा (उ० ४।१६८) इति त्रन्—होत्रम् । श्रुनिगमिजुहोतीनां द्वे च (३।२।१६८ वा०)—जुहूः स्रुक् ॥१॥

२. ञिभी भये । चौरेभ्यो बिभेति, भीत्रार्थानां भयहेतुः (१।४।२५) अपादानम् । भियोऽन्यतरस्याम् ( ६।४।११५ ) इत्त्वम्—बिभितः । भीह्री (३।१।३९) इति बिभयांचकार बिभाय । भीस्म्योर्हेतुभये (१।३।६८) तङ्—भियो हेतुभये षुक् ( ७।३।४० )—मुण्डो भीषयते । बिभेतेर्हेतुभये (६।१।५६) आत्वं वा—मुण्डो भापयते, नेह—कुञ्चिकयैनं भाययति । भियः क्रुक्लुकनौ (३।२।१७४)—भीरुः, भीलुकः । क्रुकन् अपि (द्र० ३।०।१७४ भाष्य० )—भीरुकः । भियः षुग् वा (उ० १।१४८) इति मक्—भीमः, भीष्मः । भञ्जिबिभी भयादीनामुपसंख्यानम् ( ३।३।५६ वा० )—भयम्, भीतिः, भीः । ऋज्रेन्द्राग्र (उ० २।२८) इति भेरभेलौ । आनकः शीङ्भियः (उ० ३।८२)—भयानकः । इण्भीका (उ० ३।४३) इति कन्—भेकः ॥२॥

३. ह्री लज्जायाम् । जिह्रेति, जिह्रियति । भीह्री (३।१।३९) इति जिह्रयांचकार, जिह्राय । अर्तिह्री (७।३।३६) इति पुक्—ह्रेपयति । नुदविदोन्दत्रा (८।२।५६) इति वा नत्वम् —ह्रीणः ह्रीतः । ह्रीः ॥३॥

४. पॄ[1] पालनपूरणयोः । पिपर्ति, पिपूर्तः[2] पिपुरति[3]—

---

१. 'पृ' पाठान्तरम् ।

२. 'पिपर्ति' पाठान्तरम् ।

३. नास्ति क्वचित् ।

अर्तिपिपर्त्योश्च (७।४।७७) इत्यभ्यासस्येत्वम्। शृदॄप्रां ह्रस्वो वा (७।४।१२)—निपप्रुः, निपपरुः। क्र्यादिनियमाद् (द्र० ७।२।१३) इट्—पप्रिथ। ह्रस्वान्तोऽयमिति नन्दी[4]—पपरिथ। ऋद्धनोः स्ये (७।२।७०)—परिष्यति। धारिपारि (३।१।१३८) इति ण्यन्ताच्छः—पारयः। पार तीर (१०।१६२) इत्यस्य पारम्। ऋदोरप् (३।३।५७)—परः। न ध्याख्या (८।२।५७) इति निष्ठानत्वाभावः—पूर्तः। पूर्तिः। वा दान्तशान्त (७।२।२७) इति ण्यन्तात् पूर्णः पूरितः। पूरी आप्यायने (४।४३) अस्मात् तु पूर्णः। क्र्यादौ (९।१८) पृणाति, तत्रैव ग्रहणशेषं वक्ष्यामः ॥४॥

५. डुभृञ् धारणपोषणयोः। भृञामित् (७।४।७६)—बिभर्ति। भर्ता। भारः। भित्रः (द्र० ३।३।८८), त्रेर्मम् नित्यम् (४।४।२०)—भृत्रिमम्। डुभृञ् इति प्रसिद्धाः—भरथुः[1] (द्र० ३।३।८९)। भीह्री (३।१।३९) इति आम् पक्षे—बिभरांचकार बिभार। भृतः। क्र्यादौ भॄ भर्त्सने (९।२०)—भृणाति, भरः, भरिता, भरीता। फलेग्रहिरात्मंभरिश्च (३।२।२६) चात् कुक्षिम्भरः[2] (द्र० ३।२।२६ काशिका)। संज्ञायां भृ (३।२।४६) इति विश्वंभरा। संज्ञायां समज (३।३।९९) इति भृत्या। भृतिः। भृञोऽसंज्ञायाम् (३।१।११२)—भृत्यः। संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति[3] (३।१।११२ भाष्य०) शृङ्गारभृङ्गारौ च। (द्र० उ० १।१२६) इति भृङ्गारः साधु। पचादौ (द्र० ३।१।१३४) आरंभरा। भ्वादौ (१।५३८) भवति ॥५॥

६. माङ् माने शब्दे च। मिमीते, भृञामित् (७।४।७६)। मास्तोऽप्यभ्यस्त्वाद् इत्थं नास्ति। सनि मीमा (७।४।५४) इति मित्सते। अदादौ मा माने (२।५५)—माति। भ्वादौ मेङ् प्रणिदाने (१।६८५)—विनिमयते।

७. ओहाङ् गतौ। भृञामित् (७।४।७६) इति जिहीते पर्याणि[6]

---

१. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २, पृष्ठ २२८), धातुवृत्तौ (पृष्ठ २७२) च।
२. उद्धृतमिदं पुरुषकारे (पृष्ठ ३६)।
३. तथा च चान्द्रं सूत्रम्—'फलेग्रहिरात्मम्भरिः कुक्षिम्भरिः' (१।२।१०)
४. श्लोकोऽयं 'स्त्रिया भार्याधिकारोऽस्ति तेन भार्या प्रसिध्यति' इत्यधिकं क्वचित्।
५. 'प्रणिधाने' पाठा०। ६. 'पमानि' पाठा०।

नाम्युज्जिहते रत्नानि[1] । हायते ग्रामः । हश्च व्रीहिकालयोः (३।१।१४८) इति ण्युट्—हायनो नाम व्रीहिः, वर्षं च । ओदितश्च (८।२।४५) इति निष्ठानत्वम्—हानः । हात्वा ॥७॥

८. ओहाक् त्यागे । ककारो हश्च व्रीहिकालयोः (३।१।१४८) इति सामान्यग्रहणाविघातार्थः; अकितः (द्र० ७।४।८३) इत्यभ्यासस्य दीर्घत्वनिषेधार्थं इत्येके । जहाति । जहातेश्च (६।४।११६) इतीत्वं वा—जहितः, जहीतः । जाहीतीति यङ्लुकि । आ च हौ (६।४।११७) इतीत्वम्, ईत्वम्, आत्वं च—जहिहि, जहीहि, जहाहि । लोपो यि (६।४।११८)—जह्यात् । घुमास्था (६।४।६६) इतीत्वम्—हीयते । एर्लिङि (६।४।६७)—हेयात् । वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः (३।२।२८ वा०) खश्—शर्धंजहा मृगाः[2] । हीनः । ग्लाज्याहाभ्यो निः (३।३।९५ वा०)—हानिः । जहातेश्च क्त्वि (७।४।४३) इतीत्वम्—हित्वा । नौ हः (उ० ३।४४) इति क्वन्—जिहाका गोधा[3] । नञि जहातेः (उ० २।१५७) कनिन्—अहः । खलं जहातीति कलहः—कः (द्र० ३।२।५) ॥८॥

९. डुदाञ् दाने । द्वचे । नेर्गदनद (८।४।१७) इति प्रणिददाति । नाभ्यस्ताच्छतुः (७।१।७८) नुम—ददत् । घुमास्था (६।४।६६) इतीत्थम्—दीयते । आङो दोऽनास्यविहरणे (१।३।२०) तङ्—विद्यामादत्ते । घ्वसोरेद्धावभ्यासलोपश्च (६।४।११९)—देहि । गातिस्थाघु (२।४।७७) इति सिज्लुक्—अदात् । स्थाघ्वोरिच्च (१।२।१७) सिच् कित्च—अदित[4] । सनि मीमा (७।४।५४) इति दित्सति । दु (द्र० ३।३।८८)—दत्रिमम् । ददातिदधात्योर्विभाषा (३।१।१३९) इति शः, पक्षे श्याद्व्यध (३।१।१४१) णः—ददः दायः । प्रे दाज्ञः (३।२।६)—विद्याप्रदः । दो दद्घोः (७।४।४६) दत्तः । अच उपसर्गात् तः (७।४।४७)—प्रत्तम् । दाधेट्सि (३।२।१५९) इति रुः—दारुर्दानम्[5] । उपसर्गे घोः किः (३।३।९२)—आदिः । आतो युच् (३।३।१२८) सुदानो गौस्त्वया । दायादः ॥९॥

---

१. 'खनानि' पाठ० । २. 'श्वाया' इति साध्यादौ पाठः ।

३. 'गोधिका' । ४. 'अदित' पाठ० ।

५. न लोकाव्यय (२।३।६९) सूत्रे 'उ' इत्यनेनोकारान्तस्यापि प्रतिषेध इति पठ्यमानः ।

१०. डुधाञ् दानधारणयोः[1] । धत्ते । प्रणिदधाति । दधत् । धीयते । धेहि । आधित । अधात् । दधस्तथोश्च (८।२।३८) इति भष्—धत्तः, धत्स्व, धत्त्विमम् । पाघ्राध्मा (३।१।१३७) इति धाय्या सामिधेनी । दधः । धायः । दधातेर्हिः (७।४।४२)—हितम् । वष्टि भागुरिरल्लोपम्[2] इति पिहितम्, पिधानम् । स्नुहिप्रहि ( ३।२।१५८ ) इत्यालुच्—श्रद्धालुः, अनुपसर्गत्वात्[3] । भाषाया धाञ्कृञ् (३।२।१७१ वा०) इति किकिनौ—दधिः । धातोऽनुपसर्गे कः (३।२।३ )—गोधा । धातश्चोपसर्गे (३।१।१३६) कः—विधः, विधा । कर्कन्धूर्बदरी ( द्र० उ० १।९३ ) । वयसि धाञः, पुरसि च[4] (उ० ४।२२८, २३०) इत्यसिः—वयोधाः, पुरोधाः । विधाञो[5] वेध च (उ० ४।२२५)—वेधाः । सितनिगमि (उ० १।६९) इति तुन्—धातुः । दधातेर्यन्नुट् च (उ० ५।४८)—धान्यम् । सुसूधाञ्गृधिभ्यः क्रन् (उ० २।२४) धीरः । कृपृवृजिमन्दि ( उ० २।८१ ) इति क्युन्—निधनम् । धानको लूशिङ्घिधाम्भ्यः (तु० उ० २।८३)—धानकः । अन्दूदृन्भू ( तु० उ० १।९३ ) इति दिधिषूर्ज्येष्ठानूढा[6] । धापृवस्यज्यतिभ्यो नः (उ० ३।६)—धानाः । अघ्न्यादयो (द्र० उ० ४।११२) सन्ध्या । उपसर्गे घोः

1. 'धारणपोषणयोः' इतिः कश्चित्, स चार्वाचीनः पाठः । दशपादीवृत्तिः-पाठो दानार्थ एवानुकूलः । निरुक्तकारो (७।१५) ऽपि 'रत्नधातमं रमणीयानां धनानां दातृतमम्' इत्याह ।

2. द्र० 'सं० व्या० शास्त्र का इतिहास' भाग १ पृष्ठ ६९,७२ । तत्र पाठभेदा अपि निर्दिष्टाः । अत्र 'अवाप्योः' ग्रहणमुपलक्षणार्थम्, तेन धानेऽपि भवति । 'धिष्ठितं' 'धिष्ठितः' इत्यादीनि पदानि महाभारतादावसकृत् प्रयुज्यन्ते ।

3. श्रच्छब्दस्योपसंख्यानम् (१।४।५९ वा०) इति वार्तिकेन । शाकटायनस्तु 'श्रद् अच्छ अन्तर्' इत्येतान् त्रीनधिकानुपसर्गानाह । द्र० बृहद्देवता २।९५ ॥

4. प्रायेण सर्वासूणादिवृत्तिषु 'वयसि धाञः, पयसि च, पुरसि च' (४।२२८–२३०) इति पाठक्रमो दृश्यते । क्षीरस्वामिपाठे तु मध्यमं सूत्रं नासीदिति प्रतीयते । युक्तं चैतत्, उत्तरयोर्द्विःचकारपाठात् ।

5. 'वौ धाञो' पाठा० ।

6. अत्र त्रिशब्दन्ते स्मृतिकाराः । तदुक्तं क्षीरस्वामिना अमरटीकायाम् (२।६।२३)—"दिधिषूः द्वौ वारौ द्विरूढा संस्कृता । यदाहुः—अक्षता च क्षता चैव पुनर्भवति पुनर्भूः सा संस्कृता पुनः (याज्ञ० १।६७) । मनुस्त्वन्यथाह—ज्येष्ठायां यद्यनूढायां

किः (३।३।९२)—सन्धिः, विधिः । कर्मण्यधिकरणे च (३।३।९३)—ओपाधिः, वालधिः । भिदादौ (गण ३।३।१०४) श्रद्धा । यातो युच् (३।२।१२८) सुधानस्त्वयामाट । दिवादौ धीङ् आधारे (४।२६)—धीयते ॥१०॥

११. अनुदात्ताः ।

१२. णिजिर् शौचपोषणयोः । इतस्त्रयोऽनिट उभयपदिनश्च । निजां त्रयाणां गुणः श्लौ (७।४।७५)—नेनेक्ति । नाभ्यस्तस्याचि पिति सार्वधातुके (७।३।८७) गुणः—नेनिजानि । अनिजत्, अनैक्षीत् ॥११॥

१३. विजिर् पृथग्भावे । वेवेक्ति । वेविजानि । विचिर् इति सभ्याः—वेविचानि, विवेचनम्, विवेकः ॥१२॥

१४. विष्लृ व्याप्तौ । वेवेष्टि । अविषत् (द्र० ३।१।५५) । उदिदित्येके[1]—अविक्षत्, निष्ठा वेविष्टा (द्र० ७।२।५६) । परिवेषः । विषेर्णा सिकर्मणि कः[2] (तु० दश० उ० ९।२०)—विषम् । विषेः किन्नुश्च (द० उ० ३।३९) विष्णुः । घञ् (द्र० ३।३।१९) वेषो नेपथ्यम् ॥१३॥

१५. घृ क्षरणदीप्त्योः । क्षरणं स्रवणम् । बहुल छन्दसि (७।४।७८) इतीत्वम्—जिघर्ति[3] । मन्—घर्मः (द्र० उ० १।१४५) । अञ्जिघृसिभ्यः क्तः (उ० ३।८९)—घृतम् । घृणा । घृणिपृश्नि (उ० ४।५२) इति घृणिः । भ्वादौ (१।६६९) घरति, चुरादौ (१।१००) घारयति ॥१४॥

१६. हृ प्रसह्यहरणे[4] । बलात् मोषेऽर्थे । जिहर्ति । भ्वादौ हृञ् हरणे (१।६३७)—हरति ॥१५॥

१७. ऋ सृ गतौ । अर्तिपिपर्त्योश्च (७।४।७७) इतीत्वम्—इयर्ति । गुणोऽर्तिसंयोगाद्योः (७।४।२९)—अर्यते । सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—आरत् । इडत्त्यर्तिव्ययतीनाम् (७।२।६६)—आरिथ । रिगृदुपधस्य च (७।४।७४?) इतीट्—अरिरिषति । ऋदृशोऽङि गुणः (७।४।१६) इति गुण.—अरा-

---

कन्यायामुद्यतेऽनुजा । साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता॥(नोपलभ्यते मनुस्मृत्याम्)॥"

१. स्मृतमिदम्—प्र० कौ० (भाग २ पृ० २३२), पुरुषकारे (पृष्ठ ११२), धातुवृत्तौ (पृष्ठ २७६)। २ 'कन्' इत्यौणादिक. पाठ । लिपिदोषेनेदमौणादिक सूत्रमित्यविज्ञाय अष्टाध्याय्या. ३।२।१२५ सूत्र सख्यानिर्दिष्टा ।

३ 'स्मृतमस्य छा दसत्व धातुवृत्तौ (पृष्ठ२७९)। ४ 'प्रसह्यकरणे' पाठा० ।

येते, दीर्घोऽकितः (७।४।८३) इति किरत्वाद्[1] दीर्घो नास्ति । भ्वादौ (१।६६८) ऋच्छति । सिसर्ति[2] । सर्तिशास्त्यर्तिभ्यश्च (३।१।५६) इत्यङ्—असरत् । भ्वादौ (१।६६७) सरति । तत्रैव ग्रहणान्युक्तानि । चुरादौ सारयति[3] ॥१६, १७॥

१८. कि ज्ञाने । चिकेति, चिकितः, चिक्यति ॥१८॥

१९. भस भर्त्सनदीप्त्योः[4] । बभस्ति । बाहुलकाद् (द्र० ७।४।७८) इत्वं नास्ति । न बभस्ति—नभः[5] । भसितं भस्म, मनिन् (द्र० उ० ४।१४५) । हुयामाश्रुभसिभ्यस्त्रन् (उ० ४।१६८)—भस्त्रा । शॄदृभसोऽदिः (उ० १।१३०)—भसद् भगम् ॥१९॥

२०. कित ज्ञाने । चिकेत्ति, चेकितानि । कितवः, किं तवास्तीति वा[6] । उ—केतुः (द्र० उ० १।७४) केतनम् । भ्वादौ कित निवासादौ (१।६२०) केतति, चिकित्सति । चुरादौ (१०।२७६) केतयति ॥२०॥

२१. तुर त्वरणे । तुतोर्ति । तुरगः, तुरितः ॥२१॥

२२. धिष शब्दे । दिधेष्टि । धिषणा, धृषेर्धिष च (उ० २।८२) इति क्युर्वा । अन्दू (उ० १।९३) इति दिधिषूः । सानसिवर्णसि (उ० ४।१०७) इति धिष्ण्यम् ॥२२॥

२३. धन धान्ये । दधन्ति । कृषिचमितनिधनि (उ० १।८०) इत्यू-धनूः राशिः । अर्तिपृवपि (उ० २।११७) इत्युस्—धनुस् । धनिष् (द्र० ३।

---

१. 'घकित्वात्' इति मूलपाठः, स चाशुद्धः । २. 'ससर्ति' पा० ।

३. चुरादौ (२५५) क्षीरस्वामी 'शार दौर्बल्ये' पठित्वा 'शारयति' इत्युदाहरति, 'सार इति दुर्गः' इति पाठान्तरं चोपन्यस्यति ।

४. "भसधातोः 'भर्त्सने' इत्यर्थो नवीनः, भक्षणे' इति तु प्राचीनोऽर्थः" इति स्वामिदयानन्दः १।२८।७ ऋग्भाष्ये । सायणस्तु धातुवृत्तौ 'भर्त्सनदीप्त्योः' इति पठन्नपि ऋग्भाष्ये १।२८।७ 'भस भक्षणदीप्त्योः' इत्येव पपाठ । अत्र 'हरी इवान्धांसि बप्सता' इति मन्त्रव्याख्याने 'हरीवाभानि भुञ्जाने' इति यास्कवचनम् (६।३६) अप्यनुसन्धेयम् । दशपाद्युणादिवृत्तौ (८।८७) अपि 'भक्षणदीप्त्योः' इत्येव पठ्यते ।

५. तु० अमरकोष भानुजिटीका पृष्ठ २० । ६. द्र० निरुक्त ५।२२ ।

२।७५)[1] धन्वा । अच् (द्र० ३।१।१३४)—धनम । भ्वादौ (१।३०८ पाठा०) धनति ॥२३॥

२४. जन जनने । जजन्ति । ईङ्जनोर्ध्वे च (७।२।७८) इतीट् जनिषे, छान्दसत्वाद् द्वे न भवतः । दिवादौ जनी प्रादुर्भावे (४।४१) जायते ॥२४॥

२५. गा स्तुतौ च-च्छन्दसि ।। जनने च । भृञामित्, बहुलं छन्दसि (७।४।७६,७८) इति च—जिगाति, जिगीतः, जिगाति । भ्वादौ गाङ् गतौ (१।९८०)—गाते । कै गै शब्दे (१।६५२)—गायति । इणो गा लुङि (२।४।४५) अगात् । इङो, गाङ् लिटि (२।४।४९) अधिजगे ॥२५॥

२६. धृत् ॥

२७. अनुदात्ताः ॥

जिघर्त्यादयो द्वादश च्छान्दसाः ।[2]

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां श्लुविकरणा जुहोत्यादयः सम्पन्नाः[3]॥

१. अत्र लिबिशेन 'उ० ११५६ तुलनीयम्' इति सङ्केतितं तत्र क्वनिप्प्रत्ययस्य तत्र विधानात् । अत्र तु अन्येभ्योऽपि दृश्यन्ते (३।२।७५) इत्यनेन क्वनिप् भवतीति सूचितं स्वामिना । द्र० क्षीरतरङ्गिणी १।३०८ ॥

२ अत्र कश्चित् पाठो भ्रंशः प्रतीयते । पाश्चात्यविशे सूत्रे 'गा स्तुतौ च छन्दसि' इति पठित्वा 'जनने' इत्यर्थधिकारेण सम्बन्धित इति प्रतीयते । 'जिघर्त्यादयो द्वादश छान्दसाः' इति पाठस्तु 'छन्दसि' इत्यंशस्यैव व्याख्यारूप इति विज्ञायते । सायणोऽपीत्यमेवाह—इह छन्दसीति पठ्यते, तच्च पूर्वमुनीनां शेषः' (धातु० पृष्ठ २८०) । तथा सत्यनेन पाठेन भाव्यम्—२५. गा स्तुतौ च । [ धातु ] जनने च । भृञामित् ·············अधिजगे ॥२५॥ २६. छन्दसि । जिघर्त्यादयो द्वादश छान्दसाः ॥ २७. अनुदात्ताः ॥ २८. धृत् ॥ अद्यतोर··· ।

३. इति क्षीरतरङ्गिण्यां श्लुविकरणा जुहोत्यादयः परिसमाप्ताः ।

# ॥ अथ दिवादिगणः ॥

## [अथ सेटः परस्मैपदिनः]

१. दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु[1]। व्यवहारः क्रयविक्रयादिः। इतः पुष्पान्ता (४।१८) एकविंशतिः सेटः परस्मैपदिनश्च। दिवादिभ्यः श्यन् (३।१।६९)—दीव्यति। देविता। दिवः कर्म च (१।४।४३) अक्षान् दीव्यति, अक्षैर्दीव्यति वा। दिवस्तदर्थस्य (२।३।५८) इति षष्ठी—शतस्य दीव्यति। सनीवन्तर्ध (७।२।४९) इति वेट्—दुद्यूषति, छ्वोः शूडनुनासिके च (६।४।१९) इति। दिदेविषति। द्यूत्वा, देवित्वा न क्त्वा सेट् (१।२।१८) इति कित्त्वाभावः। अक्षद्यूः। पचादौ (गण ३।१।१३४) देवः, देवी[2]। दिवोऽविजिगीषायाम् (८।२।४९) निष्ठानत्वम्—आद्यून औदरिकः। विजिगीषायाम्—द्यूतम्। वृषादिभ्यश्चित् (उ० १।१०६) देवल[3]। शकादिभ्योऽटन् (उ० ४।८१)—देवट। दिवेर्ऋन् (उ० उ० २।९९)—देवा पत्युः कनिष्ठो[4] भ्राता। तथा वर्तिकमिभ्रसि (उ० ३।१३२) इति देवरः। कनिघृषि (उ० ४।५६) किः कीदिदिविभावः। दिवो [illegible] दीर्घश्चाभ्यासस्य (उ० ४।५५) इति क्विन्—दीदिविरन्नम्। दिवेर्डिव[5]—द्यौः ॥१॥

२. षिवु तन्तुसन्ताने। सीव्यति। सिषेव। परिनिविभ्यः

---

१. 'स्तुतिकान्तिगतिषु' इति क्वचित्।

२. पचादिगणे (३।१।१३४) देवट पाठात् टित्त्वात् ङीप् (४।१।१५) द्रष्टव्यः।

३ 'कथाजीवी' इत्यधिकं क्वचित्। अमरकोशे तु देवाजीवस्तु देवलः इति पठ्यते (२।१०।११)।

४ 'कनिष्ठः' क्वचित्। अत्रास्मत्सम्पादितायां दशपाद्युणादिवृत्तौ देवरपदव्याख्याने (८।६२) अस्माकीना टिप्पणी द्रष्टव्या (पृष्ठ २३० टि० २)।

५. दशपाद्युणादिवृत्तौ (१।७६) 'किकि दीवि' इति द्वे पदे व्याख्याते। अत्र तत्रत्या टिप्पणी द्रष्टव्या (पृष्ठ १८ टि० ४)।

६. हैमोणादि ९४९। अयं यत्र 'डिविः' प्रत्यय (भोज २।१।३०६, श्वेत० ५।८०' कातन्त्र ६।५३) 'डिव्' प्रत्यये 'हलन्त्यम्' (१।३।३) इति इत्त्वं कथमत्र भवतीति न व्यक्तीकृतम्।

(८।३।७०) इति षत्वम्—[परिषीव्यति] निषीव्यति, विषीव्यति। सिवादीनां वा (८।३।७१) इति पर्यसीव्यत। सुस्यूषति। सिसेविषति, स्तौतिण्योः (८।३।६१) इति नियमात् षत्वं नास्ति। स्यूत्वा सेवित्वा। स्यूतम्। स्तन्भुसिवुसहां चङ्युपसर्गात् (तु० ८।३।११६ वा०)—पर्यसीषिवत्। सिवः किद्[1] इति चट्—सूचः; सूची। षिविगुण्योष्टेरू च (उ० ४।१६३)—सूत्रम्। सिवुष्ठिवोर्ल्युटि वा दीर्घः[2]—सीवनम्, सेवनम्। प्रसेवको भस्त्रादिः[3] ॥२॥

३. ष्ठिवु गतिशोषणयोः। ष्ठीव्यति। ज्वरत्वर (६।४।२०) इत्यूठ्त्वम्—ष्ठ्यूत्वा ष्ठेवित्वा ॥३॥

४. ष्णसु निरसने। स्नस्यति। ञिदित्येके ष्णिसु स्नस्यति। ष्णुस अदर्शने इति प्रमितः[4] ॥

५. क्नसु ह्वरणदीप्त्योः। ह्वरणं कौटिल्यम्। क्नस्यति। चरिचलि (६।१।१२ वा०) इति चक्नसम् ॥५॥

६. व्युस विभागे। व्युस्यति ॥६॥

७. प्लुष दाहे। प्लुष्यति। प्लोषित्वा। भ्वादौ (१।७६३) प्लोषति[5]। क्र्यादौ (९।५६) प्लुष्णाति ॥७॥

---

१. अनुपलब्धमूलं सूत्रम्। अतः क्विबन्तात् च्छ्वोः शूठ् (६।४।१९) इत्यूठ्। प्रत्ययलोपादौ टेरूत्वं विधीयते।

२. द्रष्टव्योऽनुन्यासः—'ष्ठिवु, सिवुसिवो दीर्घश्च' वा० ६।१।७,१८; तु० सरस्वतीकण्ठा० २।४।१६४,१७७ ॥

३. प्रष्टव्या क्षीरस्वामिनोऽमरटीका २।९।३। 'सीवनम्' पाठा०। अत्र 'सीव्यन्ति वल्कलान्यनेनेति' इति धातुवृत्तिरीत्या (पृ० २८२)।

४. तद्दर्शयति धातुवृत्तौ (पृष्ठ २८३)। 'अदर्शने' पाठा०। विविरोध 'अदर्शने' इति स्वीकृत्य 'अदर्शने' पाठान्तरम् उपन्यस्तम्। तदेवान्यत्र, धातुवृत्तौ 'अदर्शने' इत्यर्थेन स्वामिनाम्ना निर्दिष्टम्।

५. अत्र धातुवृत्तौ 'भ्वादावपि पठ्यते, एतस्मादौपि निषिद्धिरिति स्वामी' इति पठ्यते। तदत्र नोपलभ्यते।

८. नृती गात्रविक्षेपे । गात्रविक्षेपो नाट्यम् । नृत्यति । सेऽसिचि कृतचृतछृदतृदनृतः (७।२।५७) इति वेट्—नर्त्स्यति नर्तिष्यति, निनृत्सति निनर्तिषति । नृत्तम्, यस्य विभाषा (७।२।१५) इत्यनिट्त्वे सिद्धे ईदित्त्वं यङ्लुगर्थम्[1]—नरीनृत्तः,क्षुब्धादित्वात् (द्र० ८।४।३९) णत्वाभावः । न पादम्याङ्यम (१।३।८९) इति मङ्—नर्तयते ॥८॥

९. त्रसी उद्वेगे[2] । उद्वेगो भयम् । वा भ्राशभ्लाश (३।१।७०) इति वा श्यन्—त्रसति,त्रस्यति । वा जॄभ्रमुत्रसाम् (६।४।१२४) लिटचेत्त्वाभ्यासलोपौ—त्रेसुः तत्रसुः । त्रसिगृधि (३।२।१४०) इति क्नुः—त्रस्नुः । घुरादौ त्रस धारणे (१०।१६४ पाठा०) त्रासयति[3] ॥९॥

१०. कुथ पूतीभावे । पूतीभावो दुर्गन्धिः, क्लेदः । कुथ्यति । कोथिता । कुथितम्, कोथितम्[4] । कोथः ॥१०॥

११. पुथ हिंसायाम् । पुथ्यति, पोथनम्[5] ॥११॥

१२. गुध परिवेष्टने । गुध्यति । गुधित्वा । गुधेरूमः (उ० ५।२)—गोधूमः । भिदादौ (गण० ३।३।१०४) गोधा । अर्पागुधि (दश० उ० १।२८) इति किल् मः—गुल्मः । तद्धे गाल्मः[6]—गुल्मः ॥१२॥

१३. क्षिप प्रेरणे । क्षिप्यति, क्षाविमानमपि क्षिप्य (महाभारत)

---

१. यद्यपि "श्तिपा शपानुबन्धेन" इति परिभाषया ईदित्करणमिदनिषेधो यङ्लुकि न प्रवर्तते, तथापि क्तले तु पत्नी 'यस्य विभाषा' (७।२।१५) इत्यनेनैवेणिनबेधे सिद्ध ईदित्वं व्यर्थं सद् यङ्लुक्यपि इण्निषेधं प्रवर्तयति । अत्र धातुवृत्तिर्द्रष्टव्या (पृष्ठ २८३) ।

२. 'उद्वेजने' 'उद्वेजनम्' पाठान्तरे ।

३. 'घुरादौ ''''त्रासयति' क्वचित् ।

४. कथमत्र किरादिकल्प इति न जानीमः । उदुपधात् (१।२।२१) इत्यनेन तु न संभवति, शब्दिकरणस्य तत्र विधानात् ।

५. इतोऽग्रे 'पोथयमान' इत्यधिकम् ।

६. गुल्मस्तु गुड् शब्दे (१।९७८) इत्यस्मात् इति (द्र० हैमो० १२४) । माष गुल्मस्य प्रातरं रूप गुल्म इति वाचयं वक्तुम्, मैवं न प्रमाणं मन्त्रः ।

इति लोट् । नेट्—क्षेप्ता । नव्योऽयम्[1] तुदादौ (६।५) क्षिपते, क्षिपति ।

१४. पुष्प विकासे । पुष्प्यति । पचादौ (द्र० ३।१।१३४) पुष्पम् । पुष्पितस्तारकादौ (द्र० ५।२।३६) ॥१४॥

१५. तिम तीम[2] ष्टिम ष्टीम आर्द्रीभावे । तिम्यति, तीम्यति, स्तिम्यति, स्तीम्यति । तिष्टेम तिष्टोम । इषितिमि (दश० उ० ८।२१ पाठः) इति किरच्—[1]तिमिरम् । इक् ( द्र० उ० ४।१२२ )—तिमिः । तेमनं व्यञ्जनम् । स्तिमितः ॥१५—१८॥

१९. व्रीड चोदने । चोदनं लज्जा[3] । व्रीड्यति । व्रीडितः, व्रीडा । बाहुलकाद्[4]—व्रीडाद् यमुदेवमतीक्ष्ये[5]ति ॥१९॥

२०. इष गतौ । अन्विष्यति । एषित्वा, न क्त्वा सेट् (१।२।१८) कित् । प्रेषितः । प्रेषः, प्रैष्यः—प्रादूहोढोढ्येषैष्येषु (६।१।८९ वा०) इति वृद्धिः । इषेरनिच्छार्थस्य (३।३ १०७ वा०) इति युच्—एषणा, अन्वेषणा । परेर्वा (३।३।१०७ वा०) पर्येषणा, परीष्टिः[6] । इषयशिभ्यां तकन् (उ० २। १४८)—इष्टका । मसुश्चेषे (द० उ० १।१५४)—इक्षुः । भ्वादौ एषृ गतौ (१।४०१)—अन्वेषते । तुदादौ इषु इच्छायाम् (६।५९)—इच्छति । क्र्यादौ इष आभीक्ष्ण्ये (९।५४)—इष्णाति[7] ॥२०॥

---

१. दैवादिकेषु 'क्षिप प्रेरणे' इति न प्राचीन. पाठ इत्यर्थ. । द्रष्टव्यात्र धातुवृत्तिः (पृ० २८४ ।

२. स्मृतमात्रेयेण, तं च सस्मार सायणः (धातु० पृ० २८५) ।

३. उद्धृत धातुवृत्तौ (पृष्ठ २८५) ।

४ अत्र लिङ्गिशल भ्रान्त्या चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।३२४) सूत्रस्य मत्त्या निर्दिष्टा । अत्र तु 'कृत्यल्युटो बहुलम्' ( ३।३।११३ ) सूत्रस्य बहुलग्रहणमभिप्रेतम् । तेन हि 'गुरोश्च हलः' ( ३।३।१०३ ) इत्यनेन स्त्रियां भावे प्राप्तमकारप्रत्ययं बाधित्वा घञपि भवति, इत्येषोऽत्र क्षीराभिप्रायः ।

५ अनुपलब्धमूलमिदम् ।

६. द्रष्टव्यम्–'भवति हि निष्पेऽभिव्याहारे योगपरीष्टिः । निरुक्त २।१४ ।

७. यथाह सायणः—'यत्र पुरादावपीति स्वामी' (धातु० पृ० २८५) । नात्र

१८. पुह शक्त्यर्थे । शक्त्यर्थस्तृप्तिः[1] । पुह्यति । पुपोह । ओदनस्य पुहितः । पह पुह समर्थौ[2] इति दुर्गः—विपह्यति ॥२१॥

१९. उदात्ता उदात्तेतः ।

२०. जॄष् झॄष् वयोहानौ । इतःप्रभृत्यारः सेटः । जीर्यति । जरा (द्र० ३।३।१०४) । वा जॄभ्रमुत्रसाम् (६।४।१२४) इत्येत्वाभ्यासलोपौ वा—जजरुः जेरुः । जॄस्तम्भु (द्र० ३।१।५८) इति वाङ्—अजरत् अजारीत् । वॄतो वा (७।२।३८) इतीटो दीर्घो वा—जरिता जरीता । इट् सनि वा (७।२।४१) जिजीर्षति जिजरिषति जिजरीषति । लिङ्सिचो-रात्मनेपदेषु (७।२।४२) वेट्—जीर्षीष्ट जरिषीष्ट, न लिङि (७।२।३९) दीर्घः । अजीर्ष्ट, अजरिष्ट, अजरीष्ट । जनीजॄष् (१।५५४) इति मित्—जरयति । अजर्यं संगतम्[2] (३।१।१०५) । कुक्षिं जीर्यति—कुञ्जरः, अच् (द्र० ३।१।१३४) । गत्यर्थाकर्मक (३।४।७२) इति क्तः—अनुजीर्णो वृषलीं चैत्रः । जीर्यतेरतृन् (३।२।१०४)—जरन्, जरती । दारजारौ कर्तरि णिलुक् च (३।३।२० वा०) घञ्—जारः । जॄव्रश्च्योः क्त्वि (७।२।५५) इतीट्—जरित्वा जरीत्वा । जर्जरः—यङ्लुगन्तादच् (द्र० ३।१।१३४) । जॄविशिभ्यां[3] झच् (उ० ३।१२६)—जरन्तो महिषः । क्र्यादौ जॄ वयोहानौ (९।२२)—जृणाति ।[4] झीर्यति । झर्झरः । झरः, निर्झरः । झर्झरीकः ॥२२, २३॥

२१. षूङ् प्राणिप्रसवे । सूयते स्त्री । स्वरतिसूतिसूयति (७।२।४४) इति वेट्—सोता सविता । इतो ओङ्गन्ता (३०) नवोदितः[5]—

तथा पाठ उपलभ्यते । भ्वादौ एषृ गतौ (४०९) इत्यत्र तु 'प्रुपादौ चक्षेपपठि' इति पठित्वापि स्वामी चुरादौ न पपाठ ।

१. यथा तुदथ्वत धातुवृत्तौ (पृष्ठ २८५) तथा 'पुह चक्यर्थे । चक्यर्थस्तृप्तिः' इत्येव पाठेन भाव्यम् । अयमेव च युक्तः, चक वृत्तावितिवचनात् (१।७४) ।

२. 'आर्यसंगतम्' पाठा० । ३. 'जॄविशिभ्य' पाठा० ।

४. स्मृत पुरस्तात् (पृष्ठ ४२) ।

५. 'स्वादय ओदितः' (४।३१) इति वक्ष्यमाणसूत्रेण । ओदित्वे 'ओदितश्च' (८।२।४५) इति निष्ठानत्वम् ।

सूनः, सूनवान् । प्रसूनं पुष्पम्, अत एवायम् अत्रापि पठ्यत इत्यन्ये[1] । अदादौ (२।२३) सूते, सूनः । तुदादौ षू प्रेरणे (६।११०)—सुवति ॥२४॥

२२. दूङ् परितापे । परितापः खेदः । दूयते । दविता । दूनः ॥२५॥

२३. उदात्ताः ।

२४. दीङ् क्षये । इतो डीङ्पर्यन्तास् (४।३८) त्रयोदश[2] ञितः । दीयते । दीनः । दीङो युडचि क्ङिति (६।४।६३)—उपदिदीये, उपदिदीयाते । मीनातिमिनोतिदीङां ल्यपि च (६।१।५०) इत्यात्वम्—उपदाता, उपदाय । उपदेश एवात्वात् (द्र० ६।१।५० भाष्य) श्याद्व्यध (३।१।१४१) इति णः—उपदायः । स्थाघ्वोरिच्च (१।२।१७) इत्यत्र दीङः प्रतिषेधः (१।२।२० वा०) उपादास्त स्वरः शिक्षकस्य । उपदेदीयते, उपदिदीषते, उपदिदासत इत्यपीष्यते[3] ॥२६॥

२५. डीङ् गतौ[4] । डीयते । डीनः । भ्वादौ (१।६९३) डयते । डयितः । डयतेरनेह श्यनर्थं चोदितार्थं पाठ इत्येके—डीनः । स्वामभूतिस्तु—श्वीदितो निष्ठायाम् (७।२।१४) इति डीङः सेट्त्वं विशेषेणाह ॥२७॥

२६. धीङ् आधारे । शेषो भुवं धीयते । धीनः ॥२८॥

२७. मीङ् हिंसायाम् । मीयते । मीनः, मीनवान्[5] । माता । सनि मीमा (७।४।५४) इतीस्—मित्सते[5] । क्र्यादौ मीञ् (९।४)—मीनाति ॥२९॥

२८. रीङ् स्रवणे । रीयते । रीणः । अर्तिह्री (७।३।३६) इति पुक्—रेपयति । विजन्तान्मतुप्[6]—रेवती । सुरीभ्यां तुट् च (उ०४।२०२)

---

१. पुरुषकारे (पृष्ठ ३३) तु यथा पाठ उद्धृतस्तथात्र 'प्राहुः' पाठः । अयमत्रापि क्वचिद्धस्तलेखे पठ्यते । २. 'चतुर्दश' मुक्तः पाठः ।

३. उद्धृत धातुवृत्तौ (पृष्ठ २८७) ।

४. स्मृत पुरुषकारे (पृष्ठ ३०) ।

५. स्मृत धातुवृत्तौ (पृष्ठ २८८) ।

६. अत्र लिखितेन 'रयेर्मतौ बहुलम्' इति वार्तिकस्य संख्या (६।१।३७,६)

इत्यसुन्—रेतः। अजिवृरीभ्यो निच्च (उ० ३।३८) इति णुः—रेणुः। क्र्यादौ। री गतिरेषणयोः (६।३०)—रिणाति ॥३०॥

२९. लीङ् श्लेषणे। लीयते। विलिल्ये। लीनः। विभाषा लीयतेः (६।१।५१) इत्यात्वं वा—विलाता वेलेता, विलास्यते विलेष्यते। निमिमीलियां खलचोः प्रतिषेधः (६।१,५० वा०)—दुर्लयः, निलयः प्रलयः, विलयः। लियः सम्माननशालिनीकरणयोश्च (१।३।७०) इति लङ् जटाभिरालापयते। लियः प्रलम्भनशालिनीकरणयोः णौ नित्यमात्त्वमिष्टम्[1]। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने[2] (तु० ७।३।३९)—घृतं विलीनयति। प्रश्लेषनिर्देशाद् ईकारान्तादेव नुगिष्टः[3], नेह—विलापयति विलाययति। श्याद्व्यध (३।१।१४१) इति णः—विलायः। क्र्यादौ (९।३१) लिनाति, लेष्यति। चुरादौ ली द्रवीकरणे (१०।२०६) आधृषीयः—विलापयति, विलयति, उल्लापयते ॥३१॥

३०. व्रीङ् वृणोत्यर्थे। वृणोत्यर्थो वरणम्। व्रीयते। व्रीणः। क्र्यादौ व्री वरणे (९।३४)—व्रीणाति ॥३२॥

३१. स्वादय ओदितः।

३२. पीङ् पाने। पयांसि यथा विषाक्तो नहि स्थागतमपु पीयते[4]। पेता। माङ् मान इति दुर्गः[5]—मायते। ह्वादौ (३।६) मिमीते ॥३३॥

३३. ईङ् गतौ। सर्वैः स्वार्थं प्रतीयते[6] ॥३४॥

३४. प्रीङ् प्रीतौ। प्रीयते। इगुपधज्ञा (३।१।१३५) इति कः—प्रियः। क्र्यादौ प्रीञ् तर्पणे कान्तौ च (९।२)—प्रीणीते, प्रीणाति। प्रीञ् तर्पणे (१०।२२५) आधृषीयः—प्रीणयति, प्रयति, प्रयति ॥३५॥

---

निर्दिष्टा, सा चिन्त्या। वार्तिके 'रयि'शब्दात् 'रेवान्' पदसिद्धिः प्रदर्शिता। इह तु विजन्ताद् 'रे' शब्दान्मतुपि। तेन नात्र तद्वार्तिकस्यावश्यकता।

१. द्रष्टव्या काशिका १।३।७०॥ २. 'विपातने' पाठा०।

३. नासा विना स्पष्टं धातुवृत्तौ (पृष्ठ २८८)।

४. अनुपलब्धमूलम्।

५. उद्धृतं पुरुषकारे (पृष्ठ २०) धातुवृत्तौ (पृष्ठ २८८) च।

६. अनुपलब्धमूलम्।

३५. शो तनूकरणे। श्यति, ओतः श्यनि (७।३।७१) लोपः। विभाषा घ्राधेट्शाच्छासः (२।४।७८) इति सिचो वा लुक्—अशात् अशासीत्। शाछोरन्यतरस्याम् (७।४।४१) इतीत्—निशितम् निशातम्, संशितव्रत इति नित्यमिष्यते (द्र० ७।४।४१ भाष्य), शितिः शातिः। शाछासाह्वा (७।३।३७) इति णौ युक्—निशाययति। आतश्चोपसर्गे (३।३।१०६)—निशा[1]। शः कित् सन्वच्च (उ० १।२०) इति कुः—शिशुः। शाशपिभ्यां ददनौ (उ० ४।९७)—शाद्दः पङ्कः ॥३६॥

३६. छो छेदने। अवच्छ्यति। अच्छात् अच्छासीत्। अवच्छाययति। छितः, छातः। माछाससि (उ० ४।१०९) इति यः—छाया। कविघृषि (उ० ४।५६) इति छविः। छापूखडिभ्यो गन् (द० उ० १।६६) गक्—छागः। कम्बलादौ[2] छगलः[3] ॥३७॥

३७. षो अन्तकर्मणि। अन्तकर्म विनाशः। स्यति, अवस्यति प्रणिष्यति (द्र० ८।४।१७)। उपसर्गात् (८।३।६५) षः। षाद् सितादव्यवायेऽपि (८।३।६३)—अभ्यष्यात्। विभाषा घ्रा (२।४।७८) इति वा सिज्लुक्—अवासात्, अवासीत्। घुमास्था (६।४।६६) इतीत्वम्—अवसीयते। शाछा (७।३।३७) इति युक्—अवसाययति। णः (द्र० ३।१।१४१)—अवसायः। द्यतिस्यति (७।४।४०) इतीत्वम्—अवसितः। ऊतियूतिजूतिसाति (३।३।९७) इति सातिः। सातिभ्याम् (उ० ४।१५१) इति मनिन्—साम। [सात्म।] सात्मनो भावः सात्म्यम्[4] ॥३८॥

३८. दो अवखण्डने। द्यति। गातिस्था (२।४।७७) इति सिज्लुक्—अदात्। अवदातुम्। द्यतिस्यति (७।४।४०) इतीत्वम्—निर्दि-

---

१. माधुरिमते हलन्तान्निश्शब्दात् टाप्—तद्धर्ते—यथा चैव हलन्तानां यथा वाचा निशा दिशा। (द्र० 'सं० व्या० शास्त्र का इतिहास' पृष्ठ ६१)।

२. उणादौ 'छो गुग्घ्रस्वश्च' (१।११७) इत्युज्ज्वलदत्तादयः पठन्ति।

३. 'छागलः' पाठा०।

४. यत्र हि लिखितेन टिप्पण्यां हैमोणादेः ८१६ निर्देशः कृतः। स चिन्त्यः। हैमोणादौ तत्र सात्मपदं निरूप्यते, न सात्म्यम्। इदं तु भाष्यादेशादिमयतात् (५।१।१२४) ष्यञ् द्रष्टव्यः।

तप् । अवत्तम्—अच उपसर्गात् तः (७।४।४७) । घुग्रहणानि समानानि[1] ॥

३९. अनुदात्ताः ।

४०. जनी प्रादुर्भावे । प्रादुर्भाव उत्पत्तिः । इतो पाश्चन्ताः (५२) चतुर्दश मेट आत्मनेपदिनश्च । ज्ञाजनोर्जा (७।३।७९) जायते । ये विभाषा (६।४।४३)—जायते जन्यते, आजायते आजन्यते । जनिता । जनः । अभिजायतेऽनेनेत्यभिजनः[2] । ईडजनोर्ध्वे च (७।२।७८) इतीट्—जनिषे, जनिध्वे । गमहनजन (६।४।९८) इत्युपधालोपः—जज्ञे । दीपजनबुध (३।१।६१) इति कर्तरि च्लिण वा—अजनि अजनिष्ट । जनिवध्योश्च (७।३।३५) इति वृद्धिर्नास्ति । जनसनखनां सञ्झलोः (तु० ६।४।४२) लोपः[3]—जातः । जनीजॄष् (१।५५४) इति मित्—जनयति । अघ्न्यादयश्च (३।४।६८) इति कर्तरि—चैत्रो जन्यः । मनिन् (दश० उ० ६।७२) जन्म । जनेरुसिः (उ० २।११५)—जनुस् । जनेरठरः[4] जठरम् । जनेः को जहूप च (द० उ० १।७०)—जङ्घा । जनिघसिभ्यामिण् (उ० ४।१३०), जनिवध्योश्च (७।३।३५) इति वृद्धिनिषेधः—जनिः । कृसनि (उ० १।३) इति ञुण्—जानुः । कमिमनिजनि (उ० १।७३) इति तुन्—जन्तुः । यजमनि (उ० ३।२०) इति युच्—जन्युः । जनेर्यक् (उ० ४।१११)—जाया । जनेस्तोरश्च (द० उ० ६।२५) जर्तः[5] । स्तनिहृषि-

---

१. इतोऽग्रे लिपिशेन घुसंज्ञाविधायकसूत्रसंख्या (१।१।२०) निर्दिष्टा । सा चिन्त्या । ग्रहणशब्देऽधिकरणे ल्युट्, तेन येषु सूत्रेषु घुनिर्देशस्तानि घुग्रहणान्युच्यन्ते । तुलनीयम्—दाधाभ्रहणेष्विणग्रहणेषु च सन्देहो भवति' (लघु सूत्रभाष्ये) इति । २. नास्ति क्वचित् ।

३. नहीदं सूत्रं लोपं शास्ति, किन्तर्हि ? आत्वम् । तेन 'आत्वम्' इति युक्तः पाठः इष्यते । लिपिशेन नैषाऽशुद्धिर्बुद्धा ।

४. दशपाद्या 'जनेररः ठः' (८।१८) इत्येवं पठ्यते । यथा स्वत्र पाठः तथा जनेः 'अठर' प्रत्यये न रूपसिद्धिर्भवति । तेन कदाचिदत्र दशपादीपाठवत् पाठः स्यात् । लेखकप्रमादेन रठयोर्विपर्यासः संजातः स्यात् ।

५. अत्र लिपिशेन हैमोणादिसूत्रनिर्देशः (२००) टिप्पण्यां कृतः ।

अत्रेदमपि बोध्यम्—जर्तशब्दः प्रायेण सर्वेष्वपरोणादिसूत्रेषु व्युत्पाद्यते । महाभारते सभापर्वणि (४३।२६ कुम्भघोण०) जर्ताः स्मर्यन्ते । चन्द्रवृत्तौ 'यजय-

पुषिगदिमदिघुषिगडिमण्डिजनिनन्दिभ्यो येरित्नुच्[1] (द० उ० १।१४० कपाठः) जनयित्नुः । जनेष्टो लोपश्च (द० उ० ५।१४)—जटा । जन्वादयश्च (उ० ४।१०२) इति जनुः । अन्दूदृम्भू (तु० उ० १।९३) इति जम्बूः । क्रमादिभ्यः संज्ञाया वुन् (उ० ५।३५)—जनकः, जायतेऽस्याम् (द्र० ३।३।११७) इति जननी । उपसर्गे च संज्ञायां (३।२।९९) डः—प्रजा । अनौ कर्मणि[2] (तु० ३।२।१००)—स्त्रीम् अनुजातः स्त्र्यनुजः । अन्येष्वपि (३।२।१०१)—पूर्वजः । गत्यर्थाकर्मक (३।४।७२) इति क्तः—पुमांसमनुजातः जनः,सकर्मकार्थम्[3] अलंकृञ् (३।२।१३६) इतीष्णुच्—प्रजनिष्णुः । जनसन (३।२।६७) इति विट्, विड्वनोरनुनासिकस्यात् (६।४।४१)—अब्जाः, गोजाः, ऋतजाः, अद्रिजाः[4] ॥४०॥

४१. दीपि दीप्तौ । दीप्यते । दीपिता । दीप्तः (द्र० ७।२।१४) । दीपजनबुध (३।१।६१) इति कर्तरि चिण् वा—अदीपि अदीपिष्ट । भ्राज-भास (७।४।३) इति वा ह्रस्वः—अदीदिपत् अदिदीपत् । सूददीपदीक्षश्च (३।२।१५३) इति युच् प्राप्तः (द्र० ३।२।१४९)—दीपिता । नमिकम्पिस्म्य (३।२।१६७) इति रः—दीप्रः । अच् (द्र० ३।१।१३४)—दीपः, प्रदीपः ॥४१॥

---

जतों हूणान्' (१।२।८१) इत्युदाहरणे चन्द्रेण स्वकालिकस्य कस्यचिज्जर्तराजस्य लोकप्रसिद्धविजयः स्मर्यते । हैमोणादिवृत्तौ (२००) अप्ययं राजा स्मर्यते । रमेशचन्द्रमजुमदारेण चन्द्रवृत्तेः पाठः 'अजयद् गुप्तो हूणान्' इत्येव विना प्रमाणं परिवर्त्य चन्द्रो गुप्तकाले बभूवेति मिथ्या कल्पना कृता (द्र० ए न्यू हि० आफ दि इं० पी० भाग ६, पृ० १३७) । चन्द्रकालनिर्णयार्थ द्रष्टव्योऽस्मदीयः 'सं० व्या० शास्त्र का इतिहास' नामा ग्रन्थः पृष्ठ २४४ ।

१. द० पृष्ठ ९३, टि० ५ । अत्रापि श्विबिंगेन हैमोणादिसंख्या (७६७) निर्दिष्टा ।

२. अत्र कश्चित् पाठ अंशः स्यात् । अन्यथा सप्तम्यन्तमात्रे उपपदत्वाभावः, तदभावे समासाभावः, तदभावे रूपासिद्धिः प्रसज्यते ।

३. गत्यर्थाकर्मकसूत्रे जनग्रहणम् यति शेषः । अत्र सकर्मकार्थविचारो धातुवृत्तौ सम्यक् प्रपञ्चितः, तत्र द्रष्टुमर्हः (पृष्ठ २६१) ।

४. सर्वं एतेन एकस्वालेन सूत्रे (अ० ४।१०१५) पदतो निर्दिष्टाः ।

४२. पूरी आप्यायने। आप्यायनं वृद्धिः। पूर्यते। पूरिता। पूर्णः (द्र० ७।२।२४)। पूर्ति (द्र० ७।२।९)। दीपजनबुध (३।१।६१) इति कर्तरि वा चिण्—अपूरि अपूरिष्ट। वा दान्तशान्त (७।२।२७) इति ण्यन्तात् पूर्णः पूरितः। चर्मोदरयोः पूरेः (३।४।३१) णमुल्—चर्मपूरं भुङ्क्ते, वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् (३।४।३२)—गोष्पदप्रं वृष्टो देवः, गोष्पदपूरं वृष्टो देवः। ऊर्ध्वे शुषिपूरोः (३।४।४४)—ऊर्ध्वपूरं पूर्णः॥४२॥

४३. तुरी गतित्वरणहिंसनयोः। गतेस्त्वरणे हिंसने च। तूर्यते। तूरिता। तूर्णः। तूर्णम्। तुर इति दुर्गः॥४३॥

४४. घूरी जूरी हिंसावयोहान्योः। घूर्यते। घूरिता। घूर्णः। जूर्यते। जूरिता। जूर्णः। गूरी च इति दुर्गः॥४४, ४५॥

४५. धूरी हिंसागत्योः। धूर्यते। धूः॥४६॥

४६. शूरी हिंसास्तम्भनयोः। शूर्यते। शूरः॥४७॥

४७. चूरी दाहे। चूर्यते। चूर्णः॥४८॥

४८. तप ऐश्वर्ये। तप्यते। अन्ये तु तप सन्तापे (१।७१२) इत्यस्यैव व्यत्ययेनैश्वर्ये संतापे च वर्तमानस्तपो वा[1] मन्यन्ते, वा[1] ग्रहणाद् ऐश्वर्येऽपि श्यन्निरित्येके—प्रतपति। नन्द्यादौ (गण० ३।१।१३४) तपन संज्ञायाम्। द्विषन्तपः, परन्तप (द्र० ३।२।३९)। पत इति प्रमितः[2]—पत्यते, पतति, अपतिष्ट, अपप्तत्॥४९॥

४९ वावृतु वरणे। वावृत्यते। ततो वावृत्यमाना सा रामशाला-न्यविक्षत इति भट्टिः (४।२८)। अन्ये ण्यावृतेव (१।५०४) वरणे दिवादित्वं वा मन्यन्ते। तेन वरणे श्नुनादि कार्यं न भवति—अवर्तिष्ट, वर्तिष्यते विवर्तिषते॥५०॥

---

१. येनेन ज्ञाप्यते—उत्तरसूत्रस्य बाधस्य केषाञ्चिन्मते पूर्वसूत्रे पठ्यते। अत्र माधवीया धातुवृत्तिरपि द्रष्टव्या (पृष्ठ २९२)।

२. उद्धृतमिदं धातुवृत्तौ (पृष्ठ २९३)। नैरुक्ताः 'पत्यते' इति ऐश्वर्यकर्मसु पठति (निघण्टु २।२२)।

५०. क्लिश उपतापे। क्लिश्यते। परार्थे क्लिश्यतः सतः[1] इति तु लक्ष्यम्। क्र्यादौ क्लिशू विबाधने (९।५१)—क्लिश्नाति। क्लिशः क्त्वानिष्ठयोः (७।२।५०) वेट्—क्लिष्ट्वा क्लिशित्वा। मृडमृद (१।२।७) इति कित्—क्लिष्टः, क्लिशितः। निन्दहिंसक्लिश (३।२।१४६) इति वुञ्—क्लेशकः। क्लिशेरी चोपधायाः कन्[2] लोपश्च लोनाम् च (दश० उ० ९।१ इपाठ) कीनाशः। क्लिशेर्लन्[2] लोपश्च सः (दश० उ० ९।२)—केशः किशोरादयश्च (द्र० उ० १।६५) इति किशोरः। भ्वादौ क्लेश व्यक्तायां वाचि (द्र० १।४००)—क्लेशते ॥५१॥

५१, काशृ दीप्तौ। काश्यते। काशः। अचकाशत् (द्र० ७।४।२)। इकः काशे (६।३।१२३) दीर्घः—प्रतीकाशः, संकाशः, नीकाशः, अवकाशः। उणादौ (द्र० २।२) काश्यम्। भ्वादौ (१।८) काशते॥५२॥

५२. वाशृ शब्दे। वाश्यते। वाशितम्। अववाशत् 'एता-वनदिताविन्येके—अवीवशत्, अवीवशत्। कथं वावश्यीति, वावशीति यङ्प्रत्ययान्तरत्वात्[3]। वाशा, वाशिका। नन्द्यादेर् (गण० ३।१।१३४) ण्यन्तात् वाशनः। मन्दिवाशि (१।३८) इत्युरच्—वाशुरो गर्दभः।[4] ॥५३॥

५३. उदात्ता अनुदात्तेतः।

५४. मृष तितिक्षायाम्। इतः पञ्च स्वरितेतः; द्वौ सेटौ, त्रयोऽनिटः। मृष्यते, मृष्यति, मर्षिता। परिमृषः (१।३।८२) परस्मैपदम्—परिमृष्यति। मृषस्तितिक्षायाम् (१।२।२०) सेण् निष्ठा न कित्—मर्षितः। भाषायां शासियुधि (३।३।१३० वा०) इति युच्—दुर्मर्षणः। नन्द्यादौ (गण० ३।१।१३४) मर्षणः। तृषिमृषिकृशेः काश्यपस्य (१।२।२५) इति वा कित्—मर्षित्वा, मृषित्वा। चुरादौ (१०।२३७) आधृषाद् वा–मर्षयति मर्षति। तुदादौ मृश आमर्शने (६।१२८) तालव्यान्तः ॥५४॥

५५. ईशुचिर् पूतिभावे। पूतिभावः क्लेदः। शुच्यते, शुच्यति। अशुचत्, अशोचीत्, अशुचिष्ट। शुक्तम्। भ्वादौ शुच

---

१. अनुपलब्धमूलम्। २. दशपाद्या 'कन्—रन्' इत्यसहितया निर्देशः।

३. द्र० क्षीरत० १।२२८ उपधाह्रस्वोऽत्र छान्दसः।

४. क्वचिदत्र 'भ्वादौ वाशते' इत्यधिकं क्वचित्। भ्वादौ नायं पठ्यते।

शोके (१।११४)—शोचति, शुची पूतिभावे (१।३४१)—शुच्यति ॥५५॥

५६. उदात्तौ स्वरितेतौ ।

५७. णह बन्धने । नह्यते, नह्यति । नद्धा, नहो धः (८।२।३४), नहिवृति (६।३।११६) इति क्वौ दीर्घः—उपानत् । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो[1]रिति—पिनह्यति, अपिनह्यति । ष्ट्रन् (द० ३।२।१८२) नद्ध्री चर्मरज्जुः । ञनहिम्याम् उषच् (द० उ० ६।१३ पाठः)—नहुषः । नहो भ च (द० उ० १।५४) इतीञ्—नाभिः । नेहर्दिवि भ च चिन्[2] (द० उ० १।७१ पाठः) नभस् । संनाहः ॥५६॥

५८. रञ्ज रागे । रज्यते, रज्यति । रङ्क्ता । भ्वादौ (१।७२६) रजति । तत्रैव ग्रहणाद्युक्तानि स्वरितेत्त्वार्थं विकरणार्थं चेह पाठः, गर्ये शपः (धा० सू० ४।५९) ॥५७॥

५९. शप आक्रोशे । शप्यते, शप्यति । शप्ता । शप्त्वा । भ्वादौ (१।७२७) शपति ॥५८॥

६०. अनुदात्ताः स्वरितेतः ॥

६१. पद गतौ । गतिरयं निश्चाने च । इतो लिङ्गात्मा (७०) यथा निरूआत्मनेपदिनश्च । नेगद (८।४।१७) इति प्रणिपद्यते । चिण् ते पदः (३।१।६०) कर्तरि—उदपादि भैक्षम् । प्रपत्ता । सनि मीमा (७।४।५४) इति पित्सते । नीग् वञ्चु (७।४।८४) इति पनीपद्यते । सुपद्यसत्य (३।२।१५०) इति पदनः । लषपतपद (३।२।१५४) इत्युकञ्—उपपादुकः । पदरुज (३।३।१६) इति कर्तरि घञ्—पादः । खन मनः पद च (द० ३।३।१२५ वा०) इति घः करणे—पद्म् । विशिपतिपदि (३।४।५६) इति णमुल्—गेहानुप्रपादमास्ते, गेहं गेहमनुप्रपादम् । संपदादिभ्यः (३।३।१०८ वा०) भावे क्विप्—संपत्, प्रतिपत् । मन्नाशो समज (३।३।९९) इति क्यप्—पद्या मार्गः । पतिस्तुप (उ० २।१४०) इति मन्—पद्मम् । रफ् (द० उ० २।१३)—पद्रो ग्रामः । पिन् कनिपयनैः (उ०

---

१. बहुल वैयाकरणम-पेतुलपनः । द० म० व्या० शा० इति० पृ० ६९ ।

२. अत्र 'चित्' पद व्यर्थम्, नभ पदस्यानुदात्तत्वदर्शनात् । द० दशपादीय दशपादुणादिवृत्तौ टिप्पणी (पृष्ठ ४०६, टि० ४) ।

१।८४)—पादू, पादुका । पद्ची चाहुलकाद् (द्र० ३।३।१) अटवीवत् (द्र० ४।१३३) । चुरादौ (१०।२८०) आगर्वीय उपपदने ।

अत्रैव खिद दैन्य इति दुर्गः—खिद्यते । खेत्ता । खिद्यत इति कर्मकर्तरीति तु वामन[1] । रुधादौ (७।१२) खिन्ते । तुदादौ खिद परि-तापे (६ १४०)—खिन्दति, खेदः, खिन्नः ॥५९॥

६२. विद सत्तायाम् । सत्ता भावः । विद्यते । वेत्ता । विन्नः । अदादौ विद ज्ञाने (२।५६)—वेत्ति, वेदिता । तुदादौ विद्लृ लाभे (६। १३५)—विन्दति । रुधादौ विद विचारणे (७।१३)—विन्ते, विनत्ति ।[2] चुरादौ विद चेतनादिषु[3] (१०।१२५)—वेदयते ॥६०॥

६३. बुध अवगमने । बुध्यते । बोद्धा । दीपजन (३।१।६१) इति वा चिण्—अबोधि विद्वान्, अबुद्ध । बुधयुध (१।३।८६) इति बोधयति । के (द्र० ३।१।१३५) बुधः । मतिबुद्धि (३।२।१८८) इति वर्तमाने क्त —राज्ञां बुद्धः । भ्वादौ बोधने (१।६१४) बोधति ॥६१॥

६४. युध संप्रहारे । संप्रहारो हननम् । युध्यते । योद्धा । योधयति । राजनि युधिकृञः (३।२।९५) । क्वनिप्—राजयुध्वा । सहे च (३।२।९६)—सहयुध्वा । घञर्थे कः (द्र० ३।३।५८ वा०)—आयुधम् । भाषायां शासियुधि (३।३।१३० वा०) इति युच्—सुयोधनः ॥६२॥

६५. अनो रुध कामे । अनुपूर्वो रुधिर इच्छार्थे दिवादिः । अनुरुध्यते । नेह—रुणद्धि । रोधयति ॥६३॥

६६. मन ज्ञाने । मन्यकर्मणि (२।३।१७) इति चतुर्थी—न त्वा तृणाय मन्ये । प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च (१।४।१०६) एहि मन्ये रथेन यास्यसि, न यास्यसि यातस्ते पिता[4] । मन्यते. (द्र० ३।२।८२ काशिका) णिनि—शोभन-

---

१. उद्धृत धातुवृत्तौ (पृष्ठ २०७) । दुर्गाचार्योऽपि 'कर्मकर्तरिपाठमेतो-उद्धृतवान् इति धातुवृत्तितः प्रतीयते । बालमनोरमायां काव्यालङ्कारे । 'खीदन इति कर्मकर्तरि, खिद्यन इति च' (५।२।२,६) पाठ उपलभ्यते ।

२. 'खिन्नः' पाठा० ।　　३. 'विनत्ति' कोशेषु पाठः ।

४. 'वेदनादिषु' पाठा० ।　　५. 'यातस्ते पिता' पाठा० ।

मानी । मनः पुंवद्भावश्च (द्र० ६।३।३६)—पट्वीं मन्यते, पटुमानी । आत्ममाने खश्च (३।२।८३)—शूरमानी, शूरंमन्यः । संज्ञायां समज (३।३।९९) इति क्यप्—मन्या कृकाटिका । मतिबुद्धि (३।२।१८८) इति वर्तमाने क्तः—राज्ञां मतः । मतिः । शृस्वृस्निहि (उ० १।१०) इति मनुः । कमिमनि (उ० १।७३) इति मन्तुः । यजमनि (उ० ३।२०) इति युच्—मन्युः । फलिपाटि (उ० १।१८) इति मधु । मनेर्दीर्घश्च (उ० ३।६४) इति सः—मांसम् । मनेरुच्च (उ० ४।१२३) मुनिः । असुन् (द० उ० ९।४९)—मनस् । धनिमनिभ्यां चिद् वा (द० उ० ८।११)—मठरो मृदः । गुधृवीप-चिवचि (द० उ० ८।८९) इति त्रन्—मन्त्रः । तनादौ मनु अवबोधने (८।९)—मनुते । चुरादौ मन स्तम्भे (१०।१५६)—मानयते, मानः ॥६४॥

६७. युज समाधौ । समाधिश्चित्तवृत्तिनिरोधः[1] । युज्यते । योक्ता । सृजियुज्योः (तु० ३।१।८७ वा०) कर्मवद्भावः श्यंश्च—युज्यते योगः स्वयमेव । युग्यं च पत्रे (३।१।१२१) साधु । गां युनक्तीति गोयुगः, कर्मण्यण्[2] (द्र० ३।२।१) न्यङ्क्वादिः (गण० ७।३।५३) । ऋत्विग्दधृक् (३।२।५९) इति क्विन्, युजेरसमासे (७।१।७१) नुमः, क्विन्प्रत्ययस्य कुः (८।२।६२)—युङ्, युञ्जौ । नेह—अश्वयुक् । ष्ट्रन् (द्र० ३।२।१८२)—योक्त्रम् । मक् (द्र० उ० १।१४६) युग्मम्, न्यङ्क्वादिः (गण० ७।३।५३) कः (द्र० ३।१।१३५) च—युगम् । योजनम्, योजना, योगः, यथास्वं ग्रहणानि । रुधादौ युजिर् योगे (७।७) युङ्क्ते, युनक्ति । चुरादौ युज पृची संयमने (१०।२०२) वा णिच्—योजयति, योजति ॥६५॥

६८. सृज विसर्गे । सृज्यते । सृजियुज्योः (तु० ३।१।८७ वा०) कर्मवद् भावः श्यंश्च—सृज्यते माला स्वयमेव । सृजिदृशोर्झल्यमकिति (६।१।५८)—स्रष्टा । पाणौ सृजेर्ण्यत् (३।१।१२४ वा०) पाणिसर्ग्या रज्जुः । समवपूर्वाच्च (३।१।१२४ वा०)—समवसर्ग्या । ऋत्विग्दधृक् (३।२।५९) इति स्रक् । सृजेरसुम् च (उ० १।१५) इति रज्जुः । तुदादौ (६।१२८) सृजति ॥६६॥

१. समाधिः खलु योगपर्यायः । द्र० योगः समाधिः ( योगभाष्य १।१ ) । योगः खलु चित्तवृत्तिनिरोधः (द्र० योग० १।२) ।

२. अपि गुणाभावो न्यङ्क्वादित्वादेव ।

६९. लिश अल्पीभावे । लिश्यते, लेष्टा, लेशः । तुदादौ (६।१२४) लिशति । ॥६७॥

७०. अनुदात्ता अनुदात्तेतः ।

७१. राधोऽकर्मकाद् वृद्धावेव । इतः स्निहान्ता (९२) एकविंशतिरनिटः परस्मैपदिनश्च । राध्नोतेः (५।१८) अकर्मकक्रियाद्वृद्ध्यर्थे श्यन्—राध्यति । सकर्मकाद् वृद्धरेन्यत्र च श्नुः—राध्नोत्योदनम्, पचतीत्यर्थः । चुरादौ[1] राधयति ॥६८॥

७२. व्यध ताडने । ग्रहिज्या (६।१।१६) इति सम्प्रसारणम्—विध्यति । लिट्यभ्यासस्य (६।१।१७)—विव्याध । व्यद्धा । श्याद्व्यध (३।१।१४१) इति णः—व्याधः । नहिवृति (६।३।११६) इति क्वौ दीर्घः—मर्माविद् । पृष्यधिभिदि (तु० उ० १।२३) इति कुः—विधुः । व्यधजपोरनुपसर्गे (३।३।६१)—व्यधः, आव्याधः । घञर्थे कः (द्र० ३।३।५८ वा०)—आविधम् ॥६९॥

७३. पुष पुष्टौ । सकर्मकमप्याहुः—धराह इव पुष्यति । पुषादिद्युतादि (३।१।५५) इति अङ्—अपुषत् । आगणन्तात् पुषादयः । पोष्टा । पुष्यसिद्धौ नक्षत्रे (३।१।११६) । भ्वादौ (१।४६२) पोषति । क्र्यादौ (९।५७) पुष्णाति । चुरादौ पुष धारणे (१०।१६९)—पोषयति ॥७०॥

७४. शुष शोषणे । शुष्यति, अशुषत् । शुषेः कः (तु० ८।२।५१)-शुष्कः । ऊर्ध्वे शुषिपूरोः (३।४।४४) णमुल्—ऊर्ध्वशोषं शुष्कः । अशिमिविशुषिभ्यः किद् (द० उ० ७।३०) इति मन्—शुष्मं बलम् । शुष्मेति लक्ष्यम्[2] । शुष्मा बर्हिः ॥७१॥

७५. तुष प्रीतौ । तुष्यति, अतुषत्, तोष्टा ॥७२॥

७६. दुष वैकृत्ये । वैकृत्यं रूपभङ्गः । दुष्यति, अदुषत्, दोष्टा । दोषो णौ (६।४।९०) इत्युपधाया ऊत्—दूषयति । वा चित्तविरागे (६।४।९१)—चित्तं दोषयति, चित्तं दूषयति । नन्द्यादौ (द्र० गण० ३।१।

१. क्षीरतरङ्गिण्यां चुरादौ नैव पठ्यते ।

२. लोके 'शुष्म' इति नान्तो नपुंसकलिङ्गः प्रयुज्यत इत्यर्थः ।

१३४) दूषणः । पतिदूषिभ्यामीकन् (उ० ४।१६)—दूषीका नेत्रमलम् ॥७३॥

७७. श्लिष आलिङ्गने । श्लिष्यति, अश्लिषत् । श्लिष आलिङ्गने (३।१।४६) श्लिषः प्राप्यादश्लेष च्लेः क्सः—आश्लिक्षत् कन्याम्, नेह समाश्लिषज्जतु च काष्ठं च । श्लेष्टा । श्याद्व्यध (३।१।१४१) इति णः—श्लेषः । गत्यर्थाकर्मक (३।४।७२) इति क्तः [कर्तरि]—आश्लिष्टः कन्यां चैत्रः । श्लिषेश्चोपधायाः (उ० ३।११)—श्लक्ष्णम् । मनिन् (द० उ० ६।७२)—श्लेष्मा । भ्वादौ (१।४६३) दाहार्थः—श्लेषति । चुरादौ श्लिष श्लेषणे (१०।३१)—श्लेषयति ॥७४॥

७८. शक विभाषितो मर्षणे । शकनोर्मिः (क्षी० ५।१७) परस्मैपदं दयति विकल्प्यते[1], अट् वा, इट् वा, इति मनोरमः । शक्यते शक्यति, अशाकीत् अशकत्, शकिता शक्ता । अन्यत्र—शक्नोति, [अशकत्] शक्ता । सनि मीमा (७।४।५४) इति शिक्षति । शकिसहोश्च (३।१।९९) इति यत्—शक्यम् । वनिप् (द० उ० ४।११३)—शक्वा, शक्वरी । शकिशम्योर्नित् (उ० १।११२)—शकलः । रक् (द० उ० ७।१३)—शक्रः । शकेरुनोन्तोन्त्युनयः (उ० ३।४९)—शकुन, शकुन्त, शकुन्ति, शकुनिः । शकेरृतिन् (उ० ४।५८)—शकृत् । शकादिभ्योऽटन् (उ० ४।८१)—शकटः, शकटिः, शकटी, शक्ति, शक्ती । शकधृष (३।४।६५) इति शक्यते भोक्तुम् ॥७५॥

७९. ष्विदा गात्रप्रस्रवणे । गात्रप्रस्रवणं घर्मच्युतिः । स्विद्यति, सिष्वेद । अस्विदत् । असिष्विदत् । स्वेत्ता । स्विन्नः । स्विन्नमनेन, स्वेदितमनेन, प्रस्विन्नः प्रस्वेदितः (द० ७।२।१७) । भ्वादौ (१।४९२ पाठा०) स्वेदते ॥७६॥

८०. क्रुध कोपे । चैत्राय क्रुध्यति । क्रुधद्रुहेर्ष्या (१।४।३७) इति सम्प्रदानम् । अक्रुधत्, क्रोद्धा । क्रुधमण्डार्थेभ्यश्च (३।२।१५१) इति युच्—क्रोधनः ॥७७॥

८१. क्षुध बुभुक्षायाम् । क्षुध्यति, अक्षुधत्, क्षोद्धा । उकञ् (द० ३।२।१५४) इष्यते[2]—क्षोधुकः । वसतिक्षुधोरिट् (७।२।५२) क्त्वा-

---

१. इदमिदं पुस्तकद्वये (पृष्ठ ४७) धातुवृत्तौ (३०१) च ।

२. लोके प्रयोगदर्शनादिति शेषः ।

निष्ठयोः—क्षुधितः, क्षुधित्वा क्षोधित्वा, रलो व्युपधात् ( १ । २ । २६ ) इति वा कित्त्वम् ॥७८॥

८२. शुध शौचे । शौचं नैर्मल्यम् । शुध्यति । अशुधत् । शोद्धा ॥७९॥

८३. षिधु संराद्धौ । संराद्धिर्निष्पत्तिः । सिध्यति । असिधत्, सिषेध, सेद्धा । सिध्यतेरपारलौकिके (६।१।४७) णावात्त्वम्—कार्यं साधयति । नेह—सेधयति धर्मम् । सिद्ध्वा सिधित्वा सेधित्वा (द्र० ७।२।५६॥ १।२।२६) । पुष्यसिद्धौ नक्षत्रे (३।१।११६) । स्थादौ (८।३।६४) निषेधति ॥८०॥

८४. रध हिंसासंराद्ध्योः । संराद्धिः पाकः । रध्यति । रधादिभ्यश्च (७।२।४५) इतीड् वा—रधिता रद्धा । रधिजभोरचि (७।१।६१) इति नुम्—रन्धयति । नेट्यलिटि रधेः (७।१।६२) नुम्—रधिष्यति, लिटि—ररन्धिथ । अरधत्, अनिदिताम् (६।४।२४) इति न लोपः । अरत्स्यत् । अरधिष्यत् । रद्धः । रन्धनम् ॥८१॥

८५. णश अदर्शने । अदर्शनमनुपलब्धिः । प्रणश्यति । नशेः षान्तस्य (८।४।३६) इति णो नास्ति—प्रनष्टः, प्रनङ्क्ष्यति । मस्जिनशो-र्झलि (७।१।६०) इति नुम्—नंष्टा, नशिता (द्र०७।२।४५) । नशेर्वा (८।२।६३) कुत्वम्—नश्यतीति नक् नट् । जीवो नश्यति—जीवनशः माहुतिः, जीवनट् । युपयुप (३।१।८६) इति नाशयति, नन्द्यादौ (गण० ३।१।१३४) चित्तनाशनः । निन्दाहिंस (३।२।१४६) इति विनाशकः । इणनशजि (३।२।१६३) इति क्वरप्—नश्वरः । कर्त्रोर्जीवपुरुषयोः (३।४।४३) इति णमुल्—जीवनाशं नष्टः ॥८२॥

८६. तृप प्रीणने । प्रीतिः सौहित्यम् । तृप्यति । तर्पिता त्रप्ता तर्प्ता, अनुदात्तस्य चर्दुपधस्य (६।१।५८) इत्यमागमो वा । तृप्तः । स्पृशमृश-कृषतृपदृपां सिज्वा (३।१।४४ वा०)—अतृपत्, अत्राप्सीत् अतार्प्सीत् तुदादौ तृप तृम्फ (६।२६ पाठः)—तृपति, तृम्पति । तृफ् (द्र०उ०२।१३) —तृप्रम् । स्वादौ क्षुभ्नादित्वात् ( गण० ८।४।३९ ) पाठ उन्नेयः— तृप्नोति । अतर्पीत्, तर्पणम् ॥८३॥

८७. दृप हर्षमोहनयोः । मोहनं गर्वः । दृप्यति । द्रप्ता, दर्प्ता दर्पिता । दृप्तः । अदृपत्, अद्राप्सीत् अदार्प्सीत् ॥८४॥

८८. द्रुह जिघांसायाम् । क्रुधद्रुह (१।४।३७) इति प्राप्ये द्रुह्यति । वा द्रुहमुहष्णुहष्णिहाम् (८।२।३३) कुत्वम्—द्रोग्धा, द्रोढा, द्रोहिता । सत्सूद्विष (३।२।६१) इति क्विप्—मित्रध्रुक्, मित्रध्रुट् । अद्रुहत् ॥८५॥

८९. मुह वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति । मोग्धा, मोढा, मोहिता । मुग्धः, मूढः । अमुहत् । न पादमि (१।३।८९) इति तङ्—परिमोहयते । मुहेः खो मूर्ध (उ० ५।२२)—मूर्खः ॥८६॥

९०. ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोह । स्नोग्धा, स्नोढा, स्नोहिता । स्नुग्धः, स्नूढः । अस्नुहत् ॥८७॥

९१. ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । स्नेग्धा, स्नेढा स्नेहिता । स्निग्धः स्नीढः । अस्निहत् । अग्निगृद्धण् (३।२।५१) इत्युष्णिक् छन्दः । चुरादौ स्नेहयति[1] ॥८८॥

९२. वृत् । रधादिर्वृत्तः । एतदन्तः पुषादिरित्येके[2] । अनेनोऽत्र अशमीत्, अतमीत्, अदमीत्, अश्रमीत्, अभ्रमीत्, अक्षमीत्, अक्लोदीत्, अक्लेशीत्, अकोपीत्, अहर्षीद् इत्यपुषादङ् ॥

९३. अनुदात्ता उदात्तेतः ।

९४. शमु उपशमे । इतो शृष्यन्ताः (१३६) पदत्वाद्यादिवान्[3] सेटः परस्मैपदिनश्च । शमामष्टानां दीर्घः श्यनि (७।३।७४)—शाम्यति । अशमत् । शमोऽदर्शने (११४८८) मित्—शमयति रोगम् । दर्शने तु—निशामयति रूपम् । शमिता । शान्त्वा शमित्वा । शान्तः । पोरदुपधात् (३।१।९८)—शम्यम् । क्विप् (द्र० ३।२।७६)—प्रशान्, मो नो धातोः (८।२।६४), तस्य पूर्वत्रासिद्धत्वात् नलोपः प्रातिपदिकान्तस्य (८।२।७) नास्ति । शमित्यष्टाभ्यो घिनुण् (तु० ३।२।१४१)—शमी । घञ् (द्र० ३।३।

---

१. चुरादौ नायं पठ्यते । तत्र 'ष्णिह स्नेहने, स्मिट इत्येके' (१०।१३२) इत्येवं पठ्यते । २. धातुवृत्तौ (पृ० ३०४) अनूप निशामनमिदं मतम् ।

३. 'धनुरत्वाद्यादिवान्' पाठा० । विस्पष्टमिदम्, तत्रनानिर्गद् धातुना पाठात् ।

१८,१९)—शमः। गौरादौ (गण० ४।१।४१) शमी वृक्षः। शान्तिः। वा दान्तशान्त (७।२।२७) इति शान्तः, शमितः। शकिशम्योर्नित् (उ० १।११२) शमलम्। अनिदाम्शुप् (उ० ४।१०४ उज्ज्व०) इति शण्ढः। शमेः खः (उ० १।१०२)—शङ्खः। शमेर्डः (उ० १।९९)—शण्ढः ॥८९॥

९५. तमु काङ्क्षायाम्। ताम्यति। अतमत्। तन्त्वा तमित्वा। तान्तः। घञ् (द्र० ३।३।१८,१९)—तमः। गौरादौ (द्र० गण० ४।१।४१) तमी रात्रिः। अमितम्योर्दीर्घश्च (उ० २।१६)—ताम्रम्। असुन् (द० उ० ४।१८९)—तमस्। कमितमित्तम्भामत इच्च (द० उ० ४।१२०) इति तिमि-र्मत्स्यः। अत्यविचमि (उ० ३।११७) इत्यसच्- तमसा[३] नदी ॥९०॥

९६. दमु उपशमे। दाम्यति। अदमत्। दान्त्वा दमित्वा। न पादमि (१।३।८९) इति लट्—दमयते। नन्द्यादौ (गण० ३।१।१३४) कुन्दमनः, संज्ञायाम् (३।२।४६) अरिन्दमः। वा दान्तशान्त (७।२।२७) इति दान्तः, दमितः। व्यवस्थितविभाषया दान्तोऽब्रह्मचारिणि। दमेर्डोस् (द० उ० ४।४२)—दोर्बाहुः। हसिमृग्रिण्वा (उ० ३।८६) इति तन्—दन्तः। दमेरुनसिः (द० उ० ४।२३४)—दमुना वह्निः[४]। घिनिण् (द्र० ३।२।१४१ क्षीरपाठः)—दमी ॥९१॥

९७. श्रमु तपसि खेदे च। श्राम्यति। अश्रमत्। श्रान्त्वा श्रमित्वा। श्रान्तः। श्रम्यन्। नन्द्यादौ (द्र० गण० ३।१।१३४) श्रमणः। विश्रामः,[४] विश्रमोऽपीष्टः[५] ॥९२॥

---

१. क्वचिदुणादिवृत्तौ 'शण्ढ'पदमनेन व्युत्पाद्यते, तच्चिन्त्यम्। शमेर्डः (उ० १।९८) इत्यनेन तस्य सिद्धत्वात्। दशपाद्यां (१०।१४) अनिदाम्शुसूत्रे शङ्ख पदमपि व्युत्पाद्यते, तदपि चिन्त्यम्, तस्य शमेः खः (उ० १।१०२) इत्यनेन सिद्धत्वात्।

२. 'तमोऽन्धकारः' पाठा०।

३. 'तमसाख्या' पाठा०

४. 'अग्निः' पाठा०।

५. पाणिनीयास्तु 'यमाचमिकमिवमीनामिति वक्तव्यम्' (७।३।३४) इत्यत्र विश्रमेरप्रतिषेधात् 'विश्रम' इत्येव न्याय्य मन्यन्ते (द्र० काशिका ७।३।३४)। क्षीरस्वामी तत्र चान्द्रमतमाश्रित्य (द्र० चान्द्रवृत्ति ६।१।४२) पाणिनिसम्मतो विश्रम-शब्दोऽपीष्ट इत्याह।

९८. भ्रमु अनवस्थाने । अनवस्थानं देशान्तरगमनम् । वा भ्राश (३।१।७०) इति भ्राम्यति भ्रमति । अभ्रमत् । भ्रान्त्वा भ्रमित्वा । भ्रमेस्चहूः (उ० २।६८)—भ्रूः । भ्वादौ भ्रमु चलने (१।५८६)—भ्रमति भ्राम्यति ॥९३॥

९९. क्षमूष् सहने । क्षाम्यति । अक्षमत् । क्षन्ता क्षमिता (द्र० ७।२।४४) । क्षान्त्वा क्षमित्वा । भ्वादौ (१।२९९) क्षमते,अक्षमिष्ट । षिद्भिदादिभ्योऽङ् (द्र० ३।३।१०४) क्षमा । बाहुलकात्[1] क्षान्तिः । अत एव क्षमू सहन इति सभ्या[2] ॥९४॥

१०० क्लमु ग्लानौ । क्लाम्यति क्लामति वा भ्राश (३।१।७०) इति ष्ठिवुक्लम्वाचमां शिति (७।३।७५) इति दीर्घः । अक्लमत ॥९५॥

१०१. मदी हर्षे । माद्यति अमदत् । मदिता । मत्तः । हर्षग्लपनयोर्मित्त्व (द्र० १।५५२)—मदयति, अन्यत्र—उन्मादयति । मदोऽनुपसर्गे (३।३।६७) अप्—मदः । प्रमदसम्मदौ हर्षे (३।३।६८) । गदमद- (३।१।१००) इति यत्—मद्यम् । उपसर्गे (३।२।३७) इरम्मदो मेघज्योतिः । अलङ्कृञ् (३।२।१३६) इतीष्णुच्—उन्मदिष्णुः । इषिमदिमुदि (द० उ० ८।२६ क्वचित्पाठ) इति किरच्—मदिरा । कृधूमदिभ्यः क्सिः (उ० ३।७३)—मत्सरः । ऋतन्यञ्जि (उ० ४।२) इति मत्स्यः । मत्सी गौरादिः (द्र० गण० ४।१।४१) । जनिदाच्यु (उ० ४।१०४) इति मत्स्यः,मत्स्य इत्येके[3] । चुरादौ मद तृप्तियोगे (१०।१४७)—मादयते ॥९६॥

---

१. "कृत्यल्युटो बहुलम्" (३।३।११३) इति बहुलग्रहणेन क्तिन्नेऽपि क्तिन् भवतीति भावः । क्तिन्विशेषेण तत्र भान्त्या "बहुलमतेनिदर्शनम्" (१०।३२४) इति गणसूत्रस्य सभ्या निर्दिष्टा ।

२. धातुवृत्तौ (पृष्ठ २०६) स्थित स्वामिपाठ उद्भियते—'तथा च स्वामी—केचिदत्रापि क्षमूष् इति षितं पठन्ति, तदसत् । क्षमू सहन इति सभ्या इति' । अत्र त्वन्यथा पाठ उपलभ्यते ।

३. 'मत्स्य मत्स इत्येके' पाठा० । पञ्चपाद्युणादिवृत्तिषु 'मत्स्य' इत्येव व्युत्पद्यते । मत्स्यशब्दस्य पूर्वेण (उ० ४।२) व्युत्पादनादत्र 'मत्स' इत्येवशुद्धः पाठः । एकं नाम्ना चात्र दशपादीवृत्तिः स्मर्यते, तत्र (१०।१५) हि 'माद्यतीति मत्स्यः मत्सः पुरुषः' इति व्युत्पादने ।

१०२. वृत् । शमादिरन्तर्गणः ।

१०३. असु क्षेपणे । अस्यति । अस्यतेस्थुक् (७।४।१७)—निरास्थत् । अस्यतिवक्तिख्यातिभ्योऽङ् (३।१।५२) इति कर्मकर्तरि आत्मनेपदे ऽप्यङ्—उपास्थेतां कुण्डे स्वयमेव । उपसर्गादस्यत्यूह्योर्वा वचनम् (१।३।२९ वा०) तङ्—निरस्यते, निरस्यति । नेर्गद (८।४।१७) इति प्रण्यस्यते । अस्त्वा असित्वा । अस्तः । अस्यम्[1] । शॄस्वृस्निहि (उ० १।१०) इत्यु—असवः । असेरुरन् (उ० १।४२)—असुरः । सुञ्यसेर्ऋन् (उ० २।९७ उज्ज्वल) स्वसा । असिसञ्जिभ्यां क्थिन् (उ० ३।१५४)—अस्थि । अस्यतितृषोः क्रियान्तरे कालेषु (३।४।५७) इति णमुल्—द्व्यहात्यासम् गाः पाययति । इन् (द० उ० १।४६)—असि ॥९७॥

१०४. यसु यत्ने । यसोऽनुपसर्गात् संयसश्च (३।१।७१,७२) इति वा श्यन्—यस्यति यसति, संयस्यति संयसति । अयसत् । यस्त्वा, यसित्वा । आयस्त । न पादमि (१।३।८९) इति तङ्—आयासयते ॥९८॥

१०५. जसु मोक्षणे । जस्यति । अजसत् । जस्त्वा, जसित्वा । नमिकम्पि (३।२।१६७) इति र—अजस्रम् । चुरादौ जसु[2] हिंसायाम् (१०।११६)—उज्जासयति ॥९९॥

१०६. तसु उपक्षये । तस्यति । लोट सिपि—तस्य । अतसत् । तस्त्वा, तसित्वा । वितस्ति (द्र० उ० ४।१८०) वितस्ता[3] ॥१००॥

१०७. दसु च । दस्यति । अदसत् । दस्त्वा, दसित्वा । वा दान्तशान्त (७।२।२७) इति दस्त, दसित । रक् (द्र० उ० २।१३) दस्रौ[4] अश्विनौ । यजिमनिशुन्धि (उ० ३।२०) इति युच्—दस्यु ॥१०१॥

१०८ वसु स्तम्भे । वस्यति । अवसत् । वस्त्वा, वसित्वा । वस्नद्वाग वह्निर्मेद्रोऽर्घम् (द्र० उ० ४।१८०) ॥१०२॥

---

१ ऋहलोर्ण्यत् (३।१।१२४) इति ण्यति 'आस्यम्' साधु । बाहुलकाद्वा यत् ।

२ चुरादौ 'जसु' इति पठ्यते ।

३ मत्० कठा० २।३।१३४॥ हैमोणादि २०० ।

४ उभयोरश्विनोर्दस्रनासत्यौ नामनी स्त, परन्तु साहचर्याद् उभावपि दस्रौ नासत्यौ चोच्यते ।

१०९. प्युस[1] विभागे । प्युस्यति । अप्युसत् । प्युसितः । पुष इति दुर्गः, पुस इत्येके—पुस्तकम्, पुस्तं लेप्यादि कर्म ॥१०३॥

११०. प्लुष दाहे । प्लुष्यति । अप्लुषत् । भ्वादौ (१।४६३) प्लोषति, प्लुष्ट्वा,[2] प्लुषित्वा प्लोषित्वा[3] । क्र्यादौ (९।५६) प्लुष्णाति ॥१०४॥

१११. बिस प्रेरणे । बिस्यति । अबिसत् । के (द्र० ३।१।१३५) बिसम् ॥१०५॥

११२. कुस श्लेषणे । कुस्यति । अकुसत् । कुसितः । कुसुमम् (द्र० उ० ४।१०६) । कुश इति दुर्गः—कुशः, कुशी आयसी (द्र० ४।१।४२), कोशो भाण्डागारादि, कोशी ॥१०६॥

११३. बुस उत्सर्गे । उत्सर्गस्त्यागः । बुस्यति । अबुसत् । के (द्र० ३।१।१३५) बुसं तुषः ॥१०७॥

११४. मुस खण्डने । मुस्यति । अमुसत् । उणादौ मुस्तः,[4] मुसलम् (द्र० उ० १।१०६)[5] ॥१०८॥

११५. मसी परिणामे । परिणामो विकारः । मस्यति । अमसत् । मसित्वा । श्वीदितो निष्ठायाम् (७।२।१४) नेट्—मस्तः, मस्तकः । घञ् (द्र० ३।३।१८,१९)—मासः । मास् इति प्रकृत्यन्तरम्[6], पूर्णमासा युक्तः कालः (द्र० ४।२।३)—पौर्णमासी । सितनिगमिमसि (उ० १।६९) इति तुन्—मस्तु । समी च इति कश्चित् ॥१०९॥

११६. लुट विलोटने[7] । लुट्यति, अलुटत् । भ्वादौ (१।२१३)

---

१. तस्मात् धातुवृत्तौ (पृ० ३०८)

२. ७।२।५६ सूत्रेणेड् वा । ३. १।२।२६ सूत्रेण किद् वा ।

४. मुस्ता स्त्रीलिङ्ग इत्यमरः (२।४।१६०) मोथा नागरमोथा वा नाम्ना प्रसिद्ध द्रव्यम् । सरसे त्रिलिङ्गः इत्यमरटीकायां (२।४।१६०) स्वामी । मुस्ता-सर० कण्ठा० २।२।१२४ हैमोणादौ २०१ ॥

५. 'मुशित.' इत्यधिक क्वचित् ।

६ व्याकरणे सर्व एवादेशाः प्रकृत्यन्तराणि द्रष्टव्यानि ।

७. 'विलोडने' पाठा० ।

लोटति, अलोटीत् । चुरादौ भासार्थः (१०।१९७)—लोटयति ॥११०॥

११७. उच समवाये । समवाय ऐक्यम् । उच्यति । उवोच । औचित् । घोक उचः के (७।३।६४) । उचितम् । उचः कुश्च[1] इत्यसुन्—ओकस्, द्यौरोको येषां ते दिवौकस इति वृद्धिविषये दिवशब्दोऽदन्तो-ऽस्तीत्येके[2] स्थलजलयोरोकसि पररूपम् आहुः[1]—स्थलोकाः, स्थलौकाः, जलोकाः जलौकाः ॥१११॥

११८. भृशु भ्रन्शु अधःपतने । तालव्यान्तश्चत्वारः, आद्य ऋदुपधः । भृश्यति । अभृशत् । भृष्ट्वा, भर्शित्वा । न क्त्वा सेट् (१।२।१८) कित्—भृशम् । बरीभृश्यते । के (द्र० ३।१।१३५) भृशम् । भ्रश्यति । अभ्रशत् । भ्रष्ट्वा, भ्रंशित्वा । भ्रष्टः । बाभ्रश्यते । भ्वादौ (१।५०१) भ्रंशते, अभ्रंशिष्ट, भ्रंशित्वा, बनीभ्रश्यते[3] वाहाभ्रट् (द्र० ३।२।७६) ॥११२,११३॥

११९. वृश वरणे । वृश्यति । अवृशत् । के (द्र० ३।१।१३५) वृशो यवासः ॥११४॥

१२०. कृश तनूकरणे । कृश्यति । अकृशत् । के (द्र० ३।१।१३५) कृशः । अनुपसर्गात् फुल्लक्षीब (८।२।५५) इति क्ते कृशः, उपसर्गात् तु प्रकृशितः । रलो व्युपधाद् (१।२।२६) इति वा कित्—कृशित्वा कर्शित्वा । ऋतन्यञ्जि (उ० ४।२) इति कृशानुः ॥११५॥

१२१. ञितृष पिपासायाम् । तृष्यति । अतृषत् । तृषित्वा, तृषिमृषि (१।२।२५) इति तर्षित्वा । ञीतः क्तः (३।२।१८७)—तृषितः । तर्षः । घस्यतिशुषोः (३।४।५७) इति णमुल्—द्युम्नतर्षं गाः पाययति । त्रसिगृधिधृषिक्षिपेः क्नुः (३।२।१४०)—तृष्णक् । क्विबपि (द्र० ३।२।१७८) तृट् । तृषिशुषिरसिभ्यः कित् (उ० ३।१२)—तृष्णा ॥११६॥

१. अनुपलब्धमूलम् । तुलनीयम्—'उच्यतेः क च' हैमोणादिः ९६५। उज्ज्व-लदत्तादयस्तु उ० ४।२१५ सूत्रवृत्तौ बाहुलकाद् व्युत्पादयन्ति ।

२. क एत इति न ज्ञायते । न चान्यत्र मतमिदं दृश्यते (द्र० अमरक्षीरटीका २।१।७) ।

३. भ्रसत्यादिमादृत्यपीद् मौवादिकस्य भ्रंशेरेव नीक्सूत्रे (७।४।८४) अदर्शन, तेन दैवादिकस्य बाभ्रश्यत इत्येव भवतीति भावः (द्र० धातुवृत्तिः पृष्ठ३०९)

१२२. हृप तुष्टौ । हृप्यति । अहृपत् । हृपितः । भ्वादौ हृषु अलीके (१।४६८) हर्षति, अहर्षीत्, हृष्टः । हृषेर्लोमसु (७।२।२९) इति घेट्—संहृष्टानि लोमानि, संहृषितानि । विस्मितप्रतीघातयोश्च (७।२।२९ वा०)—हृष्टश्चैत्रः हृषितः, हृष्टा दन्ताः हृषिताः । नन्दी अस्याप्युदित्त्वमाह[1] ॥११७॥

१२३. रुप रोषे । रुष्यति । अरुषत् । तीषसहलुभरुषरिषः (पा० ७।२।४८) इति घेट्—रोष्टा रोषिता । रुष्यमत्वर (७।२।२८) इति रुष्टः रुषितः । भ्वादौ रुष हिंसायाम् (द० १।४५८)—रोषति ॥११८॥

१२४. डिप क्षेपे । डिप्यति । अडिपत् । तुदादौ (६।७६) डिपति । चुरादौ डिप क्षिप क्षेपे (१०।१२३)—डेपयति ॥११९॥

१२५. स्तूप समुच्छ्राये । स्तूप्यति । अस्तूपत् । तुष्टूपयिषति । चुरादौ (१।१२४) स्तूपयति । स्तूपः । स्तुप इति दुर्गः—स्तुप्यति ॥१२०॥

१२६. कुप क्रोधे कुप्यति । अकुपत् । पचादौ[2] कोपः । कुधमण्डार्थेभ्यश्च (३।२।१५१) इति युच्—कोपनः ॥१२१॥

१२७. गुप व्याकुलत्वे । गुप्यति । अगुपत् । राजसूयसूर्य (३।१।११५) इति कुप्यं सुवर्णरजताभ्यामन्यद् धनम्, गोप्यम् अन्यत् । भ्वादौ गुप गोपने (१।६६६)—जुगुप्सते, गुपू रक्षणे (१।२८०) गोपायति । चुरादौ भासार्थः (१०।१९७) गोपयति ॥१२२॥

१२८. युप रुप लुप विमोहने । युप्यति, अयुपत् । रलो व्युपधात् (१।२।२६) इति युपित्वा योपित्वा, युयुपिषति युयोपिषति । रुप्यति, अरुपत् । रोपः दारः । रूप्यम् । लुप्यति, अलुपत् । तुदादौ लुप्लृ छेदने (६।१३४)—लुम्पति ॥१२३-१२५॥

१२९. लुभ गार्द्ध्ये । गार्द्ध्यम् अभिकाङ्क्षा । लुभ्यति । अलुभत् । तीषु[3]सह (पा० ७।२।४८) इति लोब्धा लोभिता । लुभो विमोहने

१ उद्धृत धातुवृत्तौ (पृष्ठ ३०१) ।

२. पचादिगणे (३।१।१३४) कोपशब्दः साक्षात् पठ्यते ।

३ 'तीषसह' पाठा० । क्षीरतरङ्गिण्यां 'रुष रिष हिंसायाम्' (१।४५८)

(७।२।५४) इट्—विलुभिताः केशाः, लुब्धोऽन्यः ॥१२६॥

**१३०. क्षुभ संचलने ।** संचलनं रूपान्यथात्वम् । क्षुभ्यति । अक्षुभत् । क्षोभिता । क्षुब्धस्वान्त (७।२।१८) इति क्षुब्धो मन्थश्चेत्, क्षुभितोऽन्यः । क्षुभिताम्भोधिनिर्घोषा । क्र्यादौ (९।४९) क्षुभ्नाति । भ्वादौ (१।४९९) क्षोभते ॥१२७॥

**१३१. णभ तुभ हिंसायाम् ।** प्रणभ्यति । अनभत् । भ्वादौ (१।५००) नभते । क्र्यादौ (९।५०) नभ्नाति । अत्यविचमि (उ० ३।११७) इत्यसच्—नभसम् अदन्तम् । नभो नभि नभस्तेः (द्र० धा० सू० ३।१९)। नहेरु (३।१९) नभिः (तु० द० उ० १।५४)। तुभ्यति । अतुभत् ॥१२८,१२९॥

**१३२. क्लिदू आर्द्रभावे ।** क्लिद्यति । अक्लिदत् । क्लेत्ता, क्लेदिता, क्लिन्नः । चरिचलि (६।१।१२ वा०) इत्यादिना द्वे च—चिक्लिदः ॥१३०॥

**१३३. ञिमिदा स्नेहने ।** मिदेर्गुणः (७।३।८२) मेद्यति । अमिदत् । ञीतः क्तः (३।२।१८७) आदितश्च (७।२।१६) इति नेट्—मिन्नः । विभाषा भावादिकर्मणोः (७।२।१७)—प्रमेदितः प्रमिन्नः, मेदितमनेन, मिन्नम्—निष्ठा शीङ्स्विदि (१।२।१९) इति सेण् निष्ठा न कित् । अच् (द्र० ३।१।१३४) —मेदाख्यो देशः[1] । असुन् (द० उ० ९।४६)—मेदो वसा । मेदिनी । भ्वादौ (१।४९२) मेदते, अमेदिष्ट । चुरादौ मिद स्नेहने (तु० १०।८) मेदयति ॥१३१॥

**१३४. ञिक्ष्विदा स्नेहनमोहनयोः ।** क्ष्विद्यति । अक्ष्विदत् । क्ष्विण्णः । प्रक्ष्विण्णः प्रक्ष्वेदितः । क्ष्विण्णम् अनेन, क्ष्वेदितम् । (द्र० ७।२।१७।।१।२।१९) । भ्वादौ (१।७०५) अव्यक्ते शब्दे[2]–क्ष्वेदति ॥१३२॥

---

व्याख्याने 'तीषसह' इति पाठ उद्भियते (पृष्ठ ६५), अन्यत्र सर्वत्र (१।५९०।। ४।१२३।।६।५७) 'तीपुसह' इत्येव पठ्यते । तेन स्वामिमते 'तीपुसह' इत्येवपाठ इति निश्चितम् । अतः 'रुष रिष हिंसायाम्' (१।४५८) इत्यत्रापि 'तीपुसह' इत्येव शुद्धः पाठो द्रष्टव्यः ।

१. भ्वादिसूत्रव्याख्याने (४९२) 'मेदाख्यो म्लेच्छः' इत्युक्तं स्वामिना ।

२. क्षीरस्वामी भ्वादौ 'ञिक्ष्विदा स्नेहनमोहनयो' (४९३) इत्यपि पठति,

१.१३५. ऋधु वृद्धौ । ऋध्यति । आर्धत्, मा ऋधत् । आनृधुः । सनीवन्तर्ध (७।२।४९) इति वेट्—अर्दिधिषति ईर्त्सति, चाल्क्ष्यृधामीत् (७।४।५५)—अर्धयति, आर्दिधत् । ऋदुपधाच्च (३।१।११०) इति क्यप्—ऋध्यः । घञ् (द्र० ३।३।१८,१९)—अर्धः । ऋद्‍ध्वा अर्धित्वा, न क्त्वा सेट् (१।२।१८), ऋद्धः । स्वादौ । (५।२७) ऋध्नोति ॥१३३॥

१.१३६. गृधु अभिकाङ्क्षायाम् । गृध्यति । अगृधत् । जिघृत्सति । सिचि धातोर्वा (८।२।७४)—अजर्घाः अजर्घ्रत्, यङ्लुगन्ताल्लङ्, अजर्गर्धीत् लुङि । त्रसिगृधि (३।२।१४०) इति क्नुः—गृध्नुः । लुचङ्कम्य-दन्द्रमसगृधिज्वल (३।२।१५०) इति युच्—गर्धनः । सुसूधागृधिभ्यः क्रन् (द० उ० ८।४२)—गृध्रः । गृद्‍ध्वा गर्धित्वा । गर्धः । गृद्धः । चुरादौ[1] गृधिवञ्च्योः प्रलम्भने (१।३।६९) तङ्—गर्धयते ॥१३४॥

१.१३७. उदात्ता उदात्तेतः ।

१.१३८. वृत् । पुष्पाद्यो वर्तिताः ।

श्रीमद्भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ
क्षीरतरङ्गिण्यां दिवादिगणः
सम्पूर्णः ॥[2]

---

परन्तु 'ञिक्ष्विदा अव्यक्ते शब्दे' (१।७००) इति सूत्रव्याख्याने, इह च न तं निर्दिशति, तेन 'धातौ भ्वादौ ञिक्ष्विदा स्नेहनमोचनयोः' इति पठ्यापि न तदभिमन्यते । अत एवान्ये व्याख्यातारस्तत्स्थाने 'ञिष्विदा' इति पठन्ति ।

१. क्षीरतरङ्गिण्यां नाय चुरादौ कश्चिद् पठ्यते । अत्र शिर्षकेण हैमधातु-पारायणदर्शनाय ४।४४ संख्या निदर्शिता ।

२. इति क्षीरस्वाम्युत्प्रेक्षितायां धातुवृत्तौ क्षीरतरङ्गिण्यां दिवादयः समाप्ताः ॥

४ डुमिञ् प्रक्षेपणे । मिनोति, मिनुते । मीनातिमिनोति (६।१।५०) इत्यात्वम्—माता, मापयति, ल्यपि च[1] (६।१।५०) इति प्रमाय । सनि मीमा (७।४।५४) इति गमादाद्यहणेष्वविशेषात् (द्र० सीरदेव १०८, परि० शे० ११५) मित्सति, मित्सते । मित्रिमम् । कृवापाजि (उ० १।१) इत्युण् मायुः पित्तम् । अमृशीनृचरित्सरिननिमिमस्जिभ्य उः (दश० उ० १।९२) इत्युः—मयुः किन्नरः । बहुलवचनाद् (द्र० ३।३।१) आत्वं न । वात-प्रमीः (द्र० उ० ४।१) । नप्तृनेष्टृ (२।९२) इति जामाता । सुसिचिमीनाम् (द्र० उ० २।२५)—मीरः[2] ॥४॥

५. चिञ् चयने[3] । चिनोति, चिनुते । नेर्गद (८।४।१७) इति प्रणिचिनोति । विभाषा चेः (७।३।५८) इति सन्लिटोर्वा कुत्वम्—चिकीषति चिचीषति, चिकाय चिचाय । चिस्फुरोर्णौ (६।१।५४) आत्वम्—उच्चापयति । चुरादौ (१०।८१) मित्त्वात् चपयति[4] । क्रतौ कुण्डपाय्यसञ्चाय्यौ, अग्नौ परिचाय्योपचाय्यसमूह्याः, चित्याग्निचित्ये च (३।१।१३०-१३२) । क्तिन् (द्र० ३।३।९४) चितिः । अग्नौ चेः (३।२।९१) क्विप्—अग्निचित् । कर्मण्यग्न्याख्यायाम् (३।२।९२)—श्येन इव चीयते—श्येनचित् । हस्तादाने चेरस्तेये (३।३।४०) घञ्—पुष्पप्रचायः । निवासचितिशरीरोपसमाधानेष्वादेश्च कः (३।३।४१)—निकायः, आकायमग्निं चिन्वीत,[5] कायः, गोमयनिकायः । सङ्घे चानौत्तराधर्ये (३।३।४२)—वैयाकरणनिकायः[6] । चयोऽन्यत्र । ग्रहवृदृ (३।३।५८) इत्यप्—निश्चयः । शुसिचिमीनां दीर्घश्च (उ० २।२५)—चीरम् । अमिचिमिदि (उ० ४।१६४) इति क्त्रः—चित्रम् ॥५॥

---

१ इदं स्वतन्त्रं सूत्रं विहाय इतोऽग्रे लिखितेन ६।१।५१ सूत्रतया निर्दिष्टा । ६।१।५२ निर्दिष्टं 'ल्यपि च' इति सूत्रं तु वेनः ल्यपि सम्प्रसारणाभावं शास्ति । न च तस्यात्र किञ्चित् प्रयोजनम्, इत्यहो निविशस्याज्ञानम् । वस्तुतः 'मीनातिमीनोति' इति सूत्रशेषत्वेन भागो ल्यब्भावनिदर्शनार्थः पृथक् निर्दिष्टः ।

२. द्र० 'मीरा देशमीमा' इति दश० उ० वृत्तिः ८।४३ पाठः, हैमोणादि० वृत्तिः ४६२ च ।  ३. 'चये' पाठा० ।

४ 'चिञ् चये' (१०।८१) इति धातुवृत्तावपि द्रष्टव्या ।

५. अनुपलब्धमूलमिदम् ।  ६. यथार्थं पदम् ।

६. स्तृञ् आच्छादने[1] । स्तृणोति[2], स्तृणुते । गुणोऽर्तिसंयोगाद्योः (७।४।२९)—आस्तर्यते। विस्तृतः। क्र्यादौ स्तॄञ् (९।१३)—आस्तृणाति, आस्तीर्यते, आस्तीर्णः ॥६॥

७. कृञ् हिंसायाम् । कृणोति, कृणुते । आर्धधातुके करोतिवत् (८।१०)—चकार, चक्रे ॥७॥

८. अनुदात्ताः ।

९. वृञ् वरणे[3], १० धूञ्[4] कम्पने, ११ उदात्तौ । वृणोति, वृणुते । प्रावरिता प्रावरीता, वृतो वा (७।२।३८) इतीटो वा दीर्घः । सिचि परस्मैपदेषु (तु० ७।२।४०) इत्यपि—प्रावारीत्, प्रावारिष्टाम् । लिङ्सिचोरात्मनेपदेषु (७।२।४२) वा—प्रावरिषाताम् प्रावृषाताम्, वृषीष्ट वरिषीष्ट, न लिङि (७।२।३९) इति दीर्घो नास्ति । इट् सनि वा (७।२।४१)—वुवूर्षति विवरिषति विवरीषति । वरवपण्यवर्या (३।१।१०१) इत्यनिरोधे[5] वर्यः, वार्योऽन्यः । एतिस्तुशास (३।१।१०९) इति क्यप्—वृत्यम् । यद्वदीप्यते—वार्यम् । संज्ञायां भृतॄ (३।२।४६) इति पतिंवरा कन्या । ग्रहवृदृ (३।३।५८) इत्यप्—वरः । नौ वृ धान्ये (३।३।४८) घञ्—नीवारः । वृणोतेराच्छादने (३।३।५४)—प्रावारः । भयन्द इन्द्रगुः (उ० १।१२९)—वरण्ड । जृवृञ्भ्य ऊयन् (उ० २।५ श्वेत० A. B पाठ.)—वरूथो रथगुप्तिः सुपुरुवृनो-वृञ् (उ० २।७४)—वरणः । अजिवृरीभ्यो निच्च (उ० ३।३८)—वर्णुर्नाम नद्ः । कृगृशॄवृञ्चतिभ्यः ष्वरच् (दश० उ० ८।४७)—वर्वरः कुञ्चिताः केशाः । सृवृभृशुषिमुषिभ्यः कित् (दश० उ० ३।२६)—वृकः । वृञशिभ्यां (उ० ३।१०७)—वरत्रा चर्मरज्जुः । जनिदाच्युः (उ० ४।१०४) इति वृधो वाशिका । वसिवपियजिराजि (दश० उ० १।५३) इतीञ्—वारि । यस्मात् क्विपि वाः—वारां निधिः[6]। धूञ् कम्पने[7] । धूञ् इत्येतदमुं शिवस्वामी

---

१. 'छादने' पाठा० ।
२. 'आस्तृणोति' पाठा० ।
३. 'अनिरोधे' पाठा० ।
४. अत्रविषये अग्रे टिप्पणी ७ द्रष्टव्या ।
५. 'अनिरोधने' पाठा० ।
६. वृञत्योऽयं प्रयोग इति न ज्ञायते ।
७ 'अत्र क स्वामिसम्मतः पाठ इत्यत्र विप्रवदन्ते उद्धर्तारः । तथाह सायणः—'अत्र स्वामी तु ह्रस्वान्तमपु पठित्वा प्रयोगवशाद् दीर्घान्तमप्याह ।

दीर्घमाह—धूनोति, धूनुते । स्वरतिसूति (७।२।४४) इति वेट्—विधोता विधविता । विधूतः । धूञ्प्रीञोर्नुक् (७।३।३७ वा०)—विधूनयति । धुञ् इति चन्द्र[1] (चा० धातु० ५।९)—धुनोति, विधुतः । अर्तिलूधूसूखनसह-चर इत्रः (३।२।१८४) इति धवित्रम् । इषियुधि (उ० १।१४५) इति मक्—धूमः । धूमहिभ्यः किन् (उ० ३।७३)–धूसरः । क्र्यादौ (९।१६) धुनाति, तुदादौ धू विधूनने (६।१२६)—धुवति ॥९॥

१२. टुदु उपतापे । टवस्थस्त्वारोऽनित्कः । दुनोति । दोता । दवथुः (द्र० ३।३।८९) । भौवादिकेन ग्रहणात्, दु द्रु गतौ (१।६७५)—दवति ॥१०॥

१३. हि गतौ वृद्धौ च । हिनुमीना (८।४।१५) णत्वम्—प्रहिणोति । हेरचङि (७।३।५६) इति कुत्वम्—प्रजिघाय । कमिमनि (उ० १।७३) इति तुन्—हेतुः । मक् (द्र० उ० १।१४७)—हिमम् । मनिन् (दश० उ० ६।७२)—हेम । ऊतियूति (३।३।९७) इति हेतिरायुधम् ॥११॥

१४. पृ प्रीतौ । पृणोति । पपार । पुपूर्षति, वट् सनि वा (७।२। इति नास्त्युपदेशाधिकारात्[2] (द्र० ७।२।१०) ॥१२॥

---

शिवस्वामिकश्यपौ तु दीर्घान्तमाहतुः' (धातुवृत्ति पृष्ठ २१६) इति । प्रक्रिया-कौमुदीटीकायां विट्ठलस्त्वाह—'क्षीरस्वामी दीर्घमाह, अन्ये ह्रस्वम्' (पाठान्तरे 'शिव-स्वामिनाम निर्दिष्टम्) (भाग २, पृष्ठ २५४) । अत्र विट्ठलोद्धृतः पाठ एव युक्त-तरः वर्तमाने एकादशसूत्रे 'उदात्तौ' इति निर्देशात् । अन्यपाठे तु 'धुञ्' अनुदात्तः स्यात् । क्र्यादौ (९।१६) 'स्वादौ धूञ्धुञौ धूनोति धुनोति' इत्युभयं पठिष्यति क्षीरस्वामी, एवं तुदादावपि (६।१२६) । अत्र च चान्द्रपाठं स्वोद्दिष्टोक्तमिति द्रष्टव्यम् । सायणस्तु धुञ् इति पठन् आह 'स्वादय उभयतोभाषाः धुञन्ता अनुदात्ताः । तत्रानुदात्तमध्ये पाठ अकारान्तोभयतोभाषानुरोधेन' इत्याह (धातुवृत्ति पृष्ठ २१७) ।

१. मुद्रिते चान्द्रधातुपाठे तु 'धूञ् कम्पने' इति दीर्घान्तः पठ्यते । माध-वस्तु 'उभयमपीति चान्द्राः इति सुधाकरः' इत्याह (धा० वृ० पृष्ठ २१६) । अत्र चान्द्रधातुपाठो भ्रष्ट इति प्रतीयते । 'धूञ् कम्पने' इत्यत्र मुद्रितग्रन्थे 'त्रिभाषिताः' इति पठ्यते । तथापि 'त्रिभाषितः' इत्येकवचनमेव युक्तम्, धूञ एव त्रिभाषितत्वात् ।

२ उपदेशे दीर्घककारान्तादिति भावः । अत्र तु सनि दीर्घः ।

१५. स्मृ प्रीतिचलनयोः । चलनं जीवनम्[1] । स्मृणोति । सस्मार । स्पृ इत्येके । ते तु छान्दसप्रायौ[2] ॥१३॥

१६. अनुदात्ताः । नोदात्तेत[3] एकाच्त्वात् ।

१७. आप्लृ व्याप्तौ । चत्वारोऽनिटः । आप्नोति । आपत् (पु० ३।१।५५) । आप्ता । याप्यज्ञपृधामीत् (पु० ७।४।५५)—ईप्सति । उदके नुम्भौ च (उ० ४।२१०) इत्यकमः ल्यपि लघुपूर्वात्, विभाषाऽऽपः (६।४।५६, ५७) इति णेर्वा लोपः—प्राप्य प्रापय्य । गुरोश्च हलः (३।३।१०३) इत्यङि प्राप्ते क्तिन् घावादिभ्यः (३।३।९४ वा०) आप्तिः ॥१४॥

१८. शक्लृ शक्तौ । शक्नोति, शक्नुवन्ति । अन्यद् दिवादौ (४।७८) उक्तम् । सनिमीमा (७।४।५४) इति शिक्षति । अशकत् । पुषादित्वाद् (दिवादौ ७३—९२) अङि सिद्धे लृदित्वम् आत्मनेपदार्थं[4] कर्मव्यतिहारे[5]—व्यत्यशकत । शकधृषज्ञा (३।४।६५) इति तुमुन्—शक्तो घटं कर्तुम् । शकितः ॥१५॥

१९. राध साध संसिद्धौ । संसिद्धिः फलसम्पत्तिः । राधीक्ष्योर्यस्य विप्रश्नः (१।४।३९)—चैत्राय राध्नोति । राधो हिंसायाम् (६।४।१२३) एत्वाभ्यासलोपौ—अपरेधुः । राधो हिंसायाम् सनीस् वक्तव्यात् (७।४।५४ वा०) प्रतिरित्सति । क्तिन् घावादिभ्यः (३।३।९४ वा०)—

१. 'प्रीतिचलनयोरित्यन्ये । चलनं जीवनमिति स्वामी' इति धातुवृत्तौ (पृष्ठ ३१६) पाठः ।

२. 'ते तु छान्दसप्रायाः' 'तौ तु छान्दसप्रायौ' इति वा युक्तः पाठः । 'इमौ पृणोतिश्च त्रयश्छान्दसा' इति स्वामिकाश्यपौ' इति धातुवृत्तिः (पृष्ठ ३१६) ।

३. 'न तूदात्तेतः' पाठा० । अत्र पृ० ५, पं० ३,४ स्मृतः श्लोको द्रष्टव्यः ।

४ चिन्त्यमिदम् । इह हि लृदित्वाभावे मिच् स्यात् । नह्यस्मात् सौवादिकात् दैवादिकस्य पुषादित्वादङ् स्यात् ।

५. इतोऽग्रे लिबिशः ३।१।८७ सूत्र सङ्ख्या निर्दिश्य 'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रं द्रष्टव्यमिति सङ्केतितवान् । कर्मवत् सूत्र तु कर्मकर्तरि प्रवर्तते । इह तु कर्मव्यतिहारस्य विषयः । अतोऽत्रात्मनेपदप्रदर्शनाय 'कर्तरि कर्मव्यतिहारे' (१।३।१४) इत्यस्य सङ्ख्या निदर्शनीया ।

राद्धिः। दिवादौ राधोऽकर्मकाद् वृद्धावेव (४।०१)—राध्यति। साध्नोति। सिषात्सति। षोपदेश इत्येके—सिसात्सति। नन्द्यादौ (द्र० ३।१।१३४ वा०) ण्यन्तात् साधनः। कृवापाजि (उ० १।१) इत्युण्—साधुः। दिवादौ साध्यति[1] ॥१६, १७॥

२०. अनुदात्ता उदात्तेतः।

२१. अशू व्याप्तौ। अश्नुते। अष्टा, अशिता। अश्नोतेश्च (७।४।७२) इति नुट्—व्यानशे[2]। स्मिपूङ्रञ्ज्वशां सनि (तु० ७।२।७४) इतीट्—अशिशिषते। यटपत्यैशूर्णोतीना (३।१।२२ वा०) यङ्—अशाश्यते।[3] कृवापाजि (उ० १।१) इत्याशु। शंसरोताश्वो (उ० १।४४) उरन्—श्वशुरः। अशःप्रुषि (उ० १।१५२) इति क्वन्—अश्वः। अशे रश च (उ० २।७५) इति युच्—रशना। अशो रश् च (दश० उ० २।१५ उपाठ) इति मिः—रश्मि। अशिपणाय्यो रुडायलुकौ च (उ० ४।१३३)—राशि.। अर्तिसृधृधमि (उ० २।१०२) इत्यनिः—अशनि.। मनिन् (दश० उ० ६।७३) अश्मा। अशेर्देवने[4] (उ० ३।६५) सः—अक्षः। अशेः सरन् (उ० ३।७०) अक्षरम्। अशेर्नित् (उ० ३।१५६) इति सिः—अक्षि। अशेर्देवने युट् च (दश० उ० ९।५१ उपाठः) यशः। क्र्यादौ अश भोजनने (९।५२)—अश्नाति ॥१८॥

२२. ष्टिघ आस्कन्दने। स्तिघ्नुते ॥१९॥

२३. उदात्तावनुदात्तेतौ।

२४. तिक तिग च। इतःप्रभृत्यन्ता (५।३१) नव स्वेट परस्मैपदिनश्च। चकाराद् आस्कन्दने।[5] तिक्नोति, तिग्नोति। के (द्र० ३।१।१३५) तिकः ॥२०, २१॥

---

१. नहि क्षीरतरङ्गिण्यां माधवधातुर्दिवादौ पठ्यते। काशकृत्स्नधातुपाठे (पृष्ठ १८६) तु 'राध साध संसिद्धौ' इति दिवादौ पठ्यते। तदनुसारं चन्द्रकान्तनकारात्रपि दिवादौ पठनः (चा० ४।२२)।

२. 'आनशे' पाठा०। ३. धातुप्रदीपोऽत्र द्रष्टव्य.।

४. 'दने' 'घने' पाठान्तरे।

५. यथा तु काशकृत्स्नकातन्त्रचान्द्रहैमशाकटायनधातुपाठेषु पाठस्तथा तिक तिग धात्वोर्दिप्यार्थः, न तु स्कन्दनार्थः। अनोखने कस्यचित् प्राचीनश्लोकवद-

३०. अह व्याप्तौ । अह्नोति ॥२६॥

३१. दघ घातने । दघ्नोति ॥२७॥

३२. चमु भक्षणे । आचम्नोति । ष्ठिवुक्लमुचमां शिति (७।३।७५) आचामति ॥२८॥

३३. ऋक्षि चिरि जिरि दाश दृ हिंसायाम् । ऋक्ष्णोति[1] भानुवृत्तिः[1] । ऋणोति क्षिणोति इत्येके । चिरिणोति, जिरिणोति । एकाचश्च चिरेर्जिरेः (क० २।१ पृ० ५ पं० ३) इति नानुबन्धिता । दाश्नोति । दाशः । दृणोति । दुर्ग[2]स्तु रिक्ष त्रिघ[2] पघ[3] ऋक्ष चिरि चिरि जिरि दाश दृ हिंसायाम्[2]

'दघ घातने' (३१) इत्युत्तरसूत्रान्तरं मुद्रितं जर्मनसंस्करणे । स च लेखकप्रमादजः । अस्माभिस्तस्य यथास्थानं प्रापितः ।

१. 'ऋद्दणोति, भानवृत्तिः' इति लिखितपाठः । ऋक्षि-धातोरिदित्वान्नुमागमः । पुरुषकारस्तु स्वामिनाम्ना शुद्धमेव सनुम पाठमुदाजहार । तथा हि—"क्षीरस्वामी तु ऋक्षि इति पठित्वा ऋक्ष्णोति इति भानवृत्त इति चोदाहृत्य ऋणोति क्षिणोति इत्येके" इत्याह (पुरुष० पृष्ठ २४) ।

२. दुर्ग० नाम-कातन्त्रधातुपाठव्याख्याता । अस्मदीये कातन्त्रधातुपाठस्य हस्तलेखे 'त्रिघ' स्थाने 'तिग' पठ्यते । सायणोऽपि धातुवृत्तौ दुर्गनाम्ना 'तिग' इत्येव पठति । (पृष्ठ ३२२) । एव धातोरस्मत्सम्बद्धहस्तलेखे क्वचित् पाठस्त्रुटितः । सायणस्तु 'षघ रि क्षि चिरि' इत्येव पठति (पृष्ठ ३२२) । 'दाश' स्थाने कातन्त्रधातुपाठे 'दास' इति पठ्यते, 'दृ' स्थाने च 'दुह' । सायणस्तु 'दुह्' पठित्वा 'दुनुते' इत्युदाजहार (पृष्ठ ३२२) । 'हिंसायाम्' इत्यस्य स्थाने कातन्त्रपाठे 'जिघांसायाम्' पाठः । काशकृत्स्नधातुपाठे तु 'तिक तिग षिघ तिंडु [वीडु] चिरि जिरि दास द्रीह जिघांसायाम्' इति पठ्यते (पृष्ठ २०९) । अत्र 'द्रीह' स्थाने 'दुह' इति शुद्धः पाठो द्रष्टव्यः, व्याख्याता 'दुह्णोति' इति प्रयोगनिदर्शनात्, कातन्त्रे च तथैव पाठात् ।

इदं चात्रावधेयम्—पाणिनीये धातुपाठे छान्दसत्वेन स्मृता धातवः काशकृत्स्नधातुपाठे विना छन्दोनिर्देशं पठिताः । तमनुसृत्यैव च लौकिकमात्रविषये कातन्त्रेऽपि पठिताः । तदनुसारेणैव च चान्द्रेऽपि 'ऋक्ष चिरि जिरि हिंसायाम् (५।२२) पठ्यन्ते ।

३. 'षघष' पाठा० ।

मित्याह । छान्दसा अमी ञिघत्योदिवन्नियत विषया.[1] ॥२९—३३॥

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ
क्षीर-तरङ्गिण्यां
स्वादिगणः
सम्पूर्णः ।[2]



१ तदुक्तं पतञ्जलिना—पाणिनिना अविशेषेणोपदिष्टे । स पूर्वं इदानीं छन्दसि विषयः । महा० ७।१।६१ ।

२. इति क्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां स्वादिर्नवमः समाप्तः ।

# ॥अथ तुदादिगणः॥

**१. तुद व्यथने ।** इतः कृषान्ताः (६।६) षडनिट उभयपदिनश्च । तुदादिभ्यः शः (३।१।७७), सार्वधातुकमपित् (१।२।४) इति ङित्त्वम्—तुदति, तुदते । तोत्ता । प्रतोदः, तोदः । आच्छीनद्योर्नुम् (७।१।८०) वा—तुदती, तुदन्ती । विध्वरुषोस्तुदः (३।२।३५) खश्—विधुन्तुदः, अरुन्तुदः । वातशुनीतिल (३।२।२८ वा०) इति तिलन्तुदः । क्ते—तुन्नः (द्र० ८।२।४२) । दाम्नीशस (३।२।१८२) ष्ट्रन्—तोत्त्रम् । पातृतुदि (उ० २।७) इति थक्—तुथम् अञ्जनं, धातुविशेषश्च ॥१॥

**२. णुद प्रेरणे ।** प्रणुदति प्रणुदते[1] । नोत्ता । नुदविदोन्दत्रा (८।२।५६) इति वा निष्ठानत्वम्—नुत्तः, नुन्नः । ग्लानुदिभ्यां डौः (उ० २।६४)—नौः ॥२॥

**३. दिश अतिसर्जने ।** अतिसर्जनं त्यागः । दिशति, दिशते । क्तिन् (द्र० ३।३।९४)—दिष्टिर्विनाशितः । ऋत्विग्दधृक् (३।२।५९) इति क्विन्—दिक् । नाम्न्यादिशिग्रहोः (३।४।५८) णमुल्—नामादेशमामन्त्रयते । दिष्टं दैवम् ॥३॥

**४. भ्रस्ज पाके ।** ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—भृज्जति, भृज्जते । भ्रस्जो रोपधयोरमन्यतरस्याम् (६।४।४७)—भ्रष्टा, भर्ष्टा, प्रसारणविषये नेष्यते, भृष्टलुञ्चितादिगणात्[2]—भृज्ज्यात् । बभ्रज्ज बभर्ज, वृश्चतिपृच्छतिभृज्जतीनाम् अविशेषः[3] । सनीवन्तर्ध (७।२।४९) इति वेट्—बिभर्जिषति बिभ्रज्जिषति, बिभर्क्षति बिभ्रक्षति । व्रश्चभ्रस्ज (८।२।३६) इति षः—भृष्टः, भृष्टिः । प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च (उ० १।२८)

---

१. अत्र धातुवृत्तौ (पृष्ठ ३२३) स्वामिनाम्ना उद्धृतः पाठोऽनुसन्धेयः ।

२. काशिकायां (२।२।३१) राजदन्तादिगणे 'भृष्टलुञ्चितम्' पठ्यते वर्धमानस्तु 'भ्रष्टलुञ्चितम्' इति पठित्वा लक्षणमपि निर्दिदेश (गणरत्नमहो० पृष्ठ ६५) ।

३. अत्र 'ग्रहिवृश्चतिपृच्छतिभ्रज्जतीनामविशेषः' इति भाष्यवचनम् (६।१।१७) अनुसन्धेयम् । लिपिकेनेदमबुद्ध्वा 'वृश्चतिपृच्छतिभ्रज्जतीनाम्' इतोऽपि ६।१।१६ सूत्रसङ्ख्या निर्दिष्टा ।

भृगुः न्यङ्क्वादिः[1] । भ्रस्जिभृसृयुधुम्भ्यः किन् (द्र० उ० २।८०)—भृज्जनम् । ल्युटि (द्र० ३।३।११५) भ्रज्जनम्, भर्जनम् । भ्रस्जिगमि (उ० ४।१६०) इति ष्ट्रन्—भ्राष्ट्रम् ॥४॥

५. क्षिप प्रेरणे । क्षिपति, क्षिपते । अभिप्रत्यतिभ्यः क्षिपः (१।३।८०) परस्मैपदम्—अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति । सम्पृच (३।२।१४२) इति परिक्षेपी । निन्दहिंस (३।२।१४६) इति परिक्षेपकः । त्रसिगृधिधृषिक्षिपेः क्नुः (३।२।१४०)—क्षिप्नुः । भिदादौ (गण० ३।३।१०४) क्षिपा । स्फायितञ्चि रक् (द्र० उ० २।१३)—क्षिप्रम् । क्षिपेः किच्च (द्र० उ० २।१०७)—क्षिपणिः, क्षिपणी वा । दिवादौ (४।१२) क्षिप्यति ॥५॥

६. कृप विलेखने । कृषति, कृषते । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६।१।५९) अम्—क्रष्टा कर्ष्टा । स्पृशमृशकृषतृपदृपां च्लेः सिज् वा (३।१।४४ वा०)—अकृक्षत् अक्राक्षीत्, अकार्क्षीत् । भ्वादौ (१।७१७) कर्षति । तत्रैव ग्रहणान्युक्तानि । कृश तनूकरणे तु दिवादि (४।१२०) तालव्यान्तः ॥६॥

७. अनुदात्ताः स्वरितेतः

८. ऋषी गतौ, ९. उदात्त उदात्तेत् । ऋषति । उपसर्गादृति धातौ (६।१।९१) वृद्धिरेकादेशः—उपार्षति । अर्षिता । इगुपधात् कित् (उ० ४।१२०)—ऋषिः । इक्[2]—ऋषिः । क्तिन् (द्र० ३।३।९४)—ऋष्टिः । ऋषिवृषिभ्यां कित् (उ० ३।१२३)—ऋषभः । श्वीदितो निष्ठायाम् (७।२।१४)—ऋष्टः ॥७॥

१०. जुषी प्रीतिसेवनयोः । इतश्चत्वारः सेट आत्मनेपदिनश्च । जुषते । जोषिता । जोषित्वा जुषित्वा (द्र० १।२।२६) । ईदित्वात् (द्र० ७।२।१४) जुष्टः । एतिस्तुशास्वृ (३।१।१०९) इति क्यप्—जुष्यः । सह जुषत इति सजूः ॥८॥

---

१. न्यङ्क्वादिगणे (७।३।५३) भृगुशब्दपाठात् कुत्वमिति स्वाम्यभिप्रायः ।

२. अत्र 'इक् कृष्यादिभ्यः' (३।३।१०८ वा०) इति वार्तिकेन 'इक्' प्रत्यय इति स्वाम्यभिप्रायः । विशेषेण तैत्तद्वार्तिकमनुद्धृत्य 'इगुपधात् कित्' इति उणादिसूत्रनिदर्शनाय (उ० ४।१२०) सम्यक् निर्दिष्टः । उणादौ न इक् प्रत्ययः साक्षान्निर्दिष्टः । तत्र त्वनुवर्तमानस्य इनः कित्त्वमात्रं विधीयते ।

११. ओविजी भयचलनयोः । उद्विजते । विज इट् (१।२।२) इतीडादिः प्रत्ययः कित्—उद्विजिता । करणे हलश्च (३।३।१२१) इति घञ्—वेगः । विग्नः । ण्यन्ताद् उद्वेजितः ॥९॥

१२. ओलजी ओलस्जी व्रीडे । लजते । लजिता । लजितः, लग्नस्तु लगन्विष्ट (७।२।१८) इति सङ्गे साधुः, लगितोऽन्यः । ईदित्वं सहानर्थकम्, तस्माल्लगेः (१।५६३) एतन्निपातनम् । अत एव ओलजीति चन्द्रः[1]—लग्नः । लज्जते । लज्जिता । अनयोस्तुदादौ प्रयोजनाभावाद् भ्वादौ युक्तः पाठः[2] ॥१०, ११॥

१३. उदात्ता अनुदात्तेतः ।

१४. ओव्रश्चू छेदने । इतः स्फुलान्ताः (६।९४) मिशातं मेदः परस्मैपदिनश्च । ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—वृश्चति । यदा व्रश्चिता (द्र० ७।२।३५) । मूलवृक्त । वृक्णः, पक्षे निष्ठादेशः सिद्धो वक्तव्यः (८।२।६ वा०) जृव्रश्च्योः क्त्वि (७।२।५५) इतीट्—व्रश्चित्वा । व्रश्चिकृषोः किकन् (उ० २।४०)—वृश्चिकः । स्नुव्रश्चि (उ० ३।६६) इति क्सः—वृक्षः ॥१२॥

१५. व्यच संभवे । विचति (द्र० ६।१।१६) । व्यचेः कुटादित्वमनसि (१।२।१ वा०)—विचिता । नेह—उरुव्यचाः ॥१३॥

१६. व्यज व्याजीकरणे । व्यजति । 'व्याजीकरणे' लिङ्गाद् घञि कुत्वाभावः—व्याजः ॥१४॥

१७. उछि उञ्छे । उञ्छ उच्चयः । उञ्छति । उञ्छिता ॥१५॥

१८. उछी विवासे । विवासोऽतिक्रमः । उच्छति । व्युष्टा रात्रिः ॥१६॥

---

१. मुद्रिते चान्द्रधातुपाठे तु 'ओलजी' इत्येव पठ्यते (६।१००) । सायणोऽपि धातुवृत्तौ चान्द्रमते तवर्गपञ्चमादिं (ओलजी) मन्यते (धातु ३२६) । क्षीरस्वामी नमनमिकाशब्दव्याख्याने 'ओलजी' इति पठति (द्र० अमरटीका ३।१।३१॥२।६।९) ।

२. चिन्त्योऽयं पाठः । भ्वादौ पाठे शपः पित्त्वादनुदात्तत्वे तास्यनुदात्तेन्ङिद् (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वरः स्यात् । इह पाठे तु विकरणस्वरेण मध्योदात्तत्वं भवति । अत्र धातुवृत्तिः (पृष्ठ ३२६) अनुसन्धेया ।

१९. ऋछ इन्द्रियप्रलयमूर्तिभावयोः । इन्द्रियाणां प्रलये=मोहे, मूर्तिभावे च । ऋच्छति, समो गम्यृच्छि (१।३।२९) इति तङ्—समृच्छते । इजादेर्गुरुमतोऽनृच्छः (तु० ३।१।३६) इत्याम्—आनर्छ ॥१७॥

२०. मिछ उत्क्लेशे । उत्क्लेशो बाधनम् । मिच्छति । मिच्छ इति द्रमिडाः—पिच्छाः आचामः ॥१८॥

२१. जर्ज झर्झ चर्छ परिभाषणे । जर्जति । जर्जरः, झर्झरः । चर्च इति च दुर्गः[1] ॥१९—२१॥

२२. त्वच संवरणे । संवरणम् आच्छादनम् । त्वचति । क्विपि (द्र० ३।२।१८७) त्वक् । अचि (द्र० ३।१।१३४) त्वचः ॥२२॥

२३. ऋच स्तुतौ । ऋचति । क्विप् (द्र० ३।२।१७८)—ऋक् । आनर्च, आनृचुः । अर्चिशुचि (उ० २।१०८) इतीसिः-अर्चिः ॥२३॥

२४. उब्ज आर्जवे । आर्जवं स्पृष्टता[2] । उब्जति । उब्जिजिषति, न न्द्राः संयोगादयः (६।१।३) इत्यत्र बकस्याप्[3] बो न द्विरुच्यते । समुद्रुगादिसिद्धयाद् बोपधोऽयम्[4], उपध्मानीयोपधत्वे जदत्वस्यासिद्धत्वं स्यात् । भुजन्युब्जौ पाण्युपतापयोः (७।३।६१) । उब्जेर्बले बलोपश्च (उ० ४।१९२) इत्यसुन्—ओजस् ॥२४॥

२५. उदृझ[5] उत्सर्गे । उज्झति । झोपधोऽयम्, लाक्षणिकं

---

१. 'अर्च अर्ज जर्म भर्ज परिभाषणे—अर्चति, अर्जति, जर्भति । जर्जर । भर्भति । भर्भरः । चर्चेति दुर्गः' । इति पाठा० । २. 'स्पष्टता' क्वचिदादित ।

३. 'बकारस्याप्यय प्रतिषेधो वक्तव्यः' इति काशिकान्यवार्तिकादित्यर्थः ।

४. अयं भावः—अभ्युद्गः समुद्गः इत्यादिसिद्धये केचिद् दोपध मन्यन्ते । तत्र अभ्युद्गः समुद्ग इत्यादयस्तु दुपुपसर्गोत्त गमेर्डप्रत्यये संपत्स्यन्ते । ततः बकारोपधोऽयं धातुरित्यर्थः । उब्जेर्बले बलोपश्च इति उणादिसूत्रम् (४।१९२) अपि बोपधत्वे प्रमाणम् । अपरे उपध्मानीयोपधं स्वीकुर्वन्ति, तन्मते दोषमाह—उपध्मानीयोपधत्वे इति । अत्र इषवदद-सूत्रस्य 'शर्पु उपध्मानीयत्वे' इति वार्तिकं तद्भाष्यं चावलोकनीयम् ।

५. यथा तृणत्ववचनम्—'दोपधोय, लाक्षणिकं पुत्वम्' तथा तु धातुसूत्रे 'उज्झ' इत्येव मूलपाठ इति प्रतीयते ।

शुरयम । उज्झिमिच्छति । मयति¹—निपोदूर्ध्वी नदे (१।१।१४) । क्विप् (द्र० ३।२।१७८) उत् ॥२५॥

२६. लुभ विमोहने । विमोहन व्याकुलीकरणम् । लुभति । तीषसह (पा० ७।२।४८) इति लोब्धा लोभिता । लुभो विमोहने (७।२।५४) इट्—विलुभिताः केशाः । दिवादौ लुभ गार्ध्ये (४।१२६)—लुभ्यति, लुब्धः ॥२६॥

२७. ऋह कत्थनयुद्धहिंसादानेषु । ऋहति । अर्हयति । रिह इति द्रमिडाः²—रिहति, रेहयति ॥२७॥

२८. ऋफ ऋम्फ हिंसायाम् । ऋफति, ऋम्फति, शे मुचादीनामुपसंख्यानात् (द्र० ७।१।५९ वा०) अनिदिताम् (६।४।२४) इति नलोपे प्राप्ते नुम्, शम्फादीनाम् (द्र० ७।१।५९) इत्येके³ ॥२८,२९॥

२९. तृफ तृम्फ तृप्तौ । तृफति तर्फित्वा । तृम्फति, नोपधात् थफान्ताद् वा (१।२।२३) इति वा कित्वम्—तृफित्वा तृम्फित्वा । तृप तृम्प इत्येके⁴ ॥३०, ३१॥

३०. तुप तुम्प तुफ तुम्फ हिंसायाम् । तुपति, तुम्पति, तुफति तुम्फति । भ्वादौ तुप तुम्प पाठो (द्र० १।२८८) स्पर्धः⁵ । आद् तुम्पतौ गवि कर्तरि (६।१।१४८) सुट्—प्रस्तुम्पति गौः ॥३२—३५॥

३१. दृफ दृम्फ उत्क्लेशे ।⁶ [दृफति दृम्फति] ॥३६, ३७॥

---

१. 'मयपि' इति शुद्ध० पाठो द्रष्टव्यः ।

२. उद्धृतं धातुवृत्तौ (पृ० ३२१) ।

३. एवं काशिकायां पाठः । माध्यवृत्त्यादिषु क्वचित् 'मुचादीनां' क्वचिच्च 'तृम्फादीनां' इत्युभयथा दृश्यते । शम्फादीनामिति स्वामिमतः पाठस्तु न क्वचिदुपलभ्यते ।

४. प्रक्रियाकौमुदी (भाग २ पृष्ठ २९५) तु 'तथा चाह सौनागाभिधः कार —तृप तृम्प चेत्येके' इति पठ्यते ।

५. नाथ स्पर्धः, स्पर्धेत्वोरपि ... (६।१।१८६) इति तुम्पतौ धातुमनुदात्तत्वे धातुस्वरो भवति, तद्पाठात् विकरणस्वरः (द्र० क्षीरत० ६।११ टि०) ।

६. क्वचित् सूत्रे नास्ति ।

३२. गुफ गुन्फ ग्रन्थे। गुफति, गोफित्वा गुफित्वा। गुम्फति। नोपधात् थफान्ताद् वा (१।२।२३)—गुफित्वा गुम्फित्वा। घञ् (द्र० ३।३।१८,१९)—गुम्फो ग्रन्थः ॥३८, ३९॥

३३. उभ उन्भ पूरणे। उभति। उर्भी[1] (द्र० ३।१।१३५)। उम्भति। उभित्वा। उम्भित्वा ॥४०, ४१॥

३४. शुभ शुन्भ शोभार्थे। अत एव निपातनात् शोभा साधुः[2]। शुभति। शुशोभ। शुभम्। अशोभीत्। भ्वादौ (४९८) शोभते, शुशुभे, अशुभत। रक् (द्र० उ० २।१३) शुभ्रम्। शुम्भति, शुशुम्भ, तृम्फादि (द्र० ७।१।५९ वा०)। भ्वादौ शुम्भ भाषणे हिंसायां च (१।२९२) इत्यर्थभेदात् पाठः[3]। तत्र षोपदेशः, सुम्भति सुम्भनार्थं इत्येके[4] ॥४२, ४३॥

३५. दृभी ग्रन्थे। दृभति। दृब्धः। अन्दूदृम्भू (उ० १।९३) इति दृम्भूः सर्पः ॥४४॥

३६. चृती हिंसाग्रन्थनयोः। चृतति, चृत्तः। सेऽसिचि कृत (७।२।५७) इति वेट्—चर्तिष्यति चर्त्स्यति। ईदित्वं यस्य विभाषा (७।२।१५) इति निष्ठायाम् इट्प्रतिषेधानित्यत्वज्ञापनार्थम्—चृतितः[5], यङ्लुगर्थं वा—चरीचृतः[6]। क्विप् (द्र० ३।२।१७८)—चृत्। चर्त्यम् (द्र० ३।१।११०) ॥४५॥

३७. विध विधाने। विधति। असुन् (द०उ० ४।४६) वेधाः ॥४६॥

---

1. इगुपधज्ञाप्रीकिरः कः (३।१।१३५) इति कः। निरुपपदविवचनोऽयम्। द्र० महा० ३।१।२७।

2. 'शोभेति निपातनात्' (काशिका० ७।१।४१) इति माधवः।

3. न केवलमर्थभेदः, अपि तु स्वरभेदोऽपि भवति इति। पूर्वां (४।१२) टिप्पणी द्रष्टव्या।

4. द्र० क्षीरतरङ्गिणी १।१५२।

5. क्लिष्टा भित्तान्तिपतितृ (२।१।१४) इति निपातनादिट् इति काशिका (७।२।१४)। मैत्रेयस्तु धातुपाठे 'चर्तितः' इत्युदाहरति।

6. द्रष्टव्या धातुवृत्ती (पृष्ठ ११०)।

३८. जुन गतौ[1]। जुनति। जुड इति दुर्गः ॥४७॥

३९. मृड सुखने। मृडति। मृडः। मृडमृद (१।२।७) इति क्त्वा कित्—मृडित्वा ॥४८॥

४०. पृड च। पृडति। पर्डित्वा ॥४९॥

४१. पृण प्रीणने। पृणति। के। (द्र० ३।१।१३५) पृण.। लोकस्य पृणे (६।३।७०), लोकं पृणतीति मुम—लोकम्पृणः ॥५०॥

४२. मृण हिंसायाम्। मृणति,मृणालम् (द्र०उ०१।११८)॥५१॥

४३. तुण कौटिल्ये। तुणति। तुन्दम्[2] ॥५२॥

४४. पुण कर्मणि शब्दे च[3]। पुणति। पुण्यम्। के (द्र० ३।१।१३५) निपुणः ॥५३॥

४५. मुण प्रतिज्ञाने। मुणति ॥५४॥

४६. कुण शब्दोपकरणयोः। कुणति। इगुपधात् कित् (उ० ४।१२०)—कुणिः कुपाणिः। क्वादिभ्यः कित् (उ० ११११५)—कुण्डम। उणादौ कुणिन्दः (द्र० उ० ४।८४), कुणालम्[4], कुणपः[5]। कोणः ॥५५॥

४७. शुन गतौ। शुनति। शुनकः। श्वा-क्वुन् (द्र० उ० २।३२) शुनश्च सीरं च—शुनासीरः ॥५६॥

---

१. स्मृत धातुवृत्तौ (पृष्ठ ३३०)।

२. ष्यन्दादयश्च (उ० ४।९८) इति निपातनात् ददनौ प्रत्ययौ। उज्ज्वल-दत्तस्त्वेतत्सूत्रवृत्तौ 'तुन्देर्नुम् च, तुन्दः' इत्याह। तच्चिन्त्यम्। नहि 'तुन्दिः' धातुः क्वचित् पठ्यते। यद्यत्र 'तुदेः' इति पाठः स्यात्। तथाप्युक्तता तदवस्थैव। तुदेर्नुमि दे दनि वा प्रत्यये 'तुन्द' इति सदृयविरुद्ध प्राप्नोति। झरो झरि सवर्णे (८।४।६५) इति लोपेऽपि पक्षे दकारद्वय प्राप्नोत्येव, न सिध्यते। ३. सार्वत्रिकः पाठः।

४. इतोऽग्रे लिखितेन पञ्चपाद्युणादेः ३।७६ सूत्रमन्या निर्दिष्टा। तस्मिश्च सूत्रे कण-धातोः सम्प्रसारणं कालश्च प्रत्ययो विधीयते, न कुण-धातोः। सरस्वती-कण्ठाभरणे (२।३।२०१) कुणेरेव कालन् विधीयते।

५. यत्रापि लिखितेन उणादेः ३।१४३ सूत्रमन्या निर्दिष्टा। यस्मिन्नपि

४८. द्रुण हिंसागतिकौटिल्येषु । द्रुणति । के (द्र० ३।१।१३५) द्रुणः । घञ् (द्र० ३।३।१८)—द्रोणः, द्रोणी ॥५६॥

४९. घुण[1] घूर्ण भ्रमणे । घुणति, घुणो दारुक्रिमिः । घोणा । घूर्णतिः । घूर्णती घूर्णन्ती (द्र० ७।१।८०) । भ्वादौ (१।२९५) घोणते, घूर्णते ॥५८, ५९॥

५०. षुर ऐश्वर्यदीप्त्योः । सुरति । सुरः । वोपदेवस्तोऽयमिति सुरः—सुषोर ॥६०॥

५१. कुर शब्दे । कुरति । कोरकम् । कुरः करन्[1]—कुररः । कुर्यात् (द्र० ७।२।७९) । कुरुः ॥६१॥

५२. क्षुर खुर विलेखने । विलेखनं छेदः । क्षुरति । क्षुरः । खुरति । खुरः ॥६२, ६३॥

५३. मुर संवेष्टने । मुरति । मुरः, मुरा ओषधिविशेषः । मुर्मुरः ॥६४॥

५४. घुर भीमार्थशब्दयोः । घुरति । घञ् (द्र० ३।३।१९)—घोरः । घुघुरः ॥६५॥

५५. पुर अग्रगमने । पुरति । पुरम् । क्विप् (द्र० ३।२।१७८)—पूः । पुरुषः । पुरु बहु ॥६६॥

५६. वृहू[2] उद्यमे । उद्यम उद्धरणम् । वृहति । वर्हिता । वर्ढा । उद्वृहः । वर्हणम् । बर्हः । प्रमौ परिवृढः[3] (७।२।२१) । भ्वादौ वृह वृद्धौ (१।४८८)—वर्हति ॥६७॥

---

सूत्रे कर्णेरेव सम्प्रसारणं करस्य च प्रयत्नो विधीयते, न कृणे । तरस्वतीत्यत्रासरणे (२।२।११२) तु कृर्णेरेव कृष्णो निपात्यते ।

१. द्र० सर० कण्ठा० २।३।३६॥ हैमोणादि ३११ ।

२. अन्ये तु मकारादिं पठन्ति । धातुवृत्ति पृष्ठ ३३१ ।

३. अत्र स्वादौ चोभयत्र पवर्गादिं पठित्वा 'प्रमौ परिवृढः' सूत्रेण दन्त्योष्ठ्यवान् 'परिवृढ' शब्दो व्युत्पाद्यते । तत्कथमिति न जानीमः । किमस्मिन् सूत्रेऽपि पवर्गवान् एव पाठः स्वामिसम्मतः ?

५७. तृहू तृन्हू स्तृहू स्तृन्हू हिंसायाम्[1] । तृहति । तर्हिता, तर्ढा । तर्हणम् । रुधादौ तृहि हिसि हिंसायाम् (७।२४) तृणेढि, तृण्ढः, तृंहन्ति । तृंहति । तृंहिता, तृण्ढा । स्तृहति स्तृंहति । षोपदेशा-विति दुर्गः ॥६८—७१॥

५८. इषु इच्छायाम् । इषुगमियमां छः (७।३।७७)—इच्छति । तीषुसह (तु० ७।२।४८) इति वेट्—एष्टा एषिता । इष्यन्न इतीट्, इषे त्वोर्जे त्वा (मा०प० सं० १।१) । विन्दुरिच्छुः (३।२।१६९) । इष आश्वयुजः, इड् अन्नम् अस्यास्त्यत्र वा, पर्शाद्यच् (५।२।१२७) । इष्यशिभ्यां तकन् (उ० ३।१४८)—इष्टका । इषुरवेषेः (द० उ० १।१५४)—इक्षुः । इच्छा (३।३।१०१) साधुः । भुयजीविस्तुभ्यः करणे (तु० ३।३।९५ वा०)—इष्टिः । इष्टः । दिवादौ इष गतौ (४।१७)—अन्विष्यति, इषुः । क्र्यादौ इष आभीक्ष्ण्ये (९।५७) इष्णाति ॥७२॥

५९. मिष स्पर्धायाम् । मिषति । मेषिता मेषोऽचि (द्र० ३।१।१३४), के (द्र० ३।१।१३५) आमिषम् । घञ् (द्र० ३।१।१८, १९)—निमेषः ॥७३॥

६०. किल श्वैत्यक्रीडनयोः । किलति । केलिः । के (द्र० ३।१।१३५) किलकिला रवः, अव्यक्तानुकरणं वा । किलासं[2] सिध्मम् ॥७४॥

६१. तिल स्नेहने । तिलति । के (द्र० ३।१।१३५) तिलः । चुरादौ (१०।६२) तेलयति ॥७५॥

६२. चिल वसने । चिलति । पचादौ (गण० ३।१।१२४) चेलः चेलम्, चेलट्[3] (गण० ३।१।१३४), गर्हिता ब्राह्मणी = ब्राह्मणि-

---

१. 'क्षीरस्वामी तु—तृहू तृन्हू स्तृहू स्तृन्हू हिंसार्थाः' इत्येवं पुरुषकारे (पृष्ठ १२१) उद्धियते । तत्र षोपदेशपाठश्चिन्त्यः ।

२. द्र० सरस्वतीकण्ठाभरण २।३।१७७; हैमोणादि ५७५ ।

३. स्त्रीत्वनिदर्शनाय पचादौ पठितं टित्पाठं निर्दिशति । इह लिबिशेन ६।३।४३ सूत्रसंख्या निर्दिष्टा, सा चिन्त्या । एषा सूत्रसंख्या तु 'धरूपकल्प' इत्युत्तर निर्देष्टव्या सतीह निर्दिष्टा ।

चेली, परूपकल्प (६।३।४३) इति ह्रस्वः, चेलखेटकटुककाण्डं गर्हायाम् (६।२।१२६) इत्युत्तरपदाद्युदात्तत्वम्[1] ॥७६॥

६३. चल विलसने । चलति । चलती, चलन्ती । चल कम्पने ज्वलादिः (१।५६९)—चलः, चालः । शप्श्यनोर्नित्यम् (७।१।८१) नुम्—चलन्ती । कम्पने चलिः (१।५४९) मित्—चलयति लताम् । चुरादौ चल भृतौ (१०।६३)—चालयति ॥७७॥

६४. चिल संवरणे । इगुपधाद्धिः । चिलति । आचिलम्[2] चेला ॥७८॥

६५. इल स्वप्नक्षेपणयोः[3] । इलति । इला भूः । एला । एलयति ॥७९॥

६६. विल भेदने । विलति । विलात. । आविलम् । विलमम् । विल्वम् ॥८०॥

६७. णिल गहने । प्रणिलति ॥८१॥

६८. हिल हावकरणे[4] । हिलति । हेला[5] । मिल[6] श्लेषणे इति दुर्गः—मिलति[5], मेलः ॥८२॥

६९. शिल षिल उञ्छे । शिलति । शिलम् । शिला । सिलम् । सेलु श्लेष्मातक. ॥८३, ८४॥

७०. लिख अक्षरविन्यासे । लिखति । आलेख्यम् । पचादौ (गण० ३।१।१३४) लेख । घञ्—लेखः, विलेख । भिदादौ (गण० ३।३।१०४) लेखा ॥८५॥

---

१. 'उत्तरपदान्तोदात्तत्वम्' पाठान्तर, तच्चिन्त्य, सूत्रार्थविरोधात् ।

२ 'आत्रेलम्' हस्तलेखपाठ. । ३. 'स्वप्नप्रक्षेपणयो.' पाठा० ।

४. 'भावकरणे' पाठा० । ५. मिदादावस्य पाठः कल्प्य. ।

६. पूर्वत्र 'मील'धातुव्याख्याने (१।२४५) 'लौकिकास्मिलेः मिलति, मेलनम्' इत्युक्तं स्वामिना । तदिहान्वेष्यम् । दीपजन (७।४।३) सूत्रे मील-धातु पठता पाणिनिना मिल-धातुर्न स्वीकियत इति भाव्यते । अन्यथा मीलतेरमिमीलत् मिलतेरमीमिलत् इति रूपद्वय स्यादेव, किमुपधाह्रस्वविकल्पेन । दुर्गोपमीत्ये काशकृत्स्न-धातुपाठेऽपि 'मिल श्लेषणे' (पृष्ठ २२७) पठ्यते ।

७१. कुट कौटिल्ये । कुटति । गाङ्कुटादिभ्योऽञ्णिन्ङित् (१।२।१)—कुटिता । उत्कुटः । कुटो घटः । कोटरः । कुटरः । कोटिः । कुटीरम् । घपिकुटि (उ० ३।१४८) इति कपन्—कुटपोऽश्वमानम् । इगुपधात् किः (तु० उ० ४।१२०)—कुटिः । कुटिकुविभ्या क्मलन् (उ० ४।१८७)—कुट्मलम् । कुटिल । कथं कुटित्वा ? न क्त्वा सेट् (१।२।१८) इति हि कित्त्वं बाधितम्, न ङित्त्वम् ॥८६॥

७२. पुट संश्लेषणे । पुटति । पुटः, पुटी । घञ्—पोटा नपुंसकम् । पोटक । चुरादौ पुट सञ्चूर्णने (१०।६८), तथा भासार्थः (१०।१९७)—पोटयति । लुट विलोडने[1] इति इगुपधः—लुटति । लुटिता । लुटित्वा । लुठ सश्लेषण इत्येके[2] ॥८७॥

७३ कुच संकोचने । संकुचति, अर्थे संग्रहणात् तदुपसर्गत्वम्[3] । सङ्कुचिता । कुचित्वा । कुची । भ्वादौ संपर्चनादौ (१।६००) संकोचति ॥८८॥

७४. गुज शब्दे । गुजति, गुजिता । भ्वादौ (१।१८३ पक्षीयमते) गोजति, गोजिता ॥८९॥

७५. गुड रक्षायाम् । गुडति । गुडा हस्तिसंनाहः । गुडः स्वादुद्रव्यम् । भूगोल[4]:, गोलके[4] युग्मम्, गुलिका[4] मौक्तिकविशेषः ॥९०॥

७६. डिप क्षेपे[5] । डिपति, डिपिता । दिवादौ (४।१२४) डिप्यति, डेपिता । चुरादौ (१०।१२३) डेपयति ॥९१॥

७७. छुर छेदने । छुरति । आच्छुरितम् । छुर्यात्, र्वोः न मङ्क्छुराम् (तु० ८।२।७९) इति दीर्घो नास्ति—छुरिका ॥९२॥

---

1 'लोटन' पाठा० । कातन्त्रधातुपाठे 'पुट लुट सश्लेषणे' इति पाठः, शाकटायने 'पुट लुठ सश्लेषणे' (पृष्ठ २२७) ।

२ एतत्पृष्ठस्या प्रथमा टिप्पणी द्रष्टव्या ।

३ द्रष्टव्य (६।१०४) धातुसूत्रव्याख्यानम् ।

४. डलयोरेकत्वस्मरणात् । अत्र ५१ पृष्ठस्था टि० १ द्रष्टव्या ।

५. 'प्रक्षेपे' पाठा० ।

७८. स्फुट विकसने । स्फुटति, स्फुटिता । अस्फुटीत् । स्फुटः । भ्वादौ स्फुटिर् विशरणे (१।२२६)—स्फोटति, स्फोटिता, अस्फुटत्, अस्फोटीत् । स्फोटः ॥९३॥

७९. मुट आक्षेपप्रमर्दनयोः । मुटति । मुटिता । भ्वादौ (१।२२१ दुर्गमते) मोटति, विमोटितकराङ्गुलिः । चुरादौ (१०।६७ दुर्गमते) मोटयति ॥९४॥

८०. त्रुट छेदने । वा भ्राशम्लाश (३।१।७०) इति श्यन् वा—त्रुट्यति त्रुटति । त्रुटिता । त्रोटयति ॥९५॥

८१. तुट कलहकर्मणि । तुटति, तुटिता । इक्[1] (द्र० ३।३।१०८ वा०)—तुटिः । तोटकम् ॥९६॥

८२. चुट छुट छेदने । चुटति । उच्चोटनम् । छुटति । छोटिका ॥९७, ९८॥

८३. जुड बन्धे । जुडति । जुडिता । जुड गतौ (६।१८ दुर्गमते)—जुडति, जोडिता ॥९९॥

८४. कड घसने[2] । घसनं भक्षणम् । कडति । कड्यते । कलमः[3] । कडङ्गरो बुसम् । कडिः । कलहः । कडत्रम्, कलत्रम् । भार्या नितम्बश्च । कडित्रं चूतं लेखनचर्म च । कुटादौ फलाभावात् पृथक्पाठोऽयम्[4] ॥१००॥

---

१. 'इक् कृष्यादिभ्यः' इति वार्तिकेन इति भावः । लिङ्गेन वार्तिकमधुना 'इगुपधात् कित्' इत्युणादिसूत्रस्य ४।११६ सथा निर्दिष्टा ।

२. काशकृत्स्ने धातुपाठे तु 'कड मदे, कुड घसने' इति पठ्यते (पृष्ठ २२६)।

३. उणादौ (४।८४) कलधातोः कलमो व्युत्पाद्यते । हैमोणादौ तु कडेरेव (द्र० ३४७) यत्र उत्तरेषु च केषुचित् शब्देषु डलयोरभेदात् लत्व बोध्यम् ।

४. तुदादौ पाठस्तु स्वरार्थे सम्भवति, परन्तु कुटादावस्य पाठोऽनर्थप्रयोजन एव । काशकृत्स्ने (पृष्ठ २२६) धातुपाठे 'कुड मदे' इति पठ्यते । काशकृत्स्नो भ्वादावपि (पृष्ठ २३) इम पठति । तदनुयायी कातन्त्रकारस्तु केवल भ्वादावेव पठति, न तुदादौ । स्वाम्यपि 'कडि मदे' (१।२-१) सूत्रव्याख्याने 'कड इति दुर्ग.' इत्येव स्मरति ।

८५. कुड बाल्ये । कुडति कुडः । कुडङ्गः ॥१०१॥

८६. कुड घनत्वे । घनत्वं सान्द्रता । कुडति ॥१०२॥

८७. गुड प्रतिघाते[1] । गुडति । अयोगुडः । घुट इति दुर्गः—घुटिका गुल्फास्थि[2] ॥१०३॥

८८. तुड तोडने । तोडनं भेदः पृथक्करणं वा । तुडति । तोडः, तोडनम्, तुडिः ॥१०४॥

८९. स्थुड थुड संवरणे । स्थुडति । स्थुलः पटकुटिः । थुडति ॥१०५,१०६॥

९० हुड हूड निमज्जने । हुडति । होडः, होला । हुडति । होडिः, हुडः, हुडुः । कुड इत्येके[3] ॥१०७,१०८॥

९१ ब्रुड भ्रुड संवरणे । ब्रुडति भ्रुडति ॥१०९,११०॥

९२. स्फर स्फुर स्फल स्फुल चलने । स्फरति । स्फरः । स्फारः। स्फायि (उ० २।१३) इति स्फाये रक् । स्फुरति । स्फुरः स्फोटकः । स्फलति । आस्फालः, आस्फालना । स्फुरतिस्फुलत्योर्निर्निविभ्यः (८।३।७६) षत्वं वा—निःष्फुरति, निःस्फुरति । चिस्फुरोर्ण्यौ (६।१।५४) बात्वम्—विस्फारयति, विस्फोरयति । स्फुरितम् । स्फुरिस्फुल्योर्घञि (६।१।४७) बात्वम्—स्फारः स्फोरः, स्फालः स्फोलः । इमौ प्रमादादाम्नातौ[4] ॥१११—११४॥

---

१. अन्यत्र क्षीरतरङ्गिण्यां प्रायेण 'प्रतीघाते' इति पठ्यते ।

२. इतोऽग्रे 'मन्त्रसिद्धौ प्रतिबन्धः' इत्यधिकः पाठः क्वचित् ।

३. काशकृत्स्ने धातुपाठे 'कुड मसने' इति पठ्यते (पृ० २२९) ।

४. वस्तुतो नेमौ प्रमादाम्नातौ । अपि तु स्फारस्फोरयोः स्फालस्फोलयोश्च स्वतन्त्रे पृथक् प्रकृती इति बोधनायैव क्वचित् प्राचीनमतमाश्रित्योभयथा पठितौ । सूत्रपाठे तु शास्त्र विकल्पैकस्मादेव धातो रूपद्वय निष्पादितम् । रलयोरभेदत्वमाश्रित्य स्फुरस्फुलयोरप्येकतरेणैव कार्यं सिद्ध्यति । जैनशाकटायनश्च 'स्फल चपले स्फुल मदये च' (धातुसूत्र ६६७,६६८) रलयोरभेद मत्वाऽप्युपधमुकारोपधं चोभयथा पठति ।

९३. स्फुल संचये च । स्फुलति स्फुलिङ्गः ॥

९४. उदात्ता उदात्तेतः ।

९५. गुरी उद्यमे । ९६. उदात्तोऽनुदात्तेत् । गुरते, गुरिता, गूर्णः । अपगुरो णमुलि (६।१।५३ ) वात्वम्—अपगारम् अपगारम्, अपगोरम् अपगोरम् । चुरादौ (१०।१४३) आगूरयते गूरेः ॥११५॥

९७. णू स्तवे । इतश्चत्वारः सेटः । प्रणुवति । नुविता ।[1] नूतः श्रयुकः किति (७।२।११) इतीण् नास्ति, अन्ये नुवित इत्याहुः, ङित्वेन कित्त्वस्य निवर्तनाद् । एवं धूत-धुविताऽदयः ॥११६॥

९८. धू विधूनने । धुवति । स्वादौ (५।९) धूनोति धुनोति[1] । क्र्यादौ (९।१६) धुनाति ॥११७॥

९९. गू पुरीषोत्सर्गे । गुवति, गुविता । तिथपृष्ठगूथ (उ० २।१२) इति गूथम् । भ्वादौ (१।६।७९) गवति[2] ॥११८॥

१०० ध्रु[3] गतिस्थैर्ययोः । ध्रुवति । अचि (श्रु० ३ १।१३४) ध्रुवः । ध्रुविता । ध्रुत ध्रुवितः । भ्वादौ (१।६७५) स्थैर्ये-ध्रवति ॥११९॥

१०१. उदात्ताः ।

१०२. कुङ् शब्दे । इतः सप्तानिटः । कुवते । कुता । कुङ् इत्येके[4]—आकुविता, आकुनम् ॥१२०॥

१०३. इत् । कुटादयो वर्तिताः ।

१०४. पृङ् व्यायामे । व्यायाम उद्योगः । व्याप्रियते, वृत्तौ[5] विग्रहणात् । व्यापृतः । व्यापारः ॥१२१॥

---

१. स्वादौ पक्षान्तरे 'धुञ्' इत्यपि पठति स्वामी ।

२. भ्वादौ ङित्वाद् 'गवते' इति युक्तम् । क्वचिन्नास्ति ।

३. अत्राह धातुवृत्तिकार —'स्वाम्यादय ध्रुव इति वकारान्त धातु पठन्ति' इति (पृष्ठ ३३६) । न चात्र तथा पाठ उपलभ्यते ।

४. सस्मार धातुवृत्तिकार. (पृष्ठ ३३६) ।

५. वृत्तौ धात्वर्थ इत्यर्थः । द्र० ६।७३ धातुसूत्रव्याख्यानम् ।

६.१०५. मृङ् प्राणत्यागे । म्रियते । म्रियतेर्लुङ्लिङोश्च (१।३।६१) इति तङ्—अमृत, मृषीष्ट । अत एव ङित्त्वं पेठुः[1] । ममार । मरिष्यति । मारः । मारकः । अभिमरस् तैक्ष्ण्ये[2] । मर्म । मर्मरः, पचादौ (द्र० ३।१।१३४) अमरः । भुजिमृङ्भ्यां युक्त्युकौ च (द० उ० ३।२१)—मृत्युः । मृशी (उ० १।७) इत्युः—मरुः । मृग्रोरुतिः (उ० १।९४)—मरुत् । मृकणिभ्यामीचिः (उ० ४।७०)—मरीचिः । मरूको निर्दशनः करी[3] । हसिमृग्रि (उ० ३।८६) इति तन्—मर्तः, स्वार्थे यः (द्र० ५।४।३६ वा०) मर्त्यः ॥१२०॥

६.१०६. रि पि गतौ । रियति, पियति । पिकः कोकिलः । ॥१२१,१२२॥

६.१०७. धि धारणे । धियति । धेता ॥१२३॥

६.१०८. क्षि निवासगत्योः । क्षियति । क्षेता । क्षय्यजय्यौ शक्यार्थे (६।१।८१)—क्षय्यः, क्षेयोऽन्यः । निष्ठायामण्यदर्थे (६।४।६०) दीर्घः, क्षियो दीर्घात् (८।२।४६) नत्वम्—क्षीणः । वाऽऽक्रोशदैन्ययोः (६।४।६१)—क्षीणायुर्जाल्म ; क्षितायुः, क्षीणस्तपस्वी, क्षितः । अर्तिस्तुसु (उ० १।१४०) इति मन्—क्षेमम् । ष्ट्रन् (उ० ४।१५८) क्षेत्रम् । क्षितिः । एरच् (३।३।५६) क्षयो गृहम् । भिदादौ (गण ३।३।१०४) क्षिया । स्वादौ (५।३२ पक्षोपमते) क्षिणोति । भ्वादौ (१।५४२) क्षयति ॥१२४॥

६.१०९. अनुदात्ताः ।

६.११०. षू प्रेरणे । सुवति । उपसर्गात् सुनोतिसुवति (८।३।६५) इति षत्वम्—अभिषुवति । सविता । सोषूयते । सुसूषति स्तौतिण्योरेव षणि (८।३।६१) इति नियमात् षत्वं नास्ति ॥१२५॥

६.१११. कॄ विक्षेपे । किरति । किरतेर्हर्षजीविका (१।३।२१ वा०) इति तङ्, अपाच्चतुष्पाच्छकुनिष्वालेखने (६।१।१४२) सुट्—अपस्किरते

१. अस्पष्टार्थमिदं वचनम् । ङित्त्वप्रयोजनायात्र माधवीया धातुवृत्तिर्द्रष्टव्या (पृष्ठ ३३७) ।

२. ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः । कौटिल्य० १।१२॥ अत्र ३।३।४३ क्षीरस्वामिनोऽमरटीका द्रष्टव्या ।

३. तुलनीयम्—'मरूको मयूरो मृगो निर्दशनेभस्तथा च' इति हैमोणादिवृत्तिः (५८) ।

वृषभो हृष्टः, अपस्किरते कुक्कुटो भक्षार्थी, अपस्किरते श्वाश्रयार्थी । किरतेर्लवने (तु० ६।१।१४०) सुट्—उपस्कारं[1] मद्रका लुनन्ति । हिंसायां प्रतेश्च (६।१।१४१)—उपस्कारस्ते[2] जाल्म भूयात्, प्रतिस्कारः। मरणमस्त्विति । प्रतिचस्करे नखैः (शिशुपालवध १।४७) । किरश्च पञ्चभ्यः (७।२।७५) सनीट्, यस्येटो वृतो वा (७।२।३८) इति दीर्घो नेष्यते[3] (द्र० ७।२।७५ काशिका)—चिकरिषति, पक्षे चिकीर्षति[4] । इगुपध (३।१।१३५) इति कः—किरः सूकरः, किरिश्च (द्र० उ० ४।१४३) । विष्किरः शकुनिर्विकिरो वा (६।१।१५०) । कॄपॄवृजि (उ० २।८१) इति क्युः—किरणः । कॄशॄलि (उ० ३।१२२) इत्यभः—करभः । कॄदारिभ्य उनन् (द० उ० ३।५२)—करुणः, करुणा कृपा । कॄतॄभ्यामीषन् (उ० ४।२६)—करीषः शुष्कगोमयम् । कॄपॄकटि (उ० ४।३०) इतीरन्—करीरम् अङ्कुरः । कॄगॄभ्यां किः (तु० उ० ४।१४३)—किरिः । कॄगॄविभ्यः कीटन् (तु० उ० ४।१८५) किरीटम् । कॄवृजॄसि (तु० उ० ५।४२) इति नः—कर्णः श्रोत्रम् । कॄशोश्च (द्र० उ० ३।१०९)—कुर्दैवाः । कॄगॄशॄवृञ्चतिभ्यः ष्वरच् (द० उ० ८।४७ कपाठः)—कर्वरः । कॄ धान्ये (३।३।३०) इति घञ्—उत्कारो धान्यस्य, निकारः; अन्यत्रोत्करः, निकरः । वर्चस्केऽवस्करः (६।१।१४८), अपकरोऽन्यः ॥१२८॥

११२. गॄ निगरणे । निगरणं गिलनम् । गिरति, गिलति—अचि विभाषा (८।२।२१) इति लः । ग्रो यङि (८।२।२०) इति निजेगिल्यते । गरिता[5] । जिगरिषति जिगीर्षति[6], पश्चाद् अः (१।१।५१) लङ्—भक्ष·

---

१. 'उपस्कारम्' पाठ० । २. 'उपस्कारास्ते' पाठ० ।

३. मागधवृत्तौ स्वस्यापि दीर्घविकल्प उक्तः । द्र० धातुदीपे माधवृत्तिसंकलने ७।२।७५ सूत्रम् ।

४. किरश्च पञ्चभ्यः (७।२।७५) इति गृ कॄ गृ धात्वोः 'इट् सनि वा' (७।२।४१) इति विकल्पे प्राप्ते नित्यमिटं विधत्ते । तदाह वृत्तिकृत्—किरतिगिरत्योरिट् सनि वेति विकल्पः प्राप्तः (७।२।७५) इति । तेनात्र पक्षे इत्यपाठदर्शनं चिन्त्यम् ।

५. वृतो वा (७।२।३८) इति इटो वा दीर्घो भवति । तेन गरिता गरीता इत्युभयं साधु ।

६. द्र० एतद् पृष्ठस्य ४र्थी टिप्पणी ।

गिरते। अयङ्जिगरिषते। वृतो वा (७।२।३८) नास्ति[1]। समः प्रतिज्ञाने (१।३।५२) तङ्—संगिरते। निगरणचलनार्थेभ्यश्च (१।३।८७)—निगारयति। पचाद्यौ (गण ३।१।१३४) गरः, अजगरः। श्वपचचक्रधरवद् अकाराद् अनुपपदात्, कर्मोपपदे विप्रतिषेधेन (द्र० १।४।२) इत्यण् (द्र० ३।२।१) ग्रामः। उन्योर्ग्रः (३।३।२९)—उद्गारः, निगारः। अप् (द्र० ३।३।५७)—गरः, गलः। बाहुलकाद्[2] घञ्—निगारः, निगालः। न गारः—अगारम्। मृग्रोरुतिः (उ० १।९४)—गरुत् पक्षः। गर्मुत् (द्र० उ० १।९५) तृणम्। हसिमृग्रि (उ० ३।८७) इति तन्—गर्तः। कॄगॄश्याकि (तु० उ० ४।१४२)—गिरिः। छादिमोर्गगुणौ (उ० ३।१२८)—गर्भः। अर्तिगृभ्यां भन् (उ० ३।१५२)—गर्भः। शेवायह्व (उ० १।१५४) इति ग्रीवा ॥१२९॥

११३. उदात्ताः।

११४. दृङ् आदरे, ११५ धृङ् स्थाने। ११६. अनुदात्तौ। आदर इत्याङ्पूर्वः—आद्रियते। आदर्ता। आदिदरिषते। एतिस्तुशास (३।१।१०९) इति क्यप्—आदृत्यम्। इति[3] भेत्रा। ण्यन्तात् पूःसर्वयोर्दारिसहोः (३।२।४१) खच्—पुरन्दरः। ग्रहवृदृ (३।३।५८) इत्यप्—आदरः। दरिदृणिभ्यां म. (तु० उ० १।१४१)—दर्मः। ध्रियते। धर्ता दिधरिषते। अन्यानि भ्वादौ (६८४ सूत्रे) प्रदर्शितानि धरते ॥१३०,१३१॥

११७. प्रछ ज्ञीप्सायाम्। ज्ञीप्सा[4] जिज्ञासा। इतः षष्ठ्यल्पर्यन्ताः (६।१।३०) पञ्चदशानिटः परस्मैपदिनश्च। ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—पृच्छति। समो गम्यृच्छिप्रच्छि (१।३।२९ वा०) इति तङ्—सम्पृच्छते। आङि नुप्रच्छ्योः (१।३।२१ वा०) तङ्—आपृच्छते। पिपृच्छिषति—रुदविद (१।२।८) इति कित्। पृष्ट्वा। क्विब्वचि (३।२।१७८ वा०) इति दीर्घश्चात्, प्राड्विवाको निर्णेता। न्यङ्कु-

१. द्र० पूर्वपृष्ठस्था ४ टिप्पणी

२. 'कृत्यल्युटो बहुलम्' (३।३।११३) इति बहुलग्रहणात् 'वामरूपोऽपि त्याम्' (३।१।९३) इति नियमादप्राप्तो घञपि भवति इति भावः। त्रिविधं हमप-धर्मबुद्ध्या बहुलमेवनिदर्शनम् इति धातुसूत्रनिदर्शनाय १०।३६२ संख्या निर्दिष्टवान्।

३. द्र० उ० ४।१८४। ४. 'ज्ञानेप्सा' पाठा०।

न्यङ्क्वादित्वात् (द्र० ७।३।५३) कुत्वम्[1]। यजयाचयत (३।३।९०) इति नङ्— प्रश्नः, च्छ्वोः शूडनुनासिके च (६।४।१९)[2] प्रश्नेऽनङि[3] इति सम्प्रसारणाभावः ॥१३२॥

११८. वृत् । किरादयः पञ्च वृत्तिताः ।

११९. सृज विसर्गे । सृजति । स्रष्टा, व्रश्चभ्रस्ज (८।२।३६) इति षः । सृजियुजिभ्यां कर्मवद्भावः श्यंश्च (तु० ३।१।८७ वा०)—सृज्यति रज्जुः स्वयमेव । विभाषा सृजिदृशोः (७।२।६५) थलीट्—ससर्जिथ, सस्रष्ठ । सृजिदृशोर्झल्यमकिति (६।१।५८) इत्यमि कृते वदव्रज (७।२।३) इति वृद्धिः— अस्राक्षीत् । उणादौ (द्र० उ० १।१५) रज्जुः ॥१३३॥

१२०. टुमस्जो शुद्धौ । शुद्धया स्नानं शुद्धं च लक्ष्यते । मज्जति । मस्जिनशोर्झलि (७।१।६०) इति नुम्—मङ्क्ता । जान्तनशां विभाषा (६।४।३२) क्त्वायां नुम्[4]—मङ्क्त्वा मक्त्वा । ओदितश्च (८।२।४५) इति नत्वम्—मग्नः । मज्जथुः (द्र० ३।३।८९) । गुरोश्च हलः (३।३।१०३)—मज्जा— मज्जनम् । श्वन्नुक्षन् (उ० १।१५९) इति मज्जाऽस्थिसारः । मृगय्वादौ (उ० १।७) इत्युः—मद्गुः, न्यङ्क्वादित्वात् (गण० ७।३।५३) कुत्वम् । मस्जेर्नुम् च (उ० १४।७७) इत्यूषन्—मञ्जूषा पेटा[5] ॥१३४॥

१२१. रुजो भङ्गे । रुजति । रुग्णः । पदरुज (३।३।१६) इति कर्तरि घञ्—रोगः । भिदादौ (गण० ३।३।१०४) रुजा । रुक् । उदि कूले रुजिवहोः (३।२।३१) खश्—कूलमुद्रुजः । नहिवृति[6] (६।३।११६) इति दीर्घः —वीरुक् । रुक्म रुचेः (द्र० १।४९४) ॥१३५॥

---

१. नात्र कश्चित् कुत्वमार्गी, अतोऽसावनिष्ट पाठः । अत्र त्वयम:—'च्छ्वोः शूडनुनासिके च' (६।४।१९) इति पाठोऽपेक्ष्यते, शब्दपाद् शब्दे पत्वार्थम् ।

२. प्रश्नपदानन्तर सूत्रमिदमनर्थकम् । पूर्वनिरुक्ते शब्दपाद् शब्दे तस्यावश्यकत्वात् तत्र नेयः । लिपिकेन नैश पाठस्य स्थानभ्रष्टता कृता ।

३. कस्य तन्त्रस्येद सूत्रमिति नैव प्रत्येतुमस्नामि. । पाणिनीयास्तु 'प्रश्ने चासन्नकाले' (३।२।११७) इति निपातनात् सम्प्रसारणाभावमाहुः । द्र० काशिका ६।१।१६॥

४. नेतत् सूत्र क्त्वाया नुपो विकल्पं विधत्तेऽपि तु नकारस्य विभाषा लोपम् ।

५ मारवाडीभाषायां 'पेटी' इत्युच्यते ।

६. काशिकादौ 'नहिवृति' सूत्रे 'रुचि' पठ्यते । क्षीरस्तु 'रुजि' पाठं मन्यते ।

१.२२. भुजो कौटिल्ये । निर्भुजति । भुग्नः । भोगः सर्पकायः[1]। के (३।३।५८वा०)[भुजः]भुजेन कौटिल्येन गच्छतीति भुजगः[2] भुजंगः । रुधादौ भुज पालनाभ्यवहारयोः (७।१७)—भुनक्ति, भुङ्क्ते ॥१३६॥

१.२३. छुप संस्पर्शे । छुपति, छोप्ता । ॥१३७॥

१.२४. रुश रिश हिंसायाम् । रुशति । अरुक्षत् । रिशति । तालव्यान्तौ, प्रस्नाधाद् । भ्वादौ (१।४१८) मूर्धन्यान्तौ—रोषति । रेषति । दिवादौ रुष रोषे (४।१२३)—रुष्यति ॥१३८,१३९॥

१.२५. लिश गतौ । लिशति । लेष्टा । भ्वादौ लिश अल्पीभावे[3] लेशति, लेशः ॥१४०॥

१.२६. स्पृश संस्पर्शे । स्पृशति, स्प्रष्टा, स्पर्ष्टा—अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६।१।५९) अमागमः । स्पृशमृशकृषतृपदृपः सिच् वा (३।१।४४ वा०)—अस्पृक्षत, अस्प्राक्षीत, अस्पार्क्षीत । पदरुज (३।३।१६) इति कर्तरि घञ्—स्पर्शः उपतापः[4] । स्पृशोऽनुदके क्विन् (३।२।५८), क्विन्प्रत्ययस्य कुः (८।२।६२) इति कुत्वम्, अन्यथा व्रश्चादि (८।२।३६) सूत्रेण, षत्वं च इति गत्वं स्यात्, तत्तद्वाक्यान्तर्भावात् षस्य षः, गस्य वावसाने (८।४।५६) इति चर्त्वेन कः, पक्षे जश्त्वेन गः, इति ग्रन्थोऽप्युक्तः[5]–

---

१. भाष्यकारस्तु 'अथवा भोगशब्दः शरीरवाच्यपि दृश्यते । तद्यथा 'अहिरिव भोगैः पर्येति बाहुम्' (ऋ०६।७५।१४) इति । अहिरिव शरीरैरिति गम्यते' इति (५।१।१) वदन् शरीरसाधारण इति मन्यते ।

२. 'भुजगः' इत्यत्र 'अन्येष्वपि दृश्यते' (३।२।४८ वा०) इति डः । 'भुजङ्गः' इत्यत्र खच्प्रकरणे गमेः सुप्युपसंख्यानम् (३।२।३८ वा०) इति खच्, 'खच्च डिद्वा' (३।२।३८ वा०) इति डित्त्वे रूपम् । तदभावे 'भुजङ्गमः' इत्यपि भवति ।

३. नायं भ्वादौ पठ्यते । दिवादौ (६९) तु पठ्यते । तस्य 'लिश्यते' इति भवति । दिवादिव्याख्याने (६९) तु तुदादेरेव निर्देशः क्रियते, न भ्वादेः । तस्मादपपाठोऽयम् ।

४ 'स्पृश उपतापे' (३।३।१६ वा०) इति वार्तिके तद्व्याख्याने च 'उपताप' शब्दः प्रयुज्यते ।

५. कस्य भवस्य, कथं च प्रत्याख्यानं क्रियत इति न ज्ञायते । स्यात्

पार्श्वस्पृष्क् उदकस्पर्शः। स्पृशेः श्वण्शुनौ पृ च (उ० ५।२७) पार्श्वम्, पर्शुः। तिथपृष्ठ (उ० २।१२) इति पृष्ठम् ॥१४१॥

१.२७. विछ गतौ। गुपूधूपविछ (तु० ३।१।२८) इत्यायः—विच्छायति। विछेस्तुदादिपाठः सार्वधातुकेऽप्यायानित्यत्वे लिङ्गम्[1] पणतिवत्—विच्छति, विच्छती विच्छन्ती, तथा च शपि नित्यमिति भाष्यम् (३।१।३१) आर्धः शे विकल्पम्[2], द्रमिडास्तु पाठबलाद् आयव्यवायेऽपि कार्यमाहुः—विच्छायन्ती विच्छायती, यथा जुगुप्सत इति सन्व्यवायेऽपि नङ्। यजयाच (३।३।९०) इति नङ्—विश्नोऽन्तरायः। चुरादौ भासार्थः (१०।१९७)—विच्छयति ॥१४२॥

१.२८. विश प्रवेशने। विशति चेष्टा। नेर्विशः (१।३।१७) तङ्—निविशते। अभिनिविशश्च (१।४।४७) इति कर्म-ग्राममभिनिविशते। विभाषा गमहनविदविशाम् (७।२।६८) क्वसौ वेट्—विविशिवान् विविश्वान्। पदरुज (३।३।१६) इति कर्तरि घञ्—वेशो वेश्यावाटः। नेपथ्ये व्याप्त्यर्थे वेशः[3]। विशिपतिपदि (३।४।५६) इति णमुल्—गेहानुप्रवेशम् आस्ते, गेहं गेहमनुप्रवेशमास्ते, गेहमनुप्रवेशम् अनुप्रवेशम्। अशूप्रुषि (उ० १।१५१) इति क्वन्—विश्वम्। विटपविष्टप (उ० ३।१४५) इति विष्टपं लोकः, विशिपम्। जृविशिभ्यां झच् (उ० ३।१२६)—वेशन्तः पल्वलम्। वेः शालच् (५।२।२८) इति विशाल विशङ्कटौ ॥१४३॥

१.२९. मृश आमर्शने। आमर्शनं स्पर्शः। परामृशति, आ-

---

पूर्वं कुत्वप्रवृत्तावप्यान्तरतम्यात् 'ख' एव प्राप्नोति, अन्तेऽपि च। तथा सति को भेद इति न ज्ञायते। वय [illegible] मन्यामहे शकारस्य षत्वे तस्य झलां जशोऽन्ते' (८।२।३९) इति डत्वे, तस्य कुत्वे गकारे वावसाने (८।४।५६) इति प्रक्रियया भाव्यम्, अन्यथा पूर्वं कुत्वेन खत्वे कृते जश्त्वप्रसङ्गे कुत्वमसिद्धं स्यात् पूर्वत्रासिद्धमितिनियमात्।

१. विच्छेस्तुदादिपाठो न केवल नुमविकल्पार्थ एव, अपि तु विकरण-स्वरार्थोऽपि। आयस्य नित्यत्वे उभयमपि न स्यात् तेन युक्त एव स्वामिग्रन्थः। अत्र पुनस्कारोऽपि द्रष्टव्यः (पृष्ठ ९५)। २. नुम इति शेषः।

३. अत्र 'वेषः' इति शुद्धः पाठो द्रष्टव्यः (तु० अमर २।६।९९)। लिपिदोषेण नाय दोषो बुद्धः।

मर्शन इत्युक्तेः सोपसर्गः । विम्रष्टा, विमर्ष्टा । स्पृशमृश (३।१।४७ वा०) इत्यमृक्षत् आम्राक्षीत् अमार्क्षीत् ॥१४४॥

१,३०. णुद प्रेरणे । नुदति । नुन्दशोकयोः परिमृजापनुदोः (३।२।५) कः—शोकापनुदः पुत्र । नुदिस्तुदेरनन्तरं पठितः (६।२) स्वरितेत् तस्मादिह परस्मैपदिमध्ये न पाठ्यः[1] ॥१४५॥

१,३१. शदॢ शातने । पाघ्राध्मा (७।३।७८) इति शीयादेशः—शीयते, शदेः शितः (१।३।६०) तङ् । शत्स्यति । शदेरगतौ तः (७।३।४२) णिचि—फलानि शातयति । अशदत् (द्र० ३।१।५५) ॥१४६॥

१,३२ षदॢ विशरणगत्यवसादनेषु । सीदति सदेः सीदादेशः (द्र० ७।३।७८) । सीदिता, सीदन्ती । सित्स्यति । असदत् । सत्ता । एनयोर्भ्वादौ पठितयोः (१।५९९, ५९८) द्विःपाठे फलं नोपलभामः । विकरणस्वरे विशेष इति धात्वूह्यम्[2] ॥१४७॥

१,३३. अनुदात्ता उदात्तेतः ।

१,३४. मुच्लृ मोक्षणे । इतः पश्चामिष्ट उभयपदिनश्च । शे मुचादीनां (७।१।५९) नुम्—मुञ्चति, मुञ्चते । अमुचत्, अमुक्त । मोक्ता । मुचोऽकर्मकस्य गुणो वा (७।४।५७) इति सन्यभ्यासलोपो वा—मोक्षते वत्सः स्वयमेव । मुमुक्षते । इगुपधात् कि. (उ० ४।१२०)—मुचिः । नमुचिः—नभ्राण्नपात् (६।३।७५) इति नञ् प्रकृत्या । सिवि मुचेष्टि रूप (उ० ४।१६३)—मूत्रम् । वृतृवदि (उ० ३।६२) इति सः—मोक्षः ॥१४८॥

१,३५. लुप्लृ छेदने । लुम्पति, लुम्पते । अलुपत्, अलुप्त । लुपसदचर (३।१।२४) इति यङ्—लोलुप्यते ॥१४९॥

१,३६. विदॢ लाभे । विन्दति, विन्दते । अविदत्, अवित्त ।

---

१. कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थं इह पाठ इति सायणः । धातु० पृष्ठ ३४८ । अत्र धातुवृत्तेः ३२२ पृष्ठस्थः (६।२) पाठोऽनुसन्धेयः ।

२. उभयत्र पाठस्य स्वरभेद एव प्रयोजनम् । अपि चेह पाठे लुङ्विकल्पोऽपि (द्र० ७।१।८०) भवति ।

उषविदजागृभ्योऽन्यतरस्याम् (३।१।३८) आम्—विवेद विदांचकार[1] । विभाषा गमहनविद (७।२।६८) इति वेट्—विविद्वान्, विविदिवान् । अनुपसर्गाल् लिम्पविन्द (३।१।१३८) इति शः—विन्दः, गोविन्दः, अर-विन्दः । वित्तो भोगप्रत्यययोः (८।२।५८)—वित्तं धनम्, फलैर्वित्तः[2] । अन्यत्र विन्नं लब्धम् । यावति विन्दजीवोः (३।४।३०) णमुल्—यावद् वेदमधीते ॥१५०॥

१३७. लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति, लिम्पते । लिपिसिचिह्वश्च (३।१।५३) इत्यङ्—अलिपत् । आत्मनेपदेष्वन्यतरस्याम् (३।१।५४)—अलिप्त अलिपत । अनुपसर्गाल्लिम्प (३।१।१३८) इति शः—लिम्पः । नौ लिम्पेः (३।१।१३८ वा०)—निलिम्पा देवाः ॥१५१॥

१३८. षिच क्षरणे । सिञ्चति, सिञ्चते । उपसर्गात् सुनोति (८।३।६५) इति षः—अभिषिञ्चति । स्थादिष्वभ्यासेन चाभ्यासस्य (८।३।६४)—अभिषिषेच, अभ्यषिञ्चत् । असिचत्, असिक्त, असिचत । दाम्नी (३।२।१८२) इति ष्ट्रन्—सेक्त्रम् । सिचेः संज्ञायां कन् तुंही च (द० उ० ५।१०६)—सिंहः । सिचो यङि (८।३।११२) न षत्वम्—अभिसे-सिच्यते । एवन्तस्योपलक्षणम्[3]—असीसिचत्[3] ॥१५२॥

१३९. अनुदात्ताः स्वरितेतः ।

१४०. कृती छेदने । इतश्चत्वारः सेटः परस्मैपदिनश्च । कृन्तति । कर्तिता । सेऽसिचि (७।२।५७) इति कर्त्स्यति, कर्तिष्यति । कृत्तः, ईदित्त्वं यङ्लुगर्थम्[4]—चरीकृत्तः । निरुपपदात् क्विप् (द्र० ३।२।७६)[5]—कृत् । कर्तरी छेदनी । कृत्तिश्चर्म । कृतेरूः कृ च (उ०

---

१. इतोऽग्रे 'धात्वि ज्ञानार्थस्य ग्रहणं विद (२।१।३८) इत्यदन्तनिर्देशात् । अस्य तु विवेद' इत्यधिकम् ।

२ 'क्लेशैर्वित्तः' पाठ० ।

३. नैतद्वचनं क्वचिद् दृष्टम् । धातुवृत्तौ (पृष्ठ ३४६) स्मृतमिदम् ।

४. सकारादौ प्रत्यये इड्विकल्पनात् (द्र० ७।२।५७) यङः विभाषा (७।२।१५) इतीट्प्रतिषेधः सिद्ध एव, किमीदित्त्वेन । तदनर्थकं सत् यङ्लुकि इट्प्रतिषेधार्थमिति भावः ।

५. लिपिक्रमेणात्र '३।२।१७८' संख्या निर्दिष्टा, सा चिन्त्या ।

२।२१)—कृच्छ्रम्[1] क्रूरः । कृत्यशस्यां क्स्नः (उ० ३।१७)—कृत्स्नम् । कृतिभिदि (उ० ३।१४७) इति तिकन्—कृत्तिकाः । रुधादौ कृती वेष्टने (११२)—कृणत्ति ॥१५३॥

१४१. खिद परितापे[2]। खिन्दति भिदादौ (गण० ३।३।१०४) भिदा । रुधादौ खिद दैन्ये (७।२२)—खिन्ते । खिद्यत इति कर्मकर्तरि[3] दिवादौ (४।६१ दुर्गमते) वा ऽभ्यूह्य ॥१५४॥

१४२. पिश अवयवे पिशति । इपिशिहदि (द० उ० १।४७) इतीन्—पेशिर्मांसलेशः पिशुन, पिशितम्, पेशलः ॥१५५॥

१४३. उदात्ता उदात्तेतः ।

१४४. वृत् । मुचादयो वर्तिताः ।

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां तुदादयः सम्पूर्णाः[4] ॥

---

१. लौगाक्षिगृह्य (५।१) व्याख्यायां देवपालः कृच्छ्रशब्दसाधकं चारायणि-सूत्रमुदाजहार—"तथा च चारायणिसूत्रम्—'पुरुकते च्छ्रक्रूयो.' । पुच्छम् कृच्छ्रम् ।" विशेषोऽस्मदीये 'सं० व्या० शास्त्र का इतिहास' ग्रन्थे (पृष्ठ ७६) द्रष्टव्यः ।

२ 'परितापे परितापनक्रियायामिति क्षीरस्वामी' इति पुरुषकारोद्धृत पाठः (पृष्ठ ८५) । इह तु तथा नोपलभ्यते ।

३ पद गतौ सूत्रव्याख्यानान्ते (पृ० २१०) 'खिद दैन्य इति दुर्ग.' इत्यस्य व्याख्यायां 'खिद्यत इति कर्मकर्तरि तु वामन.' इत्युक्तवान् स्वामी । तत्रस्था टिप्पण्यप्यत्रानुसन्धेया ।

४ 'तुदादिर्गणः समाप्त.' पाठा० ।

# ॥ अथ रुधादिगणः ॥

१. रुधिर् आवरणे । आवरणं रोधनम् । इरः समानित् उभयपदिनश्च । रुधादिभ्यः श्नम् (३ । १ । ७८)—रुणद्धि । अनुस्वारीभूतो णत्वमनिक्रामति—¹रुन्द्धे. श्नसोरल्लोपः (६।४।१११) । इरितो वा (३।१।५७)—अरुधत् अरौत्सीत्, अरुद्ध । सिपि धातो रुर्वा (८।२।७४)—अरुणत् त्वम्, अरुणः । न रुधः (३।१।६४) इति कर्मकर्तरि चिण् नास्ति—अरुद्ध गौः स्वयमेव । रोद्धा । संपृचादौ (द्र० ३।२।१४२) अनुरोधी सप्तम्यां चोपपीडरुधकर्षः (३।४।४९)—व्रजे उपरुध्य, व्रजोपरोधं गाः पाययति । इषितिमिमदि (द० उ० ८।२६ कपाठः) किरच्—रुधिरम् ॥१॥

२. भिदिर् विदारणे । भिनत्ति, भिन्ते । अभिदत् अभैत्सीत् अभित्त । भेत्ता । भित्तं शकलम् (८।२।५९), भिन्नमन्यत् भिद्योद्ध्यौ नदे (३।१।११५) । काष्ठभित् । विदिभिदिच्छिदेः कुरच् (३।२।१६२)—भिदुरं पविः । भित्तिः । कृतिभिदिलतिभ्यः कित् (उ० ३।१४७)—भित्तिका । कृगॄशॄदृभ्यः (उ० ४।१४३) इतोः—भिदिर्वज्रम् । कर्मकर्तरि केलिमर् (द्र० ३।१।९६ का०) भिदेलिमं काष्ठम् । रक् (द्र०उ० २।१३)-भिद्रम् । इषितिमि (द० उ० ८।२६ कपाठः) इति किरच्—भिदिरम् । भिदादौ (३।३।१०४ गणसूत्र) भिदा विदारणे ॥२॥

३. छिदिर् द्वैधीकरणे । अद्वैधस्य पृथक्त्वे । छिनत्ति, छिन्ते । अच्छिदत् अच्छैत्सीत्, अच्छित्त । छिदुरम्, रज्जुश्छिदुरा । रक् (द्र० उ० २।१३)—छिद्रम् छिदिः परशुः । छिदिरः, छित्वरः । भिदादौ (३।३।१०४ गणसूत्रम्) । छिदा द्वैधीभावे, छित्तिरन्यत्र ॥३॥

४. रिचिर् विरेचने । विरेचनं निःसारणम् । रिणक्ति, रिङ्क्ते । अरिचत् अरैक्षीत्, अरिक्त । रिक्तः । रिक्थं धनम् । रेक्णस् । चुरादौ रिच वियोजनसम्पर्चनयोः (१० २१०)—रेचयति ॥४॥

५. विचिर् पृथग्भावे । विनक्ति, विङ्क्ते । अविचत्, अवैक्षीत

---

१ श्नसोऽकारलोपे, नस्यानुस्वारे, अनुस्वारस्य ययि परसवर्णः (८।४।५८) इति परसवर्णेन नकारः । स च पूर्वत्रासिद्धम् (८।२।१) इति न्यायेन 'झषस्तथोः' (८।२।२) इत्यनेन धत्वे कर्तव्येऽसिद्ध इति कृत्वा धत्वं न भवतीति भावः ।

अविक्त । विवेकः । जुहोत्यादौ (३।१३) वेवेक्ति, विविक्ते ॥५॥

६. क्षुदिर् संपेषे । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत् अक्षौत्सीत्, अक्षुत्त । क्षुण्णः । रक् ।(द० उ० १।१३)—क्षुद्रः ॥६॥

७. युजिर् योगे । युनक्ति, युङ्क्ते, अयुजत् अयौक्षीत्, अयुक्त । प्रोपाभ्यां युजेरयज्ञपात्रेषु (१।३।६४) तङ्—प्रयुङ्क्ते, उपयुङ्क्ते । नेह—द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति[1] । दिवादौ युज समाधौ (४।६७)—युज्यते । अस्यैव ग्रहणानि ॥७॥

८. अनुदात्ताः स्वरितेतः ।

९. उछृदिर् दीप्तिदेवनयोः, १०. उतृदिर् हिंसानादरयोः ।

११. उदात्तौ स्वरितेतौ । छृणत्ति छृन्ते । अच्छृदत् अच्छर्दीत्, अच्छर्दिष्ट । चङि—अचच्छर्दत् अचिच्छृदत्, उर्ऋत् (७।४।७) इति वा ऋकारः । सेऽसिचि कृत (तु० ७।२।५७) इति वेट्—छर्दिष्यति छर्त्स्यति । उदितो वा (७।२।५६)—छृत्वा, छर्दित्वा । छृण्णः । अर्चिशुचि (उ० २।१०८) इतीसिः—छर्दिस् । चुरादौ छर्द वमने (१०।४८)—छर्दयति । तृणत्ति तृन्ते । अतृदत्, अतर्दीत् । तर्त्स्यति, तर्दिष्यति । तृत्वा तर्दित्वा । तृण्णः । वितर्दिका वेदिः ॥८,९॥

१२. कृती वेष्टने । १३. उदात्त उदात्तेत् । कृणत्ति । कर्तित्वा । कर्त्स्यति कर्तिष्यति । कृत्तः । ईदित्वं यङ्लुगर्थम्[2]—चरीकृत्तः । कृतादयन्तविपर्ययश्च (उ० २।२६)—तर्कुः । तुदादौ कृती छेदने (६।१४०)—कृन्तति, कृत्तिः ॥१०॥

१४. ञिइन्धी दीप्तौ । १५. उदात्तोऽनुदात्तेत् । इन्द्धे, श्नान्नलोपः (६।४।२३) । इदृग्रम् भ्राष्ट्राग्न्योरिन्धे: (६।३।७० वा०) मुम्—भ्राष्ट्रमिन्धः, अग्निमिन्धः । अग्निमिन्धे—अग्नीत् । अवोदैध (६।४।२९) इत्येधः इध्मः । एधस्त्वेधेः ( १।२ ) असुनि (द० उ०

१. अनुपलब्धमूलमिदम् ।

२. एतद्विषये वृती धातौ (पृष्ठ १११ टि० २) तौदादिके कृती धातौ (पृष्ठ २५४ टि० ४) च टिप्पणं द्रष्टव्यम् ।

४।१८१)। वाविन्धे (उ० २।२६) रक्—वीध्रं विमलम्, नीध्र पटल-प्रान्त ॥११॥

१६. खिद दैन्ये। १७. विद विचारणे। १८. अनुदात्तावनुदात्तेतौ। खिन्त्ते। दिवादौ (४।६१ दुर्गमते) खिद्यते। तुदादौ (६।१४०) खिन्दति। विन्त्ते। नुदविदोन्दत्रा (८।२।५६) इति वा निष्ठानत्वम्—वित्तः वित्त ॥१२, १३॥

१९. शिष्लृ विशेषणे। विशेषण गुणान्तरोत्पादनम्। इत इरव्यारोऽनिट परस्मैपदिनश्च। विशिनष्टि। व्यशिषत्। कर्मणि तङि क्सः (द्र० ३।१।४५)—व्यशिक्षत। विशिष्यते। चुरादौ शिष असर्वोपयोगे (१०।२११)—शेषयति। शिष्यत इति शेषः ॥१४॥

२० पिष्लृ संचूर्णने। चौरस्य पिनष्टि, जासिनिप्रहण (२।३।५६) इति षष्ठी। अपिषत्, अपिष्ट, अपिक्षत। पेष्टा। शुष्कचूर्णरूक्षेषु पिष (३।४।३८) णमुल्—शुष्कपेषं[1] पिनष्टि। उणादौ (द्र० दश० उ० वृत्ति ३।३४) पिनाकपिण्याकौ ॥१५॥

२१. भञ्जो आमर्दने। भनक्ति। भङ्क्ता। अभाङ्क्षीत्। भञ्जेश्च चिणि (६।४।३३)—अभाजि, अभञ्जि। अपनम (७।४।८६) इत्यभ्यासस्यानुस्वारः—बम्भज्यते। जान्तनशां विभाषा (६।४।३२) इति वा नुम्—भक्त्वा भङ्क्त्वा। भञ्जभासमिदो घुरच् (३।२।१६१)—भङ्गुरः। घञ् (द्र० ३।३।१९) भज्यतेऽनेनेति भङ्गस्तरङ्गः। क्ते—भग्न। भङ्गि ॥१६॥

२२. भुज पालनाभ्यवहारयोः। अभ्यवहारो भोजनम्। भुनक्ति भुवम्। भुजोऽनवने (१।३।६६) तङ्—भुङ्क्तेऽन्नम्। भोक्ता। गतिबुद्धिप्रत्यवसानार्थ (१।४।५२) इति कर्मसंज्ञा—भोजयति चैत्रं सक्तून्। भोज्यं भक्ष्ये (७।३।६९) साधु, भोग्यमन्यत्र[2]। भोजोऽचि (द्र० ३।१।१३४) भुजन्युब्जौ पाण्युपतापयोः (७।३।६१), अन्यत्र भोग सुगम। दिव्यभोज,

1. 'तिलपेषम्, तैलपेषम्' पाठान्तरे। 2. 'भोग्य' पा०।

भुज्युर्गन्धर्वः[1] । रुचिभुजिभ्यां किष्यन् (उ० ४।१७९)—भुजिष्यो दासः । तुदादौ भुजो कौटिल्ये (६।१२१)—निर्भुजति ॥१७॥

२३. अनुदात्ता उदात्तेतः ।

२४. तृहि हिसि हिंसायाम् । इतोऽन्यौ सेटः परस्मैपदिनश्च । तृणह इम् (७।३।९२)—तृणेढि, तृण्ढः, तृंहन्ति । तृण्ढि । तृहेः श्नो हलोपश्च (उ० ५।८)—तृणम् । हिनस्ति । हिन्धि, धि च (८।२।२५) इति सलोपः । तिप्यनस्तेः (८।२।७३)—अहिनद् भवान् । सिपि धातो रुर्वा (८।२।७४)—अहिनन् त्वम्, अहिनस्त्वम् । निन्दहिंस (३।२।१४६) इति हिंसकः । नमिकम्पि (३।२।१६७) इति रः—हिंस्रः । हिंसा । हिंसीरो (द्र० उ० ५।१८) गलाकर्षणशृङ्खला[2] ॥१८,१९॥

२५. उन्दी क्लेदने । उनत्ति । उन्द्धि-उन्धि । घञि—पृषोदरादि (६।३।१०९) इत्योदः क्लेदनम् । रुदविदोन्दत्रा (८।२।५६)—इति वा नत्वम्—समुन्नम् समुत्तम् । उन्देरिच्चादेः (उ० १।१२)—इन्दुः । रक् (द्र० उ० २।१३)—उद्रः । उन्दुरः मूषकः[3] । उदकम् । उन्देर्नलोपश्च २।७६) इति युच्—ओदनम् । उदलः प्रस्रवणम् ॥२०॥

---

१. अत्र लिपिदोषेण हैमोणादिसूत्रसंख्या ८०२ तुलनाय निर्दिष्टा । सत्यपि भुज्युपदे नायमर्थस्तत्र निर्दिश्यते । भुज्यु पदं तु पञ्चपाद्यां (१।२१) दशपाद्यां (१।२३५) उभयत्र साध्यते ।

२. महाभाष्ये द्विःकृत्वा सिंहो हिंसेर्वर्णव्यत्ययेन निष्पादितः (द्र० हयवरट् सूत्रे, तथा ३।१।१२३) । तथैव च निरुक्तेऽप्युक्तम्—हिंसेर्वा स्याद्विपरीतस्य ३।१८॥ उणादौ (५।६२) तु सिंचेर्व्युत्पादितः । उभयमप्यर्थप्रदर्शनपरं निर्वचनम् । वस्तुतस्तु सिंहशब्दो सिंहतेरेव निष्पद्यते । सिंहिम् काशकृत्स्नधातुपाठे पठ्यते (द्र० पृष्ठ ६६) । तस्मादत्र केनचिन्मूर्खेण हिंस इति भूतपूर्वशब्दस्य स्थाने वर्णव्यत्ययेन सिंह इत्युक्तं, तदेव च भाषायां प्रसिद्धीभूतमिति कल्पना शक्या उद्भावयितुम् । वस्तुतस्तु सर्वत्रैव वैयाकरणा आगमादेशादिना मूलभूतां प्रकृतिं (या देशे काले प्रयोगात्लुप्ताऽभूत्) स्मारयन्ति इत्यन्यत्रास्माभिर्विस्तरेण प्रपञ्च्यते ।

३. मूषक इत्यर्थः । द्र० अमरकोष २।५।११,१२ । तत्र 'उन्दुरुः' इत्युकारान्तोऽपि पठ्यते । द्र० हैमोणादि ४२३ ।

२६. अञ्जू व्यक्ति म्रक्षण गतिषु । व्यक्तिः प्रकटता, म्रक्षणं घृतादिसेकः । अनक्ति । अङ्क्ता, अञ्जिता । रिमङ्पूङ्रञ्ज्वशा सनि (तु० ७।२।७४)—अञ्जिजिषति । अञ्जेर्ण्यंति आज्यम् इष्यते (द्र० ३।१।१०९ भाष्यम्) । अक्तः । अतन्यञ्जि (४।२) इत्यलिच्—अञ्जलिः । अञ्जिष्ठुस्तिलादि । अङ्क्त्वा, अक्त्वा, अञ्जित्वा ॥२१॥

२७. तञ्जू संकोचने । तनक्ति । तङ्क्त्वा, तक्त्वा, तञ्जित्वा । तक्तः । तञ्चू इति द्रमिडाः—तक्त्वा, तञ्चित्वा ॥२२॥

२८. ओविजी भयचलनयोः । विनक्ति । उद्विग्नः । उद्विजते तुदादौ (६।११) ॥२३॥

२९. वृजी वर्जने । वृणक्ति । अवृणक् । अपवृक्तः । वर्ग । वृजिनं पापम् । वृची वरण इति दौर्गाः—वर्कः । अदादौ (२।२० दुर्गमते) वृक्ते ॥२४॥

३०. पृची संपर्के । पृणक्ति । सम्पृक्तः । घञ् (द्र० ३।३।१९) सम्पर्कः, मधुपर्क । अदादौ (२ २१) पृक्ते । चुरादौ पृज पृची संपर्चने (१०।२०८) वा णिच्—संपर्चयति संपर्चति[1] ॥२५॥

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ

क्षीरतरङ्गिण्यां

रुधादिगणः

सम्पूर्णः[2]॥



---

१. अत्र 'वृत्' इति न पठ्यते । धातुवृत्तौ सायणः वृत्करणं पठित्वा ऽऽह—"धातुपारायणे तु गणसमाप्तिर्नेष्यते । तेन वृणक्ति पुनक्ति इति सिध्यति" (पृष्ठ १५४) ।

२. 'इति क्षीरस्वाम्युत्प्रेक्षितक्षीरतरङ्गिण्यां धातुवृत्तौ रुधादिगणः सम्पूर्णः' पाठा० ।

# ॥ अथ तनादिगणः ॥

१. तनु विस्तारे । इतः षड् सेट उभयपदिनश्च । तनादिकृञ्भ्य उः (३।१।७९) तनोति तनुते, तन्वः तनुवः, तन्मः तनुमः । तनोतेर्यकि (६।४।४४) इति तायते, तन्यते । अतनीत् अतानीत् (द्र० ७।२।७) । तनादिभ्यस्तथासोः (२।४।७९) सिज्लुग्वा—अतत, अतथाः, वनतितनोत्यादीनाम् (६।४।३७) इत्यनुनासिकलोपः; अतनिष्ट, अतनिष्ठाः । नहिवृति (६।३।११६) इति क्वौ दीर्घः—परीतत् । तत्वा, तनित्वा । ततः, विततः । सनीवन्तर्ध (७।२।४९) इति वेट्—तितनिषति, अनिट्पक्षे—तनोतेर्विभाषा—(६।४।१७) दीर्घः—तितांसति तितंसति । तनोतेर्णः (द्र० ३।१।१४० वा०)—अवतानः । घञि (३।३।१८,१९) वितानो यज्ञः, सन्तानः, पकतानः । भृमृशी (उ० १।७) इत्युः—तनुः । कृषिचमितनि (उ० १।८०) इत्यूः—तनूः । सितनिगमि (उ० १।६९)—इति तुन्—तन्तुः । तुक् । तोकमपत्यम्[1] । सानसिवर्णसि[2] (उ० ४।१०७) इति तण्डुलम्[2] । तम्पुविभ्यां वसरच् (तु० उ० ३।७५)—तसरः सूत्रवेष्टनम्[3] । त्रसरस्तु पट्टसूत्रम्[3] । तनिमृङ्भ्यां किच्च (उ० ३।८८) ततम् । ततः (द्र० उ० ३।१०) पिता । तनेः क्यन् (तु० द० उ० ४।५६)—तनयः । ष्ट्रन् (दश० उ० ८।७५)—तन्त्रम् । न क्तिचि दीर्घश्च (६।४।३९)—तन्तिः । तन्त्रीः । क्तिनि (३।३।९४)—तति, पङ्क्तिः । तनोतेर्डउः सन्वच्च—(उ० ५।५२)—तितउः परिपवनम्[4] । तनेरनश्च व· (तु० उ० २।९३)—त्वक् । वा ल्यपि (६।४।३८) इत्यनुनासिकलोपः—प्रतत्य प्रतन्य ॥१॥

२. षणु दाने । सनोति, सनुते । सातः सनित्वा । सायते सन्यते । असनीत्, असानीत् । असात, असनिष्ट । असाथाः असनिष्ठाः ।

---

१. तुलनीयम्—हैमधातुपारायणम् ८।२॥

२. 'तृन् लुटि (उ० ५।१६) इत्युलच्, तण्डुलम्' इति पाठा० ।

३. पट्टोभयत्रार्थनिर्देशे विपर्यासः सञ्जात इति प्रतीयते । अमरकोशे 'त्रसरः सूत्रवेष्टनम्' (३।२।२४) इति पठ्यते । हैमोणादिवृत्तौ 'तसरः कौशेयवस्त्रम्' इति निर्दिश्यते । अयमेव 'तसरः' सम्प्रति 'टसर' इति भाषायां प्रयुज्यते । अत्र दशपाद्युणादिवृत्तिः ८।५५ अवलोकनीया । ४. 'तितउ चालनी' पाठा० ।

सनीवन्तर्ध (७।२।४९) इति सिसनिषति सिषासति । सनोतेरनुनासिकलोप आत्वं च (द्र० ६।४।४२)—सातः । न क्तिचि दीर्घश्च (६।४।३९)—सन्तिः । लोपश्चास्यान्यतरस्याम् (६।४।४५)—सतिः । ऊतियूति (३।३।९७) सातिर्दानम् । ञुण् (द्र० उ० १।३)—सानुः ॥२॥

३. क्षणु हिंसायाम् । क्षणोति, क्षणुते । क्षत्वा क्षणित्वा । ह्म्यन्तक्षण (७।२।५) इति वृद्धिर्नास्ति अक्षणीत् । क्षतः, क्षतिः । क्षिणु इति दुर्गः—क्षिणोति, क्षिणः, क्षितिः ॥३॥

४. ऋणु गतौ । अर्णोति, अर्णुते ॥४॥

५. तृणु अदने । तृणोति, तृणुते । तृत्वा तृणित्वा । तृणु मर्दने इति नन्दी ॥५॥

६. घृणु दीप्तौ । घृणोति, घृणुते । घृत्वा घृणित्वा । घृणिः, घृणा, घृतम् ॥६॥

७. उदात्ताः स्वरितेतः । एते सार्वधातुके संदिग्धगुणाः[1]—घर्णोति, तर्णोति, घर्णोति ।

८. वनु याचने । ९. मनु अवबोधने । १०. उदात्तावनुदात्तेतौ । वनुते । अवनत । वत्वा, वनित्वा । वतः । ग्लास्नावनुवमां च (१।५२६) इति मित्त्वे वा—वनयति वानयति । अमानुपसर्गाद् (१।५५५) इत्यनुवृत्तेः, सोपसर्गात् नित्यम्-प्रवनयतीति प्राग् (१।५५६) उक्तम् । वनिता । वण्डः (द्र० उ० १।११४) । वनिष्णु[2] । स्यादौ [illegible] च नोपधे (१।५४२)—यमनि । मनुते । मत्वा मनित्वा । मननम् । अमत अमनिष्ट, अमथाः अमनिष्ठाः । दिवादौ मन ज्ञाने (४।६६)—मन्यते ॥७॥

११. डुकृञ् करणे । १२. अनुदात्तः । करोति । कुरुते,

---

१. तदपरं प्रक्रियाकौमुद्यां (पृ० २७८) धातुवृत्तौ (पृ० २४७) च । कारकस्वधातुपाठीयकक्ष्यटीकाकारमतेन यथाभाव उदाह्रियते । यथा—क्षिणोति, अर्णोति, तर्णोति, घृणोति, क्षिणोति, छिणोति, धिणोति । पृ० २११, २४० ।

२. वनोऽपि, इ पाठ' इत्यधिकं क्वचित् ।

करोतेः (द्र० ६।४।११०) इत्युत्वम्, तनादिकृञ्भ्य उ (३।१।७९) इति पृथक् कृञो ग्रहणादन्यत् तनादिकार्यं नास्ति[1]। अनुपराभ्यां कृञः (१।३।७९) न तङ्—अनुकरोति, पराकरोति। गन्धनादौ (द्र० १।३।३२) तङ्—श्येनो वर्तिकामपकुरुते[2]। अधेः प्रसहने (१।३।३३)—तं ह्यधिचक्रे। वेः शब्दकर्मणः (१।३।३४)—श्वा विकुरुते स्वरम्[3]। अकर्मकाच्च (१।३।३५)—विकुर्वते दान्ताः। सम्पर्युपेभ्यः करोतौ भूषणे, समवाये च (६।१।१३७-१३८)—सुट् संस्कुरुते, परिष्कुरुते, उपस्कुरुते। नित्यं करोतेः (६।४।१०८) इति म्वोर्विकरणलोपः—कुर्वः कुर्मः। कृसृभृवृ (७।२।१३) इति लिटि नेट्—चकर्थ, चकृव, चकृम। ऋद्धनोः स्ये (७।२।७०) इट्—करिष्यति। ये च (६।४।१०९) इति विकरणलोपः—कुर्यात्, न भकुर्छुराम् (८।२।७९) इति दीर्घो नास्ति। हृक्रोरन्यतरस्याम् (१।४।५३) कर्मसंज्ञा—घटं कारयति चैत्रं, चैत्रेण वा। तिरोऽन्तर्धौ, विभाषा कृञि (१।४।७१-७२) गतिसंज्ञा, तिरसः (द्र० ८।३।४२) गतौ

1. कृतमदन्यत् तनादिकार्यं करोतेर्न भवतीति न व्यक्तीकृतं क्षीरस्वामिना। महाभाष्यकृता त्वत्र सर्वमन्यत्तनादिकार्यमुपन्यस्य विशेषाभाव उक्तः (द्र० ३।१।७९)। तस्माद् भाष्यकृन्मते कृञ्ग्रहणं व्यर्थमेव। जैनेन्द्रमहावृत्तिकृता तूक्तम्—'तनादिभ्यस्तथासोः (जै० १।४।४८) इति विभाषया सेर्लुक् (सिचो लुङ् न) भवति। अकृत, अकृथाः। न चानुपक्षे (सिचो लुगभावपक्षे) 'प्राद् गोः' (जै० ५।३।४५)—(ह्रस्वादङ्गात् अष्टा० ८।२।२७) इति स (लोपः) सम्भवति। तस्मिन् प्राप्ते उप (सिचो लुकः) आरम्भात् सेः श्रवणं प्रसज्येत इति। इदं चाविचारितरमणीयम्। जैनेन्द्रव्याकरणानुसारमपि 'प्राद् गो.' (जै० ५।३।४५) इत्यस्य 'पूर्वत्रासिद्धम्' (जै० ५।३।२७) इति प्रकरणे विधानात्। तेन प्राद्गोरिति वा ह्रस्वादङ्गात् इति वा सिचः सकारलोपस्यासिद्धत्वात् नहि तत्प्राप्तौ विभाषा सिचो लोप आरभ्यते, येन पक्षे सकारश्रवणं प्रसज्येत। अत एव महाभाष्यकृता इदमपि वैशिष्ट्यं निराकृतम्। वयं त्वनुमिनुमः—कृञो भ्वादावेव पाणिनीयः पाठः, न तनादौ। तथा सत्येव 'तनादिकृञ्भ्य उः' (३।१।७९) सूत्रे पृथक् कृञो ग्रहणमुपपद्यते। भाष्यव्याख्यानादनुमीयते भगवतः पतञ्जलेः प्रागेव कृञः तनादौ प्रक्षेपोऽभूदिति। अत्र दुग्करणे (१।६३६) सूत्रस्य टिप्पणमप्यवलोकनीयम्।

2. 'अपस्कुरुते' पाठा०। 3. क्वचित् 'स्वरम्' नास्ति।

सत्यम्—तिरस्कृत्य, तिरः कृत्वा । कृभ्वस्तियोगे (५।४।५०) च्विः—शुक्लीकरोति । मिथ्योपपदात् कृञोऽभ्यासे (१।३।७१) तङ्—पदं मिथ्या कारयते । कृत्रिमम् (द्र० ३।३।८८) । विभाषा कृवृषोः (३।१।१२०) इति क्यप्, कार्यम् । अतः कृकमि (८।३।४६) इति सत्वम्—अयस्कारः । कृञो हेतुताच्छील्यानुलोम्येषु (३।२।२०) टः—विद्या यशस्करी । दिवाविभा (३।२।२१) इत्यच्—दिवाकरः । कर्मणि भृतौ (३।२।२२)—कर्मकरः । स्तम्बशकृतोरिन् (३।२।२४) स्तम्बकरिर्व्रीहिः[1] शकृत्करिर्वत्सः । मेघर्तिभयेषु कृञः (३।२।४३) खच्—मेघंकरः । क्षेमप्रियमद्रेऽण् च (३।२।४४)—क्षेमंकरः, क्षेमकारः । आढ्यसुभग (३।२।५६) इति ख्युन्—आढ्यंकरणम् । कर्तृकर्मणोश्च भूकृञोः (३।३।१२७) खल्—ईषदाढ्यंकरः, स्वाढ्यंकरः । सुकर्मपाप (३।२।८९) इति क्विप्—सुकृत् । राजनि युधिकृञः (३।२।९५) क्वनिप्—राजकृत्वा । सहे च (३।२।९६)—सहकृत्वा । अलंकृञ्-निराकृञ् (३।२।१३६) इतीष्णुच्—अलंकरिष्णुः, निराकरिष्णुः । कृञः श च (३।३।१००)—क्रिया, कृत्या, कृतिः । प्रश्नाख्यानयोरिञ् च (कातन्त्र कृदन्त ६०७, सर० कण्ठा० २।४।२६१)—कां कारिमकार्षीः ? इमां कारिमकार्षम्, कारिं कारम् । ण्यन्तात् (द्र० ३।३।१००) कारणा । भिदादौ (गण० ३।३।१०४) कारा बन्धने । कर्मण्याक्रोशे कृञः खमुञ् (३।४।२५)—चौरंकारमाक्रोशति । स्वादुमि णमुल् (३।४।२६)—स्वादुंकारं भुङ्क्ते । अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् (३।४।२७)—अन्यथाकारम्, एवंकारम् । यथातथयोरसूयाप्रतिवचने (३।४।२८)—यथाकारमहं किं तवानेन ? तिर्यच्यपवर्गे (३।४।६०) तिर्यक्कृत्य, तिर्यक्कारम्, समाप्येत्यर्थः । स्वाङ्गे तस्प्रत्यये कृभ्वोः[2] (सू० ३।४।६१)—मुखतःकृत्य, मुखतःकृत्वा, मुखतःकारम् । नाधार्थप्रत्यये च्व्यर्थे (३।४।६२)—नानाकृत्य, नानाकारम्, द्विधाकृत्य द्विधाकारम् । भ्वादौ डुकृञ् करणे (१।६३९)—करति, करते । स्वादौ कृञ् हिंसायाम् (५।७)—कृणोति कृणुते । कृवापाजि (उ० १।१) इत्युण्—कारुः, कारूः । कृगोरुच्च (उ० १।२४)—कुरुः, कुरूः । कृञः क्रतुः (उ० १।७६)—क्रतुः । अपदन् कसभर-

1. 'व्रीहिः शकृत्करिः' क्वचिन्नास्ति ।
2. 'कृभ्वोः' सर्वकोशेषु पाठः ।

अः (उ० १।२९)—करण्डः । कृहृभ्यामेणुः[1] (उ० २।१०)—करेणुः, करेणुः । कृदाधारा (उ० ३।४०) इति कः—कर्कः । कृधूमदिभ्यः कित् (उ० ३।७३) इति सरन्—कृसरः । कृञ उच्च (४।३३) इतीरन्—कुरीरम् । कृञ उदीच्या कारिषु (तु० उ० ४।१२९) इतीञ्—कारिः । मनिन् (दश० उ० ६।७३)—कर्म । कृञः पासः (उ० ५।४५)—कर्पासः[2] । कृपेः कुः—कूर्पासः कञ्चुकम्[3] । करोतेर्द्वे च (तु० ६।१।१२ भाष्यम्)—चक्रम् ॥८॥

## भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां तनादिगणः सम्पूर्णः ॥[4]



१. 'मेणुः' पाठा० ।

२. दशपाद्यां तु 'कृञः पासन्' (६।१०२) इति 'कार्पासः' पदं साध्यते ।

३. क्वचिदयं पाठो नास्ति । अत्र 'कृपेः' इत्यपपाठः प्रतीयते । अमरटीकायां तु 'कूर्परेऽस्यते कूर्पासः स्त्रीणां कञ्चुलिकाख्यः' इत्याह (२।६।११८) । हैमोणादौ (५८३) सरस्वतीकण्ठाभरणे (२।२।१७८) च 'कुर' धातोः पासप्रत्ययो विधीयते ।

४. 'इति क्षीरस्वाम्युत्प्रेक्षितक्षीरतरङ्गिण्यां धातुवृत्तौ तनादिर्गणः' इति पाठा० ।

# ॥ अथ क्र्यादिगणः ॥

१. डुक्रीञ् द्रव्यविनिमये । विनिमयः परिवर्तः । इतः समानिटः । क्र्यादिभ्यः श्ना (३।१।८१)—क्रीणाति, क्रीणीते, ई हल्यघोः (६।४।११३) । क्रीणन्ति, श्नाभ्यस्तयोरातः (६।४।११२) लोपः । परिव्यवेभ्यः क्रियः (१।३।१८) तङ्—परिक्रीणीते । क्रीङ्जीनां णौ (६।१।४८) इति आत्वम्—क्रापयति । क्रेता । क्रय्यस्तदर्थे (६।१।८२), क्रयोऽन्यः । कर्मण्यनिर्विक्रियः (तु० ३।२।९३)—सोमविक्रयी[1] । क्रिय इकन् (उ० २।४४)—क्रयिकः ॥१॥

२ प्रीञ् तर्पणे कान्तौ च । कान्तिरभिलाषः । प्रीणाति, प्रीणीते । धूञ्प्रीञोर्नुक् (७।३।३७ वा०)—प्रीणयति । इगुपधज्ञा (३।१।१३५) इति कः—प्रियः । दिवादौ प्रीङ् प्रीतौ (४।३४)—प्रीयते ॥२॥

३ श्रीञ् पाके । श्रीणाति, श्रीणीते । श्रेता । श्रीतः ॥३॥

४. मीञ् हिंसायाम् । मीनाति, मीनीते । हिनु मीना (८।४।१५) इति णत्वम्—प्रमीणाति । सनि मीमा (७।४।५४) इतीस्—मित्सति । मीनातिमिनोतिदीङां ल्यपि च (६।१।५०) इत्यात्वम्—प्रमापयति, प्रमाय । मिमीलियां खल्चोः प्रतिषेधः (तु० ६।१।५० वा०)—ईषत्प्रमयः प्रमयः । मीतः—उणादौ मीनातेरूरः (द० उ० ८।२८)—मयूरः ॥४॥

५. षिञ् बन्धने । सिनाति, सिनीते । असैषीत् । स्तौतिण्योरेव षणि—(८।३।६१) इति नियमात् सिसीषति । स्वादौ (५।२) सिनोति । अस्यैव ग्रासकर्तृकस्य (द्र० ८।२।४४ वा०) सिनो ग्रासः[2] स्वयमेव ॥५॥

६. स्कुञ् आप्रवणे । आप्रवणमुद्धरणम् । सौत्रोऽयम् इत्याचार्याः[3] । स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च (तु० ३।१।८२)—स्कुनाति स्कुनीते, स्कुनोति स्कुनुते । स्कोता ॥६॥

---

१. 'मांसविक्रयी' पाठा० ।

२. 'ग्रामः' क्वचिदपपाठः ।

३. 'धात्वार्थाः' पाठा० । द्र० धातुवृत्तिः (पृष्ठ ३६४) ।

७. युञ् बन्धने । युनाति, युनीते । योता । अदादौ यु मिश्रणे (२।२५)—यौति, यविता । चुरादौ यु जुगुप्सायाम् (१०।१५७)—यावयते ॥७॥

८. अनुदात्ताः ।

९. क्नूञ् शब्दे । इतो गृपर्यन्ता(९।२७)श्चिवातिः सेटः । क्नूनाति, क्नूनीते, क्नविता ॥८॥

१०. द्रूञ् हिंसायाम् । द्रूणाति, द्रूणीते । द्रविता । द्रूनः[१] । स्वादौ (५।३३ दुर्गमते) द्रुणोति ॥९॥

११. पूञ् पवने । पवनं शुद्धिः । प्वादीनां ह्रस्वः (७।३।८०)—पुनाति, पुनीते । पूञो विनाशे (८।२।४४ वा०) निष्ठानत्वम्—पूना यवाः, पूतोऽन्यत्र । निरभ्योः पूल्वोः (३।३।२८) घञ्—निष्पावो व्रीहिभेदः । भ्वादौ पूङ् पवने (१।६९१)—पवते । दिवादौ[२] पूयते । पोत्रम् । पवित्रम् । पुत्रः । पोतः । नप्तृनेष्टृ (उ० २।९५) इति पोता ऋत्विक् ॥१०॥

१२. लूञ् छेदने । लुनाति, लुनीते । लविता । सनि नेट् (द्र० ७।२।१२)—लुलूषति । अलीलवत् । लिलावयिषति ओः पुयण्ज्यपरे (७।४।८०) इत्यभ्यासस्येत्त्वम् । ल्वादिभ्यश्च (द्र० ८।२।४४) इति—निष्ठानत्वम्—लूनः । ऋकारल्वादिभ्यः क्तिन् निष्ठावत् (८।२।४४ वा०)—लूनिः । अर्तिलूधू (द्र० ३।२।१८४ इत्र) इत्यनेन—लवित्रम् । धापॄवस्य॰ शिभ्यो (द्र० दश० उ० ३।२७) इति लशुनकः । लुना । इषियुधि (उ० १।१४६) इति मक्—लोमः[३] । ग्रहवृदृ० निश्चिगमश्च (३।३।५८) लवथः । नामन् सामन् (दश० उ० ६।७४) इति लोम । निरभ्योः पूल्वोः (३।३।२८) घञ्—अभिलावः ॥११॥

१३. स्तॄञ् छादने । स्तृणाति, स्तृणीते । आस्तरिता आस्तरीता—वृतो वा (७।२।३८) इतीटो दीर्घः । लिङ्सिचोरात्मनेपदेषु (७।२।४२) वेट्—आस्तरिषीष्ट आस्तीर्षीष्ट, आस्तरिष्ट आस्तीर्ष्ट । इट् सनि वा (७।२।४१)—आतिस्तीर्षति आतिस्तरिषति आतिस्तरीषति ।

१. 'द्रविडः' इत्यपपाठः क्वचित् । द्र० पा० ७।२।११॥

२. क्षीरतरङ्गिण्यां दिवादौ न दृश्यते । ३. 'निष्कोमा' इत्यधिकः क्वचित् ।

अत् स्मृदृत्वरप्रथ (७।४।९५) इति चङ्यभ्यासस्यात्त्वम्—अतस्तरत्। आस्तीर्णः। स्तीर्णिः। प्रे स्त्रोऽयज्ञे—(३।३।३२) घञ् प्रस्तारः, यज्ञे तु प्रस्तरो हविषाम्। प्रथने वावशब्दे (३।३।३३)—पटस्य विस्तारः, शब्दे—विस्तरः। छन्दोनाम्नि च (३।३।३४)—विष्टारपङ्क्तिः। वृक्षासनयोर्विष्टरः (८।३।९३), अवे तॄस्त्रोर्घञ् (३।३।१२०)—अवस्तारः। स्वादौ स्तृञ् (५।६)—विस्तृणोति। विस्तृतः। स्तरो विस्तरभेदः। स्तरी—(द्र० उ० ३।१५८) मेघः शय्या च—स्तरीमास्तीर्य ॥१२॥

१४. कॄञ् हिंसायाम्। कृणाति, कृणीते। कीर्णः। कीर्णिः। कृञ् इत्येके ॥१३॥

१५. वॄञ् वरणे। वृणाति, वृणीते। वूर्णः। वूर्णिः। विवरः। कॄवॄदारिभ्य उनन् (दशा० उ० ५।५१) वरुणः। वृञ् इति नन्दी ॥१४॥

१६. धूञ् कम्पने। धुनाति, धुनीते। स्वरतिसूति (७।२।४४) इति वेट्—विधोता विधविता। धूञ्प्रीणोर्नुग् (७।३।३७ वा०)—विधूनयति। स्तुसुधूञ्भ्यः परस्मैपदेषु (७।२।७२)—अधावीत्। धूतः। धूतिः। स्वादौ धूञ्धुञौ (५।१० पाठान्तरे) धूनोति, धुनोति। अवधूतः, विधुतः। चुरादौ (१०।२२४) धूनयति। तुदादौ धू विधूनने (६।९८)—धुवति ॥१५॥

१७. शॄञ् हिंसायाम्। शृणाति शृणीते। शीर्यते। शीर्णः। शीर्णिः। शृदॄप्रां ह्रस्वो वा (७।४।१२)—विशशरुः विशश्रुः। लषपतपद (३।२।१५४) इत्युकञ्—विशारुकः। शृवन्द्योरारुः (३।२।१७३)—शरारुर्हिंस्रः। उणादौ शरारिराटिः[1]। किशॄयोः शिपः (उ० १।४)—किशारुर्धान्यशूकम्। शृस्निहि (उ० १।१०) इत्युः—शरुर्दिग्धः[2]। आङ्परयोः खनिशॄभ्यां डिच्च (उ० १।३३)—परशुः। शृणातेर्ह्रस्वश्च (उ० १।१२४) गश्च नुट् च—शृङ्गम्। शृङ्गारः, (द्र० उ० ३।१२६) शिशिरम् (द्र० उ० १।५३)। शरोऽपि (द्र० ३।१।१३४)। शरणम्। शृङ् शार्ङ्गौ (उ० १।१२७)—शार्ङ्गः[3]। शृदृभसोऽदिः (उ० १।१३०)—शरद्। कृगृशॄ

१. द्र० दैव धातुप्रदीप ५।२४॥

२. 'वज्र' पाठः।

३. 'शार्ङ्ग.' इत्यपरपाठः क्वचित्।

वः—(उ० १।१५५)—शर्वः । कॄगॄशॄवृञ्चतिभ्यः ष्वरच् (दश० उ० ८।४७)—शर्वरी । सृशॄभ्यामू च (तु० दश० उ० ७।६)—शूर्पः । शिरः करन् (दश०उ० ८।७०)—शर्करा । शॄपॄभ्यां किद् (द० उ० ६।१०) इतीषन्—शिरीषम् । मनिन् (दश० उ० ६।७२)—शर्म । शॄपॄवॄञ्जां द्वे कक् चाभ्यासस्य (उ० ४।१९)—शर्शरीका । कॄशॄपॄकटि (उ० ४।३०) इतीरन्—शरीरम् । असुन् कित् (द० उ० ४।१९४) शिरः । कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च—(उ० ४।१४३) इतीन् कित्—शिरिः । शिरः[1] शकुनौ (तु० दश० १।५६ कपाठः) इण् शारिः, शारिका । ऋदोरप् (३।३।५७)—शरः । शॄ वायुवर्णनिवृतेषु (३।३।२१ वा०) घञ्—शारो वर्णो वायुश्च । नीशारो हिमानिलापहं वस्त्रम्—गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥१६॥

१८. पॄ पालनपूरणयोः । पृणाति । शॄदॄप्रां ह्रस्वो वा (७।४।१२)—निपपरुः निपप्रुः । ऋदोरप् (३।३।५७)—परः । वा दान्तशान्त (७।२।२७) इति ण्यन्तात् पूर्णः. पूरितः । न ध्याख्यापॄमूर्छिमदाम् (८।२।५७)—पूर्तः, पूर्तिः । पूरी आप्यायने (४।४१) इत्यस्मात् पूर्णः । आक्रमास (३।२।१७७) इति क्विप्—पूः । पॄभिदि (उ० १।२३) इति कुः—पुरु बहु । पुरः कुषन् (उ० ४।७४)—पुरुषः । धर्तिपॄवपि—(उ० २।११७) इत्युसिः—परुः पर्व । धापॄवस्यज्यतिभ्यो नः (उ० ३।६)—पर्णम् । शॄपॄभ्यां किद् (दश० उ० ६।१०)—पुरीषम् । पॄकलिभ्याम (दश० उ० ६।१५) उषच्—परुषम् । स्नामदि (उ० ४।११३) इति पनिप्—पर्व । जुहोत्यादौ (३।४) पिपर्ति, चुरादौ पॄ पूरणे (१०।१५)—पारयति ॥१७॥

१९. मॄ हिंसायाम् । मृणाति ॥१८॥

२०. वॄ[2] भॄ भरणे[3] । वृणाति, भृणाति ॥१९, २०॥

---

१. दशपाद्या. कपाठे 'शार' पाठः । अन्यत्र श. । परन्तु शर्करामाशके दशपादीपाठे 'शिरः करन्' (८।७०) इत्यत्र 'शिरः' इत्येव पठ्यते ।

२. काशिकायां (३।३।२१) उद्धृतमिदं पद्यार्धम् ।

३. अत्र 'वृ वरणे' इत्यन्येषां पाठः । पुरुषकारस्त्वाह—'वॄ वरणे, वॄन् वरणे ......तत्र चाद्य पवर्गतृतीयादि बहवः पठन्ति । वॄ भरण इति स्वामि-शाकटायनौ' इति (पृष्ठ ४१) । यावमित्यस्यार्थः 'वॄ वरणे' इत्यस्य स्थाने 'वॄ वरणे'

२१. मॄ मर्जने च[1] । मर्जन पाकः[1] ॥

२२. दॄ विदारणे । दृणाति । दीर्णः दीर्णिः । विद्दरुः विदद्रुः । अत् स्मृद्दृत्वर (७।४।९५) इति व्यद्ददरत् । दृसनिजनि (उ० १।३) इति ञुण्—दारुः । कृगॄशॄदॄभ्यो वः (उ० १।१५५)—दर्वः । शॄदॄभसोऽदिः (उ० १।१३०)—दरदो देशाः । दरद् ईषदर्थेऽव्ययम । तस्य दरेति प्राकृते अपभ्रंशः । स एव कविमिश्रैर्न्त्या प्रयुक्तः—दरदलितहरिद्रा (विद्धशालभञ्जिका ३।१७) इति । कॄवृदॄदारिभ्य उनन् (दश० उ० ५।५२)—दारुणः । वॄदॄभ्यां विन् (दश० उ० २।२१)—दर्विः । दृणातेर्ह्रस्वश्च (तु० उ० ४।१८३) इति तिप्—दृतिः । उदि दृणातेरलचौ पूर्वपदान्तलोपश्च (दश० उ० ८।६७ क्पाठ.)—उद्दरम् । फर्फरीकाद-यश्च (उ० ४।२०)—दर्दरीकम् । पचादौ (गण० ३।१।१३४) दरद्, दरी । पृषोदरादौ (द्र० ६।३।१०९) दर्दरो वाद्यभाण्डम् । दर्दुरः । घटादौ । दॄ भये—(१।५४५) दरति, दरयति । अस्माद् दारयति ॥२१॥

२३. जॄ वयोहानौ । जृणाति । जीर्णः, जीर्णिः । दिवादौ (४।२७) जीर्यति ॥२२॥

२४. नॄ नये । नृणाति । नीर्णः, [नीर्णिः] । घटादौ (१।५४६) नरयति । नरोऽच्चि (द्र० ३।१।१३४) । ऋनरयोर्वृद्धिश्च (४।१।७२ गणसूत्र) —नारी ॥२३॥

२५. कॄ हिंसायाम् । कृणाति । कीर्णः । तुदादौ कॄ विक्षेपे (६।१०६)—किरति ॥२४॥

२६. ॠ गतौ । ॠणाति । समीर्णः । ईर्यते । अरिरिषति, अरिरीषति, ईर्विषति ॥२५॥

२७. गॄ शब्दे । गृणाति । गीर्णः । गीर्णिः । उज्जगार । अगा-

---

इति । धातुवृत्तिकारस्तु पुरुषकारवचनमुद्धृत्याह—'वचनशब्देन ञिर् वृध्यानि-ष्यते । स्वामिशाकटायनावप्येवं पठित्वा मत्वोर्थत्वमाहतुः' इति (धातुवृत्ति पृ० ३६८) । क्षीरतरङ्गिण्यां मुद्रितशाकटायनधातुपाठे चोभयत्र दन्त्योष्ठ्यादिः पाठ एवोपलभ्यते ।

१. उद्धृतमिदं पुरुषकारे (पृष्ठ २६), तत्र 'पाक.' इत्यस्य स्थाने 'पाकम्' इति पाठः ।

रीत्। कृधोरुच (दश० उ० २।१०८) गुरुः। तुदादौ गॄ निगरणे (६।११०) गिरति ॥२६॥

२८. उदात्ताः।

२९. ज्या वयोहानौ। इतो नवानिटः। ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—जिनाति, सम्प्रसारणस्य दीर्घः (द्र० ६।४।२), प्वादीनां ह्रस्वः (७।३।८०)। जीनः। जीनिरिति दुर्गः, नन्दी त्वाह—क्तिनि प्राप्ते ग्लाम्लाज्याहाभ्यो निः (३।३।९४ वा०)—ज्यानिः, दीव्याञ्चरिभ्यो निर् उणादौ (उ० ४।४८)। कविधौ प्रसारिभ्यो डः (द्र० ३।२ ३ वा०)—ब्रह्मज्यः उणादौ नक् (द्र० उ० ३।२)- जिनः। ण्यपि च, वपश्च (६।१।४१-४२)—प्रज्याय॥॥२७॥

३०. व्ली वरणे। व्लिनाति। अर्तिह्रीव्ली (७।३।३६) इति पुक्—व्लेपयति॥२८॥

३१. री गतिरेषणयोः। रेषणं हिंसा। रिणाति। रीणः। रेपयति। दिवादौ रीङ् स्रवणे (४।२८)—रीयते॥२९॥

३२. ली श्लेषणे। लिनाति। लीनः। दिवादौ (४ २९) लीयते। चुरादौ ली द्रवीकरणे (१०।२०६)—घृतं विलीनयति॥३०॥

३३. वृत्। ल्वादयः प्वादयश्च वर्तिताः॥

३४. ल्वी गतौ। ल्वीनाति॥३१॥

३५. व्री वरणे। व्रीणाति।[1] व्रीतः। उणादौ व्रीहिः[2]॥३२॥

३६. भ्री भरणे। भ्रीणाति। भ्रीतः॥३३॥

३७. क्षिप् हिंसायाम्। क्षिणाति। अङ् (द्र० ३।३।१०४)—क्षिया। स्वादौ (५।२२ दुर्गमते) क्षिणोति, भ्वादौ (१।१४९) क्षयति, तुदादौ (६।१०६) क्षियति॥३४॥

---

१. एतद्धातुव्याख्याने सायण आह—'स्वामिकाश्यपादयो "अर्तिह्रीव्ली" इति पठन्तो व्लेपयतीति पुकं प्रतिपन्नाः। (धातुवृत्ति पृष्ठ ३७०)। क्षीरतरङ्गिण्यां त्वत्र नैतादृशः पाठ उपलभ्यते। अत्र तु पूर्वं व्ली वरणे (३०) धातावेव व्लेपयतीत्युदाहृतम्।

२ द्र० हैमोणादि ७१०।

३८. ज्ञा अवबोधने । ज्ञाजनोर्जा (७।३।७९)—जानाति, जानीते । अनुपसर्गाज् ज्ञः (१।३।७६) उभयम्, नेह—अवजानासि मां मूढ ! अपह्नवे ज्ञः (१।३।४४) तङ्—शतम् अपजानीते । सम्प्रतिभ्यामनाध्याने (१।३।४६) संजानीते, प्रतिजानीते । ज्ञाश्रुस्मृदृशां सनः (१।३।५७) तङ्—जिज्ञासते नानोर्ज्ञः—(१।३।५८)—पुत्रमनुजिज्ञासति । ज्ञोऽविदर्थस्य करणे (१।३।४५) षष्ठी—सर्पिषो जानीते । वान्यस्य संयोगादेः (६।४।६८) एत्वम्—ज्ञेयात् । ज्ञायात् । मारणतोषण (२।५४८) इति नित्—मंज्ञपयति । सनीवन्तर्ध (७।२।४९) इति घेट्—जिज्ञपयिषति, अनिट्पक्षे आप्ज्ञप्यृधामीत् (७।४।५५)—ज्ञीप्सति । इगुपधज्ञा (३।१।१३५) इति कः—ज्ञः । मे दाज्ञः (३।२।६)—पथिप्रज्ञः । वा दान्तशान्त (७।२।२७) इति[1] संज्ञप्तः, संज्ञपितः । आतश्चोपसर्गे (३।३।१०६)—प्रज्ञा । ज्ञायते—ज्ञातिर्बन्धुः । ज्ञानं ज्ञाति-परिति नास्ति,प्रसिद्धेनापहृतत्वात् ॥३८॥

३९. अनुदात्ताः ।

४०. बन्ध बन्धने । ४१. अनुदात्त उदात्तेत् ।

बध्नाति । बधान—हलः श्नः शानज्झौ (३।१।८३) । अभान्त्सीत्—एकाचो बशो भष् झषन्तस्य स्ध्वोः (८।२।३७) । बन्धकी । उलूकादयो (प्र० उ० ४।४१) बन्धूकम् । शस्वृस्निहि (उ० १।११) इति बन्धुः—इषितिमिमदि (दश० उ० ८।२६ कपाठः) इति किरच्—बधिरः । बन्धेर्बधिबुधि च (दश० उ० ५।२८) इति नः—ब्रध्नः सूर्यः, बुध्नो मूलम् । अधिकरणे बन्धः (३।४।४१) णमुल्—हस्तबन्धं बद्धः । संज्ञायाम् च[3] (कातन्त्र कृत् ४५६) कुक्कुटीबन्धं बद्धः ॥३९॥

१. इतोऽग्रे 'विज्ञप्तः' इत्यधिकः क्वचित् ।

२. भावे नित्त्वं न भवतीत्यर्थः ।

३. लिपिकेनात्र पाणिनीयसूत्रनिर्देश इति मत्वा चकारमारुह्य मध्येऽष्टाध्यायी-सूत्रसंख्या दत्ता । क्षीरस्वामिनाप्यत्र पूर्वं पाणिनिसूत्रं निर्दिश्य तदनन्तरं स्मृतिभ्रान्त्या कातन्त्रसूत्रमुद्धृतम् । कातन्त्रे स्थित सूत्रपाठ.—'बन्धोऽधिकरणे च (४५५) संज्ञायां च' (४५६) । क्षीरस्वाम्यन्यत्रापि पाणिनिसूत्रप्रदर्शनावसरे स्मृतिभ्रान्त्या कातन्त्र-सूत्रमुद्धरति ।

**४२. वृङ् संभक्तौ ।** **४३. उदात्तः ।** संभक्तिः संसेवा । वृणीते । वरिता वरीता, वृतो वा (७।२।३८) दीर्घः । विवरिता[1] विवरीता । अवृत, अवरिष्ट, अवरीष्ट । वुवूर्षते, विवरिषते, विवरीषते । जल्पभिक्ष (३।२।१५५) इति षाकन्—वराकः । वृङ एण्यः (तु० दश० उ० ८।३) वरेण्यः । वर्वरीका । ग्रहवृदृनिश्चिगमश्च (३।३।५८) अप्—वरः । स्वादौ वृञ् वरणे (५।८)—वृणोति, वृणुते ॥३७॥

**४४. श्रन्थ विमोचनहर्षयोः[2] ।** इतो द्वादश[3] सेटः परस्मैपदिनश्च । श्रथ्नाति । श्रथित्वा श्रन्थित्वा[4] । यक्चिणोः प्रतिषेधे ग्रन्थग्रन्थ-बूञात्मनेपदाकर्मकाणाम् उपसंख्यानम् (तु० ३।१।८९ वा०)—श्रथ्नीते माला स्वयमेव, अश्रन्थिष्ट । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां (तु० १।२।६ काशिका) लिटः कित्त्वं, एत्वं चोपसंख्यायते—श्रेथुः । चुरादौ श्रन्थ ग्रन्थ सदर्भे (१०।२२६) वा णिच्—श्रन्थयति श्रन्थति, ग्रन्थयति ग्रन्थति । भ्वादौ श्रथि शैथिल्ये, ग्रथि कौटिल्ये (१।२६,३०)—श्रन्थते, ग्रन्थते ॥३८॥

**४५. मन्थ विलोडने ।** मथ्नाति । भ्वादौ (१।३७) मन्थति, तथा मथे विलोडने (१।५८३)—मथति ॥३९॥

**४६. ग्रन्थ सन्दर्भे ।** संदर्भो ग्रन्थनम्[5] । ग्रथ्नाति । ग्रन्थनम् । श्रथ्नातिवद्[6] उदाहार्यम् ॥४०॥

---

१ सर्वहस्तलेखेषु पठ्यते ।

२. 'हर्षनयो' 'प्रहर्षनयोः' प्रतिहर्षनयोः पाठान्तराणि ।

३. 'द्वादश' सर्वहस्तलेखेषु । 'द्वाविंशतिः' इति युक्तः पाठः ।

४ 'नोपधात्थफान्ताद्वा' (१।२।२३) किद्विकल्पः ।

५. अत्र तरङ्गिण्यां पाठभ्रंशः प्रतीयते । तथा ह्याह पुरुषकारः—'सदर्भे श्रथनक्रियायां ग्रन्थम धातू वर्तते इति क्षीरस्वामी' (पृष्ठ ७९) अत्र 'श्रथनक्रियायाम्' इत्यस्य स्थाने ग्रन्थन क्रियायाम्' पाठो द्रष्टव्यः । इदं पुरुषकारवचनं मायणोऽप्युदाजहार—'पुरुषकारोऽपि... सन्दर्भे ग्रथनक्रियायां श्रन्थिग्रन्थिधातू वर्तते इति क्षीरस्वामीत्युक्तम्' (धातु० पृष्ठ ३७३) । स्वयं क्षीरस्वाम्यपि भ्वादौ "क्र्यादौ श्रन्थ ग्रन्थ सदर्भे" (१।३०) इत्याह । तेनात्र 'श्रन्थ ग्रन्थ सन्दर्भे' इति क्षीरस्वामिनः पाठः स्यात् । अर्थभेदात् ग्रन्थिः पुनरत्र पठितः । एवं 'सन्दर्भो ग्रन्थनम्' इत्यस्य स्थाने 'सन्दर्भो ग्रथनम्' इति स्यात् । ६. 'श्रन्थिवत्' पाठा० ।

४७. कुन्थ श्लेषणे[1] । कुथ्नाति । कुन्थित्वा कुथित्वा । कुथो हस्तिपल्याणम् । कुथा । कुथि इति दुर्गः ॥४१॥

४८. मृद क्षोदे । मृद्नाति । मृद्यते—मृत् । मृदस्तिकन् (५।४।३९)—मृत्तिका । मृडमृद (१।२।७) इति क्त्वा कित्—मृदित्वा ॥४२॥

४९. मृड सुखने । मृड्नाति । मृडित्वा । तुदादौ (६।३९) मृडति । मृड. । मृडीकं हिरण्यम ॥४३॥

५० गुध रोषे । गुध्नाति । गुधित्वा । गुधेरूमः (उ० ५।२) गोधूमः । भिदादौ—(द्र० ३।३।१०४) गोधा तलत्राणम[2] । दिवादौ गुध परिवेष्टने (४।१२)—गुध्यति ॥४४॥

५१. कुष निष्कर्षे । निष्कर्षो बहिष्करणम् । कुष्णाति । कर्मकर्तरि कुषिरजोः प्राचां श्यन् परस्मैपदं च (३।१।९०)—कुष्यति पादः स्वयमेव । निरः कुषः (७।२।४६) इड् वा—निष्कोषिता निष्कोष्टा, निरकोषीत् निरकुक्षत् । इण् निष्ठायाम् (७।२।४७)—निष्कुषितः । मृडमृद-(१।२।७) इति क्त्वा कित्—कुषित्वा । हनिकुषि (उ० २।२) इति क्थन्—कुष्ठम् । उषिकुषि (उ० २।४) इति थन्—कोष्ठम् उदरम् । बाहुलकात्(३।३।१) प्रकोष्ठो विस्तृतकरः । उषिकुसिकुषिभ्यः कितन्[3](दश० उ० ६।२१ क्षपाठः) कुषितम् । प्लुषिशुषिकुषिभ्यः क्सिः (दश० उ० २।११) कुक्षिः । कुठिकुषिभ्यां काकुः (दश० उ० १।२५० क्पाठः) कुषाकुः ॥४५॥

५२. क्षुभ संचलने । क्षुभ्नाति, क्षुभ्नातीत्यात् (द्र०८।४।३९) णत्वाभावः । क्षुभ्नस्वान्त (७।२।१८) इति क्षुब्धो मन्थदण्डेऽ, क्षुभितोऽन्यः । अक्षोभीत् । दिवादौ (४।१३०) क्षुभ्यति, अक्षुभत् । भ्वादौ (१।४९९) क्षोभते ॥४६॥

---

१. अत्राह पुरुषकारः—'श्लेषणे संश्लेषणक्रियायाम् इति क्षीरस्वामी' (पृष्ठ ७०) नात्र तथाविधः पाठ उपलभ्यते ।

२. 'गोधानखे व्याघातवारणे' इत्यमरः (२।८।८५) ।

३. अत्र लिपिदोषेण मूलोणादिसूत्रसंख्यामनिर्दिश्य हैमोणादिसूत्रसंख्या २१२ तुलनाय निर्दिष्टा ।

५३. णम तुभ हिंसायाम् । प्रणभ्नाति । दिवादौ (४।१३१) नभ्यति । द्युतादौ (१।५००) नभते । तुभ्नाति । तुभ्यति (४।१३१)। तोभते (१।५००) ॥४७, ४८॥

५४. क्लिशू विबाधने । क्लिश्नाति । क्लेष्टा क्लेशिता । क्लिशः क्त्वानिष्ठयो: (७।२।५०) वेट्—क्लिष्ट्वा क्लिशित्वा, क्लिष्टः क्लिशितः । दिवादौ (४।५०) क्लिश्यति । क्लेशः, कीनाशः ॥४९॥

५५. अश भोजने । अश्नाति । अशिता । उपेयिवाननाश्वाननूचानश्च (३।२।१०९) इत्यनाश्वान् साधुः । आशितः कर्ता (६।१।२०७) आद्युदात्तः । घञ् (द्र० ३।३।१२१) —समाशा गोमता जिता । इण्शिभ्यां तकन् (उ० ३।१४८)—अष्टका । अशिपणाय्यो रुडायलुकौ च (दश० उ० १।११२ कपाठः) अश्रिः । स्वादौ अशू व्याप्तौ (५।११)—अश्नुते । तत्रैव ग्रहणानि ॥५०॥

५६. उध्रस उञ्छे । ध्रस्नाति[1] । ध्रस्त्वा ध्रसित्वा । चुरादौ (१०।१११) ध्रासयति ॥५१॥

५७. इष आभीक्ष्ण्ये । आभीक्ष्ण्यं पौनःपुन्यम् । इष्णाति । एषित्वा । प्रेषितः । दिवादौ इष गतौ (४।१७)—अन्विष्यति । तुदादौ इषु गतौ (६।५८)—इच्छति, इष्ट्वा एषित्वा, तीषसह (तु० ७।२।४८) इत्यस्यैव ग्रहणम्—इष्टः । अतो यस्य विभाषा (७।२।१५) इत्यस्य (७।५७) निषेधो नास्ति—प्रेषितः ॥५२॥

५८. विष विप्रयोगे । विष्णाति । विषम् । ह्वादौ विष्लृ व्याप्तौ (३।१४)—वेवेष्टि, अविषत् ॥५३॥

५९. प्रुष प्लुष स्नेहसेचनपूरणेषु । प्रुष्णाति । प्रुषितः । विप्रुट् । प्लुष्णाति । भ्वादौ (द्र० १।४६३) प्रोषति, प्लोषति, दिवादौ प्लुष दाहे (४।७, १२०)—प्लुष्यति ॥५४, ५५॥

---

१. यथा तु पुरुषकारे (पृष्ठ ११८, ११९) धातुवृत्तौ (पृष्ठ ३७४) च पाठ उद्धृतस्तथा 'उध्रस्नाति उध्रसाञ्चकार' इत्यादि पाठेन भाव्यम् । चुरादौ (१११) स्वयं वक्ष्यति क्षीरस्वामी—'उः प्रयोगसमवायीत्येके—उध्रासयति, उध्रस्नाति । उपसर्गमपि उत्पूर्वं इत्यन्ये—उद्ध्रासयति, उद्ध्रस्नाति इति तदप्यत्रानुसन्धेयम् ।

६० पुष पुष्टौ । पुष्णाति । पोषिता । दिवादौ (४।७३) पुष्यति; पोष्टा, पुष्करम् पुष्कलम् । भ्वादौ (१।४६२) पोषति ॥५६॥

६१. मुष स्तेये । मुष्णाति । रुदविद (१।२।८) इति मुषित्वा, मुमुषिषति । मुषितः । मुषेर्दीर्घश्च (उ० २।४२) इति किकन्—मूषिकः, मूषिका । सृवृभूशुषिमुषिभ्यः किर् (दश० उ० ३।१९)—मुष्कोऽण्डः फलं [च] ॥५७॥

६२. खव भूतप्रादुर्भावे । मसिकान्त्योत्पत्तौ । खौनाति ।' च्छ्वोः शूड् (६।४।१९) इति खौनातीति' सभ्याः । खविता । खौः । खव इति दीर्घाः ॥५८॥

६३. हेठ च । उक्तार्थे । हेठ्नाति । भ्वादौ हेठ विबाधायाम् (१।१६६)—हेठते ॥५९॥

६४. उदात्ताः उदात्तेतः ।

६५. ग्रह उपादाने । ६६. उदात्तः स्वरितेत् ।

उपादानं स्वीकारः । ग्रहिज्यावयि (६।१।१६) इति सम्प्रसारणम्—गृह्णाति, गृह्णीते । ग्रहोऽलिटि दीर्घः (७।२।३७)—ग्रहीता । चिण्वदिटो दीर्घो नेष्यते (द्र० ७।२।३७ भाष्यम्)—त्वया ग्राहिष्यते । अग्रहीत, ह्म्यन्तक्षण (७।२।५) इति वृद्धिर्नास्ति । रुदविद (१।२।८) इति कित्—गृहीत्वा, जिघृक्षति । ग्रहादेर्णिनिः (द्र० ३।१।१३४)—ग्राही । विभाषा ग्रहः (३।१।१४३) णः—ग्राहः, ग्रहः । गेहे तु कः (द्र० ३।१।१४४)—गृहम् । अच्प्रकरणे शक्तिलाङ्गलाङ्कुश (द्र० ३।२।९ वा०) इत्यच्—शक्तिग्रहः । सूत्रे च धार्यर्थे (३।२।९ वा०)—सूत्रग्रहः । कालेग्रहितात्मम्भरिश्च (३।२।२६) । पदास्वैरिबाह्या (३।१।११९) इति क्यप्—प्रगृह्यं पदम्, गृह्यकः पक्षी, ग्रामगृह्या सेना, अर्जुनगृह्या देवाः । ग्रहवृद (३।३।५८) इत्यप्—निग्रहः । उदि ग्रहः (३।३।३५) घञ्—उद्ग्राहः । समि मुष्टौ (३।३।३६)—

१. अत्र धातुरूपे विप्रवदन्ते वैयाकरणाः । तथथा—खौनातीति कविकल्पद्रुमटीकायां दुर्गादासः (पृष्ठ १६८) । तत्रैव 'केचित्तु श्वादित्वाद् ह्रस्वे खुनातीत्याहुः । धातुपारायणस्तु खवनातीत्युदाहरति । काशकृत्स्नधातुटीकायां 'खौनाति' इत्युक्तम् । धातुवृत्तौ स्वामिमते 'खुनाति' इत्युक्तम्, तदत्र दीर्घमतेनोच्यते (पृष्ठ ३७२) ।

संग्राहो मल्लस्य। अवे ग्रहो वर्षप्रतिबन्धे (३।३।५१) वा—अवग्रहः, अवग्राहः। अवग्रहो हस्तिललाटे (तु० अमर० २।८।३८)। प्रे वणिजाम् (३।३।५२)—तुलायाः प्रग्राहः, प्रग्रहः। रश्मौ च (३।३।५३) प्रग्राहः प्रग्रहः। आक्रोशेऽवन्योर्ग्रहः (३।३।४५)—अवग्राहो हन्त ते वृषल भूयात्, निग्राहः। प्रे लिप्सायाम् (३।३।४६)—स्रुक्प्रग्राहेण चरति द्विजो भिक्षार्थी। परौ यज्ञे (३।३।४७)—उत्तरपरिग्राहं गृह्णाति। अक्षेषु ग्लहः (३।३।७०)। श्रियुकः (७।२।९) इत्यत्र ग्रहादेर्निषेधात् (द्र० ७।२।९ वा०)—निगृहीतिः। नाम्न्यादिशिग्रहोः—(३।४।५८) णमुल्—नामग्राहं वक्ति। ग्रहेरनिः (उ० ५।६७)—ग्रहणिः प्रवाहिका ॥६०॥

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ
क्षीरतरङ्गिण्यां
क्र्यादिगणः
सम्पूर्णः ॥[1]



१. इति 'क्षीरतरङ्गिण्यां धातुवृत्तौ क्र्यादिगणः सम्पूर्णः' पाठा०।

# ॥ अथ चुरादिगणः ॥

व्याख्यातेयं नवगणी कुशकाशावलम्बनात्,
चुरादिरधुनारब्धो यत्र मग्ना महारथाः।
पाठेऽर्थे चागम[1]भ्रंशान्महतामपि मोहतः[2],
न विद्म- किं नु जहिमः किं यात्रादध्महे[3] वयम्[4] ॥

१ चुर स्तेये । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (३।१।२५) इति स्वार्थे णिच् स्वरितेत् स्यात् महिः क्वादौ, सविश्चेष्टश्चुरादिषु[5] इति लसेः (१०।५) स्वरितेत्त्वस्मरणात् णिचश्च (१।३।७४) इति—कर्त्रभिप्राये क्रियाफले तङ् नास्ति । चन्द्रस्त्वभाप्युभयपदित्वमाम्नासीत्, णिज्विकल्पं च[6] । चोरयति । प्रत्ययान्ताद् (द्र० ३।१।३५) आम्—चोरयांचकार, अचूचुरत् । चोरयन्तं प्रयुक्तवानिति ण्यन्तादपि णिच्यचूचुरदित्येव । क्विलुग्-उपधात्व-चङ्पर निर्ह्रास-कुत्वेषूपसंख्यानम् (१।१।५८ वा०) इति स्थानिवत्त्वनिषेधात् णौ णिलोपे ऽग्लोपित्वाभावात् नाग्लोपिशास्वृदिताम् (७।४।२) इति णौ चङ्युपधाया (७।४।१) ह्रस्वनिषेधो नास्ति । पचादौ (गण० ३।१।१३४) चोरट्, चोरी । प्रज्ञादित्वात् (द्र० ५।४।३८) चौरः । छत्रादिपाठात् (गण० ४।४।६२) णो वा । योऽप्यणकृत क्वचिद् (द्र० परिभाषावृत्ति ७६) इति चौरी, तापसी । भिदादित्वात् (गण० ३।३।१०४) चुरा । ण्यासश्रन्थो युच् (३।३।१०७)—चोरणा । एरच् भयप्रत्ययान्तानाम्[7] इति यच् प्रतिप्रसूयते—चोरः ॥१॥

---

१ 'चागम०' पाठा० ।

२. अनेन चरणेन चुरादौ पाठभ्रंशबाहुल्य प्रदर्श्यते ।

३. 'ददमहे' पाठान्तरम् ।

४. 'न विद्म. किञ्जिहीमोऽथ वा किमुपाददूमहे वयम्' पाठान्तरं मैत्रेयमनोरमायां (पृष्ठ ६१६), प्रक्रियाकौमुद्यां (पृष्ठ २११) च ।

५. अनुपलब्धमूलमिदम् । अस्य सार्धं चरणं सायणोऽपि सस्मार (द्र० चुर धातौ, पृष्ठ ३७७) ।

६. सस्मार धातुवृत्तिकारः (पृष्ठ ३७७, ३७८) । काशकृत्स्नधातुव्याख्यानटीकायां परस्मैपदमेवोदाहियते ।

७. द्र० पृष्ठ १६, टि० २ ।

२. चिति स्मृत्याम् । चिन्तयति । चिन्तिपूजि (३।३।१०५) इत्यङ्—चिन्ता । इदित्पाठाद् अनित्यण्यन्ताश्चुरादय इति ज्ञाप्यते, अन्यथा णिलोपस्य स्थानिवत्त्वाद् अनिदितां हल उपधायाः क्ङिति (६।४।२४) इति नलोपस्याप्रसंगाच्चिन्त्यादयो नुमनुषक्ता एव पठ्येरन्, लक्ष्यानुरोधाच्च नियतविषयम् । यथा—महीपतिवचः श्रुत्वा जुघुषुः पुष्यमाणवाः (तु० ७।२।२३ भाष्यम्) ॥२॥

३. यत्रि संकोचने । नियन्त्रयति; यन्त्रणा ॥३॥

४. स्फुडि परिहासे । स्फुण्डयति । स्फुटि इति दुर्गः—स्फुण्टयति । स्फुडि परिघात इति एके ॥४॥

५. लक्ष दर्शनाङ्कनयोः । अङ्कनं चिन्हम् । लक्षिश्चेह 'ह्वयादिषु'[1] इति स्मृते' स्वरितेत्—लक्षयते, लक्षयति । लक्षणा, लक्षणम् । लक्षेर्मुट् च (उ० ३।१६०) इती —लक्ष्मीः । शम लक्ष आलोचने (१०।१४४) इत्याकुस्माद् आत्मनेपदार्थ' पाठः—लक्षयते ॥५॥

६. कुद्रि अनृतभाषणे । कुन्द्रयति । गादि'पारायणे—गुन्द्रा भद्रमुस्ता । क्वचिदित्येके[3] ॥६॥

७. लड उपसेवायाम् । लाडयति, उपलालयति[4] पुत्रम् । लालना[4] । नान्ये मितोऽहेतौ च (१०।८२) इति मित्त्वं नास्ति । ज्याद्गौ लुड विलासे (१।२५०) इत्यनेकार्थत्वाज् जिह्वोन्मथनयोर्लडिः (२।५६१) इति मित्त्ल–लडयति ॥७॥

८. मिदि[5] स्नेहने । मिन्दयति । मिन्दः कुष्ठी । मिद इति कौशिकः—मेदयति ॥८॥

---

१ 'लक्षिरेकस्त्रु०' पाठा० ।

२. पूर्वं स्मृतः (१०।१) ।

३. उद्धृतं धातुवृत्तौ (पृष्ठ ३७६) ।

४. डलयोरेकत्वस्मरणात् । द्र० पृष्ठ ५९ टि० १ ।

५. अत्र धातुवृत्तिकारोऽन्यथा स्वामिपाठमुदाजहार । तद्यथा—'चीरस्वाम्यनिदित पठित्वा कौशिकदिदित पठ्यत इत्याह' इति (पृष्ठ ३७९) ।

९. ओलडि उत्क्षेपे[1]। ओलण्डयति भारम्। ओलण्डितः। तथा लण्डिः[2] इति स्मरणाद् ओदित्त्वं नास्ति। अन्ये त्वनित्यण्यन्तत्वात् निष्ठानत्वार्थम् (द्र० ८।२।४५) ओ इत्यनुबन्धमाहुः—लण्डनः। दौर्गास्तु के लण्डिन इत्युदाजहुः, तच्च पापात् पापीयः, मध्यवहितत्वात्। अन्यथा भिक्षादिवद् भिन्दितादौ नत्वं स्यात्। चान्द्रा लडिं[3] मन्याहुः—अथलण्डयत्युष्ट्रम्। शब्द लक्षणलक्ष्यपथात् धन्धकुक्कुटीन्यायेन लक्ष्यमनुसरतां कियदिव हन्यामः, कियदिव[4] तुण्यामः ? ॥९॥

१०. जल अपवारणे। जालयति। जालकः। जालम्। लज इति नन्दी—लाजयति, लाजाः। चान्द्रा उभयमप्येतत्पेठुः, जल घात्ये (१।५७०), लज लाजि (१।१५१,१५२) इत्याभ्यां सिद्धेः। ज्वलादौ जल घात्ये (१।५७०)—जलति जालम्, जलम् ॥१०॥

११. पीड गहने। गहनं बाधा। पीडयति। किंतं चाविस्था शुचि माते (द्र० ३।३।१०७) भिदादिपाठात् (गण० ३।३।१०४) पीडा। भ्राजभासभाषदीप (७।४।३) इत्यपिपीडत् अपीपिडत्। पीड अवगाहन इति दुर्गः—तिलपीडकः ॥११॥

१२. नट अवस्यन्दने। अवस्यन्दनं भ्रंशनम्। नाटकापपिशाद् (२।३।५६) इति चौरस्योन्नाटयति। नाटकः। घटादौ घटादौ नट नतौ (१।५३८)—नटयति शाखाम्। नट नृत्तौ (१।२०९)—नटति नाटयति। नड इति नन्दी—नड, नाडी प्रणालः, प्रणाडी[5] ॥१२॥

१३. श्रथ प्रतिहर्षे। श्राथनात् (१०।२००) इत्यत्र श्रथ हिंसायाम् (१०।२१६) इति सिद्धिः, इह पाठाद् रूपान्तरम्—श्राथयते। नन्दी श्रथ

---

१. 'उत्क्षेपणे' पाठा०।

२. भ्रष्टोऽयं पाठः। अयं सम्पूर्णः श्लोको भूधातौ (पृष्ठ ५) पश्यते। तथापि चतुर्थचरणस्य पाठो महान् भ्रष्टः। तत्रैव टिप्पण्यां चतुर्थचरणस्य 'स्मर्यते नेद् तथौलडेः' इति शुद्धः पाठ उक्तः। तदनन्तरमस्मद्धृत एव पाठः पुरुषकारेणोपात्त 'उपलब्धः (पुरुष० पृष्ठ ११८)।

३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते।　　　४. 'कियद्वा' पाठा०।

५. रलयोरैक्यस्मरणादिति नियमेन।

इत्याह—क्रापयिताप् (२।३।५६) इति चौरस्योत्क्राथयति ॥१३॥

१४. बध संयमने । बाधयति, अबीबधत् । भ्वादौ बाधृ रोटने (२।६)—बाधते,अबबाधत् । बन्ध इति चान्द्राः[1]—बन्धयति,बन्धयति । क्र्यादौ (९।४०) बध्नाति ॥१४॥

१५. पॄ पूरणे । पारयति, पार्यते । अनुपसर्गाल्लिम्पविन्द (३।१।१३८) इति शः—पारयः । ह्लादौ (३।४) पिपर्ति, क्र्यादौ (९।१८) पृणाति । पृ इति दुर्गः—पारः ॥१५॥

१६. ऊर्ज बलप्राणनयोः । प्राणनं जीवनम् । ऊर्जयति । ऊर्जनम्, ऊर्जंस्विनि (?) भ्राजे भाजभास (३।२।१७७) इति क्विप्—ऊर्क्, ऊर्जस्विन् (द्र० ५।२।११४) इति निपातनाद् असन्तोऽप्यस्ति ॥१६॥

१७. वर्ण वर्णने । वर्णयति । पक्ष परिग्रह इत्येके । पक्षयति॥१७॥

१८. चूर्ण प्रेरणे । प्रेरणं दलनम् । चूर्णयति । चूर्ण पेषण इति चान्द्र[2] ॥१८॥

१९. पथ प्रक्षेपणे । पथयति । पृथ इत्येके[3] ॥१९॥

२०. साम्ब[4] संबन्धे । साम्बयति । साम्बः । चन्द्रः शम्ब इत्याह[5]—शम्बलम् ॥२०॥

२१. भक्ष अदने । भक्षयति । शीलिकामिभक्ष्याचरिभ्यो णः (३।२।१ वा०)—मांसभक्षा । भक्षतेर्घञ्—भक्षः ॥२१॥

२२. कुट्ट छेदनकुत्सनयोः[6] । कुट्टयति । कुट्टनी । जल्पभिक्ष

---

१. मुद्रिते चान्द्रधातुपाठे नास्ति । धातुवृत्तिकारोऽपि चन्द्रनाम्ना उद्धरतीम पाठम् ।

२. नैव पठ्यते मुद्रिते चान्द्रधातुपाठे ।

३. धातुवृत्तौ स्वामिनाम्ना 'पथ इत्येके' इति पाठ उद्धियते (पृष्ठ ३८०) ।

४ 'शाम्ब इति केचित्' इत्येत्र स्मर्यते धातुवृत्तौ (पृष्ठ ३८०) ।

५. 'शम्ब इत्येके' इति स्वामिनाम्ना पठ्यते धातुवृत्तौ (पृष्ठ ३८०) । चान्द्रधातुपाठे नोपलभ्यते धातुः ।

६. धातुवृत्तौ (पृष्ठ ३८०) स्वामिनाम्ना 'छेदनपूरणयोः' इत्युद्धियते पाठः ।

कुट्ट (३।२।१५५) इति षाकन्—कुट्टाकः, इक्षुकुट्टाकः ॥२२॥

२३. चुट्ट अल्पीभावे । चुट्टयति । पुट्ट इत्येके । दौर्गा द्वावपि पेठुः, चन्द्रो नैकमपि ॥२३॥

२४. मुट्ट अनादरे । मुट्टयति । चन्द्र[1]दुर्गौ षोपदेशान् मुट्टादीन् मन्येते—सुमुट्टयिषति । षट्ट इति च दुर्गः—अट्टयति । अट्टो मञ्चः, अट्टं सिद्धमन्नम् ॥२४॥

२५. लुण्ठ स्तेये । लुण्ठयति । जल्पभिक्ष (३।२।१५५) इति लुण्ठाकः । ष्वादेर्लुटि (१।२५५) इत्यादिदर्शनात् लुण्ट इत्येके ॥२५॥

२६. शठ श्वठ असंस्कारगत्योः । शाठयति, श्वाठयति । भ्वादौ शठ कैतवे (१।२३६), अस्मात् शठः । श्वठि इति दौर्गाः—श्वण्ठयति ॥२६, २७॥

२७. तुजि पिजि लुजि हिंसाबलादाननिकेतनेषु । निकेतनमावसथः । तुञ्जयति । तुञ्जः । पिञ्जयति । लुञ्जयति । पट पुट (१०।१६७) आदाच् धात्वदः सकर्मकात् इति सकर्मकार्थमर्थभेदार्थं चैषां पाठः, रूपभेदार्थं वा—तुञ्जयते । भ्वादौ तुञ्जति (१।१५४) । पिजि (२।२० कौशिकमते)[2]—पिञ्जालः ॥२८—३०॥

२८. पिस गतौ । पेसयति । भ्वादौ (१।४०३) पेसति ॥३१॥

२९. सान्त्व सामप्रयोगे । सान्त्वयति । साम सान्त्वेति[3] चन्द्रः—सामयति । सान्त्वम् । उणादौ नामन्सामन् (दश० उ० ६।७१) ॥ ३२ ॥

३०. श्वल्क वल्क परिभाषणे । श्वल्कयति । वल्कयति । वल्कलम् । वल्कस्तक्त्वक् ॥३३, ३४॥

३१. ष्णिट स्नेहने । स्नेटयति । स्निट इत्येके[4] ॥३५॥

---

१ चान्द्रधातुपाठे 'षट्ट हिंसायाम्' (१०।१७) पठ्यते, न पुट्टेति ।

२. लिबिशेनास्य धातो. संख्या न निर्दिष्टा ।

३. 'साम सान्त्वने' इति मुद्रिते चान्द्रधातुपाठे ( १०।८९ ) पाठः । लिबिशेनास्यापि संख्या नैव लिखिता ।

४. उद्धृतं पुरुषकारे (पृष्ठ २७) ।

३२. स्फिट अनादरे । स्फेटयति । स्फेटकः । संस्फेटस्तुमुलयुद्धम् ॥३६॥

३३. श्लिष श्लेषणे । श्लेषयति । भ्वादौ (१।४६३) श्लेषति, दिवादौ (४।७१) श्लिष्यति ॥३७॥

३४. पथि गतौ । परिपन्थयति । परिपन्थी वैरिवाचकः ॥३८॥

३५. पिच्च कुट्टने । पिच्चयति । पिचुः कार्पासस्तूलं च, पिचव्यः (द्र० ५।१।२ काशिका) ॥३९॥

३६. छद संवरणे । छादयति[1] सुगमम् । छदिर् ऊर्जने (१।५५०) मित्—छदयति । वा चुरादौ वा (१०।२०२) इति छद अपवारणे[2] (तु० १०।२११)—छदयति, छदति, रूपान्यन्यार्थे नेह पाठः—छादयते वा दान्तशान्त (७।२।२७) इति छन्नः, छादितः । छादेर्घेऽद्व्युपसर्गस्य (६।४।९६) इति ह्रस्वः—प्रच्छदः उरश्छदः[3], पुंसि संज्ञायां घः प्रायेण (३।३।११८), नेह संप्रच्छादः । इस्मन्त्रन्क्विषु च (तु० ६।४।९७) इति ह्रस्वः—छदिस्, अर्चिशुचि (उ० २।१०९) इतीस्, छद्मः, छद्मम्, गृहच्छत् ॥४०॥

३७. श्रण दाने । श्राणयति । विश्राणनम् । श्रुचि प्राप्ते चिन्तिपूजि (३।३।१०५) इति चकाराद् अङ् इष्यते कुत्सायाम्—श्राणा, या भिक्षवे दीयते । हेतौ घटादित्वाच्(१।५३८) श्रणयति ॥४१॥

३८. तड आघाते । ताडयति । ताडेर्णिलुक् च (उ० १।१८)—तडित् । अलीकादौ (द्र० उ० ४।२५) तिन्तिडीकम् । पिनाकादयश्च (उ० ४।१५) इति तडाकः, ताडका । तट इत्येके—ताल ताडय ताटकाम्[4], तटाकः ॥४२॥

३९. खड खडि भेदे । खाडयति, खण्डयति । कडि इत्येके ।

---

१. स्मृत धातुवृत्तौ (पृष्ठ ३८१) पुरुषकारे (पृष्ठ ८६) च ।

२. उत्तरत्र 'संवरणे' इति पठ्यते । तदेव स्वामिसम्मतं प्रतीयते, अन्यथात्र अर्थभेदार्थं वा इत्यप्यवदत् ।

३. इतोऽग्रे 'दन्तच्छदः' इत्यप्युदाजहारेति पुरुषकारः (पृष्ठ ८६) ।

४. अनुपलब्धमूलमिदम् ।

कण्डयति ॥४३, ४४॥

४०. गुडि रक्षणे । गुण्डयति । कुडि इत्येके[1] अत एव कुडि दाहे (१।१७२) कुडि वैकल्ये (१।१२०) इति च सिद्धे चन्द्रो नैनमध्यैष्ट ॥४५॥

४१. गुंठि वेष्टने । गुण्ठयति । गुण्ठना । गुण्ठितम् ॥४६॥

४२. खुडि खण्डने । खुण्डयति, खुण्डितः ॥४७॥

४३. वडि[2] विभाजने । वण्डयति, वण्डः । दान्त इत्येके—वण्डयति । भ्वादौ (१।२०४) वण्टति ॥४८॥

४४. चडि कोपे । चण्डयति । चण्डः, चण्डा, चण्डी । भ्वादौ (१।१८२) चण्डते, चण्डालः ॥४९॥

४५. मडि भूषायाम् । मण्डयति । मण्डना, मण्डनम्, मण्डा मरण्डः । भ्वादौ (१।१७५) मण्डते । एतांश्चन्द्रो[3] नैच्छत, तच्चासत्, कुडिकडिचडिवडिमडिभडीनां ह्यनित्यण्यन्तत्वान्न्याय्यधिकरणे सिद्धे आत्मनेपदं नु कुतः स्यात्? ॥५०॥

४६. भडि कल्याणे । भण्डयति, भण्डना । भ्वादौ भडि परिभाषणे । (१।१७६)—भण्डते, भण्डः ॥५१॥

४७. छर्द वमने । छर्दयति । अर्चिशुचि (उ० २।१०८) इतीस् छर्दिः, इदन्तोऽपि ॥५२॥

४८. पुस्त बुस्त आदरानादरयोः । पुस्तयति । पुस्तकः,[4] पुस्तं लेख्यकर्म । बुस्तयति । बुस्तिः शष्कुली । बुस्त[5] कथने इति चन्द्रः (चु० चा० धा० १०।३५) ॥५३, ५४॥

---

१ 'दान्तमेके इति स्वामी' इति धातुवृत्तौ (पृष्ठ ३९२) पाठः ।

२ अत्र पुरुषकारः (पृष्ठ ९८) द्रष्टव्यः ।

३. 'एत च०' पाठान्तरम्, तच्चिन्त्यम्, उत्तरत्रानेकेषां धातूनां विषये वचनात् ।

४ अर्धर्चादित्वात् (२।४।३१) पुंस्त्वम् । तथा च प्रयुज्यते कामसूत्रे १।४।७॥

५. 'पुस्त' पाठा० । 'बुस्त बन्धने' इति मुद्रिते चान्द्रपाठः (१०।३५) ।

४९. चुद संचोदने । संचोदनं प्रेरणम् । चोदयति । चोदना, चोद्यम् ॥५५॥

५० णक्क धक्क नाशने ॥५६, ५७॥

५१. चक्क चुक्क व्यथने । चक्कयति । चक्कलकम् । चुक्कयति । चुक्कम् । चिक्क इति च कौशिक[१]—चिक्कमं यवपिष्टम्, चिक्कणं सस्नेहम् ॥५८, ५९॥

५२. क्षल शौचकर्मणि । क्षालयति ॥६०॥

५३. तल प्रतिष्ठायाम् । तालयति, उत्तालयति । ताल[१], के[२] तालिका, ताली । अनित्यण्यन्तत्वात् तलति, तल्पम् ॥६१॥

५४. तुल उन्माने । तोलयति । तोलना । चितपूजि (२।१।१०५) इति चकारात् तुला । तुलयतीत्यणिच्पक्षे कान्तात् ( द्र० ३।१।१३५ ) तुल शब्दात् णिच्[२] ॥६२॥

५५. दुल उत्क्षेपे । दोलयति । दोला, दोलितः । आन्दोलितः, आन्दोलयति, प्रेङ्खोलयति, वीजयत्येने लोकात्[३] ॥६३॥

५६. पुल समुच्छ्राये । पोलयति । भ्वादौ (१।५७८) तुदादौ च पुल महत्त्वे—पोलति, पुलति[४] । अस्मादेव प्राकृतेऽर्थे णिचि सिद्धे भ्वादौ नैतमध्यैष्ट ॥६४॥

५७. चुल[५] निमज्जने । चोलयति । चोलितम् चोल[१], चोलनम् ॥६५॥

---

१. इतोऽग्रे लिपिकेन 'केऽण.' सूत्रस्य (७।४।१३) सख्या निर्दिष्टा, न च तस्य सूत्रस्यात्र किञ्चित् प्रयोजनम्, ह्रस्वभाव्यभावात् । यदि सूत्रसख्या निर्देष्टव्या ऽऽसीत्तर्हि कप्रत्ययविधायकस्य, यद्वा इद्विधायकस्य (७।३।४४) निर्देष्टु युक्ता ।

२. इतोऽग्रे लिपिकेन 'बहुलमेतन्निदर्शनम्' इति सूत्रस्य १०।३६२ सख्या निर्दिष्टा । न च तस्य सूत्रस्यात्र किंचित् प्रयोजनम् । इह तु 'प्रातिपदिकाद्धात्वर्थे' (१०।२९६ अस्मत्सख्या) सूत्रेण णिज् भवति । ३ अत्र पृष्ठ ३७ टि० ९ द्रष्टव्या ।

४ भ्वादौ (१।५७८) अपीत्थमेवाह क्षीरस्वामी, न चाय तुदादिषु पठ्यते । अत्र पृष्ठ ११७ टि० ५ द्रष्टव्या ।

५ अस्यैव डलयोरभेदेन 'चुडना' इति प्राच्यजनपदेषु प्रयुज्यते ।

५८. मुल रोहणे। मूलयति। मूलम्, मूलिः। मुल इति नन्दी मोलयति ॥६६॥

५९. कल किल पिल क्षेपे। गाः कालयति। कालः। कथादौ। कल संख्याने (१०।२५३)—संकलयति, कलः। भ्वादौ (१।३३२) कलते। केलयति, केलिः। तुदादौ किल श्वैत्यक्रीडनयोः (६।६०)—किलति। पेलयति, पेलम् भावकर्मणोरणिच्पक्षे—पिल्यते। पेल गतौ (१।२६१) इत्यस्मात् पेल्यते इति चन्द्रः ॥६७—६९॥

६० बिल भेदने। बेलयति। बिलम्, बिल्वः, बिल्मम्। तुदादौ (६।६६) बिलति। भिल इति कौशिकः—भेलयति, भेलः, भिल्मम्[1] ॥७०॥

६१. तिल स्नेहने। तेलयति। तिला[2]। तिल्वकम्। तुदादौ (६।६१) तिलति ॥७१॥

६२. चल भृतौ। चालयति। भ्वादौ (१।५४६) कम्पने मित्—चलयति, तुदादौ (६।६३) चल विलसने—चलति ॥७२॥

६३. पल रक्षणे। पालयति। पलम्। पललं तिलकल्कं, क्रव्यं च। पाल इति चन्द्रः (१०।५०)—पाली ॥७३॥

६४. लूप हिंसायाम्। लूपयति। लूपितः ॥७४॥

६५. शुल्ब माने। शुल्बयति। शुल्बं रज्जुः[3]। शर्ब माने इति चन्द्रः[4] ॥७५॥

६६. छुट छेदने[5]। आच्छोटयति, छोटिका गुच्छा। छोटनम्। तुदादौ (६।८२) छुटति। छुट इति चन्द्रः (चा० धा० १०।५२), छुट इति दुर्गः ॥७६॥

६७. पुट संचूर्णने। पोटयति। पोटा स्त्रीपुंसलक्षणा। भासा-

---

१. तथा च प्रयुज्यते—बिल्मं भिल्मं भासनमिति वा। निरुक्त १।२०॥

२. 'तिलः' पाठ०।

३. ताम्ररज्जुः पाठ०।

४. मुद्रिते चान्द्रधातुपाठे नैव पठ्यते।

५. 'छोटने' पाठ०।

र्थोऽपि ( १०।१९८ )। तुदादौ पुट संश्लेषणे ( ६।७२ )—पुटति, पुटः, पुटम् ॥७७॥

६८. पसि नाशने । पंसयति । अर्जिदृशि (उ० १।२७) इत्युः दीर्घश्च पांसुः। मदि कल्याणे इति दुर्गः ॥७८॥

६९. व्रज मार्ग संस्कारगत्योः। मार्ग[1]संस्कारे गतौ च। मार्गगतौ संस्कारगतौ चेत्येके द्वौ धातू इत्यन्ये[2]। व्राजयति। व्रजेति चन्द्रः। अत एव रुचादिना (१।१५८) सिद्धेर्नीपाठि। मार्गयति। मार्गः। व्रज मार्गणसंस्कारे इति दुर्गः ॥७९॥

७०. शुल्क सर्जने। शुल्कयति। शुल्क असर्जने[3] इत्येके ॥८०॥

७१. छपि गत्याम्। छम्पयति ॥८१॥

७२. क्षपि क्षान्त्याम्। क्षम्पयति ॥८२॥

७३. क्षजि कृच्छ्रजीवने। क्षञ्जयति। घटादौ क्षजि गतिदानयोः (१।५१७) ॥८३॥

७४. स्वर्त गत्यां च। चकारात् कृच्छ्रजीवने च। स्वर्तयति। गत्यामित्यसत्, स्वर्तशब्दस्यैव सम्भवात्[4]। षोपदेश इति नन्दी—सिष्वर्तयिषति। श्वभ्र गतौ च इति दौर्गाः—श्वभ्रयति, श्वभ्रम् ॥८४॥

७५. ज्ञप मारणतोषणनिशामनेषु मिच्च। घटादित्वात् (१।४४८) सिद्धे स्वार्थणिजर्थः पाठः, कर्त्रभिप्रायक्रियाफले[5] इति

---

१. स्मृत धातुवृत्तौ (पृष्ठ २८३)।

२. स्मृत पुरुषकारे (पृष्ठ ५६) धातुवृत्तौ (पृष्ठ २८३) च।

३. 'शुल्क असर्जने' पाठा०।

४. गत्या स्वर्तशब्दस्यासम्भवादित्यर्थः। धातुवृत्तिकारस्तु 'श्वर्त' इति पपाठ पृष्ठ (२८३)। वयं तु 'गर्ते' इति पाठ युक्तं पश्यामः। 'गर्ते वा पत्यते प्रवामीयते' इति दर्शनात्।

५. णिचश्च (१।३।७४) इति हेतुमण्ण्यन्तादेव कर्त्रभिप्राये क्रियाफल आत्मनेपदं शास्ति, न स्वार्थणिच इत्युक्त चुर-धातौ स्वामिना। तेन कर्त्रभिप्रायेऽपि परस्मैपदं यथा स्यादिति इह पाठ इति स्वाम्यभिप्रायः। लिखितेन नैतद्युक्तं इह आत्मनेपदविधायकसूत्रस्य १।३।७२ संख्या निर्दिष्टा, न तस्यात्र किञ्चित् कार्यम्।

परस्मैपदं यथा स्यात्. नियमार्थं वा—ज्ञपयमादिवर्जं नान्ये स्वार्थण्यन्ता मित इति । यमादीनां मित्त्वमवश्यं वाच्यम्, ज्ञपेस्तु सौकर्यार्थमनुवाद इत्येके । संज्ञपयति पशुम्, विज्ञपयति गुरुम्, प्रज्ञपयति शास्त्रम् । आज्ञप्तः, आज्ञपितः (द्र० ७।२।२७) । विज्ञप्य गुरुम्, प्रज्ञाप्य[1] धर्मम् आज्ञाप्य[1] भृत्यमिति, यथाकथंचित् तोषणे । एवं जिज्ञपयिषति ज्ञीप्सति । शोधनेऽप्यनेकार्थत्वात् मित्त्वमित्येके, ज्ञप्तिज्ञानयोरेकार्थत्वात् ॥८५॥

७६. यम परिवेषणे । यमयति । यम च इति दुर्गः, चकारः किलास्यैव मित्त्वमाकर्तुम्, चमादीनां मा भूदिति । यम चम इति चान्द्राः[2] पारायणे[3] । अत एव न कम्यमिचमाम् यमोऽपरिवेषणे (१।५।६७—६।१२) इति च विरोधान्नाध्यगीष्ट, इहापि यमोऽपरिवेषणे इत्येके पठन्ति ॥८६॥

७७. चह कल्कने । चहयति । चप इति चन्द्रः[4] रह त्यागे इत्येके, लम्, कथादिना (१०।२४५) सिद्धेः[5] ॥८७॥

७८. चल प्राणने । चलयति । ज्वलादौ (१।५७६) चलति ॥८८॥

७९. चिञ् चये । चययति । इति प्रमाणपारायणाद् अध्यायानाम्[6], चिस्फुरोर्णौ (६।१।५४) आत्वं मित्त्वे किकृतं स्यात् ? एतदन्ते मित्त्वानुवृत्तेः—चपयति । ञित्त्वमनित्यण्यन्तत्वे लिङ्गम्—चयते, चयति । स्वादौ (५।५) चिनोति, चिनुते । हेतौ । चापयति ॥८९॥

८०. नान्ये मितोऽहेतौ च । अन्ये ज्ञपादिपञ्चकात् स्यमशम घटनटश्रणाद्योऽहेतौ चौरादिके णिचि न मित्सञ्ज्ञाः—निशामयते, उद्घाटयति, एतश्च क्षो नैच्छत्[7], घटादीनां चेष्टादौ मित्वाद, योजनाद्यप्रसङ्गात्—झटिति घटयति विविरमितममिमुखीभूत.[8] ।

---

१. त्रिकप्यवत् 'प्रज्ञप्य' 'आज्ञप्य' इति शुद्धः पाठोऽत्र द्रष्टव्यः, यथाकथंचित् तोषणार्थस्य स्वीकारात् । २. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते पाठः ।

३. 'पारायणव्याख्यानात्' पाठा० । चान्द्रधातुपाठस्य पारायणनामक व्याख्यानं पूर्णचन्द्रकृतमिति बोध्यम् । ४. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

५. स्मृतं धातुवृत्तौ (पृष्ठ ३८४) । ६. कोऽभिप्राय इति न ज्ञायते ।

७. इयमनिष्ठा तेन स्वधातुव्याख्याने प्रकटीकृता स्यात् ?

८. अनुपलब्धमूलमिदम् ।

८१. घट्ट चलने । घट्टयति । घट्टना । घट्टो नद्यवतरणस्थानम्, अरघट्टः ॥९०॥

८२. खट्ट संवरणे । खट्टयति मुखम् ॥९१॥

८३. सट्ट हिंसायाम् । सट्टयति, सट्टकः ॥९२॥

८४ व्यय क्षये । व्याययति । चन्द्रो व्येआ (१।७३६) सिद्धि मन्यते । स्वप व्यय इति कौशिकः, व्युदि व्यय इति नन्दी—प्रव्युन्-यति ॥९३॥

८५. पूल संघाते । पूलयति, पूला । पूर्ण[1] इत्येके ॥९४॥

८६. पुंस अभिमर्दने । उत्पुंसयति ॥९५॥

८७. मुस्त संघाते । [मुस्तयति] ॥९६॥

८८ टकि बन्धने । टङ्कयति । टङ्कना । टङ्कनम् । टङ्कः, धिटङ्कः ॥९७॥

८९. धूप[2] कान्तिकरणे । धूपयति । तालव्यान्त इत्येके, दन्त्यान्त इति दौर्गाः—धूसरः ॥९८॥

९०. कीट वरणे[3] । कीटयति । कीटः ॥९९॥

९१. चूण संकोचने । चूणयति । चूर्ण इत्येके, तूण इति चन्द्रः—तूणीरः॥१००॥

९२. पूज पूजायाम् । पूजयति । चिन्तिपूजि (३।३।१०५) इति पूजा । पूज्यम् । राज्ञां पूजितः ॥१०१॥

९३. अर्क स्तवने । अर्कयति । तपन इत्येके ॥१०२॥

९४. शुठ आलस्ये । शोठयति । शठ इत्येके ॥१०३॥

९५. शुठि शोषणे । शुण्ठयति । शुण्ठी विश्वा । [केचिदेनमकारान्तं पठन्ति, लक्ष्यतस्तदपि प्रमाणम् ।][4] चन्द्रो भ्वादिना (१।२४०)

---

१. 'पुर्ण' इति धातुवृत्तौ (पृष्ठ ३८५) पुरुषकारे (पृष्ठ १०८) च पाठः ।

२. स्मृत धातुवृत्तौ (पृष्ठ ३८५) ।

३. सर्वकोशेष्वित्यमेव पठ्यते । 'वर्णे' इति धातुवृत्तौ (पृष्ठ ३८५) ।

४. अयं पाठः पुरुषकारे (पृष्ठ ९६) धातुवृत्तौ (पृष्ठ ३८५) च स्वामिनाम्नो-

साधयति ॥१०४॥

९६. जुड प्रेरणे । जोडयति ॥१०५॥

९७. गज मर्च[1] मार्ज शब्दार्थाः । गाजयति । भ्वादौ (१।१५६) गजति । मर्चयति[1] । मार्जयति । मार्जिता ॥१०६—१०८॥

९८. घृ स्रावणे[2] । घारयति[3] । भ्वादौ (१।६६९) घरति । ह्वादौ (३।१५) जिघर्ति । घृ सृ स्रावणे इति पूर्वे पेठुः, घर स्रवणे इति दुर्गः ॥१०९॥

९९. पचि विस्तारवचने । प्रपञ्चयति[4] । प्रपञ्चः । भ्वादौ पचि व्यक्तीकरणे (१।१०७) पञ्चते, पञ्चिका, विपञ्ची, पङ्क्तिः ॥११०॥

१००. तिज निशाने । तेजयति । तेजना, तेजनी । भ्वादौ (१।६९७) क्षमायां सन्—तितिक्षते, निशाने तेजत इत्याहुः ॥१११॥

१०१. कृत संशब्दने । संशब्दनमनुघोषः । कीर्तयति । कृतेः स्तुति (३।३।९७) इति कीर्तिः ॥११२॥

१०२. वर्ध छेदनपूरणयोः । वर्धयति । भ्वादौ (१।५०५) वर्धते ॥११३॥

१०३. कुपि[5] छादने । कुम्पयति । चिन्तपूजि (तु० ३।३।१०५) इति कुम्पा । कुबि इति कौशिकः—कुम्बा सुगहनावृतिः—(अमर० २।७।१८) ॥११४॥

१०४. लुबि तुबि अर्दने । लुम्बयति । प्रवालफललुम्बिभिः । तुम्बयति । तुम्बी, तुम्बकः । तुपि इति दौर्गाः । चान्द्रे द्वयोऽपि भ्वादौ सिद्धाः ॥११५, ११६॥

---

दृश्यत उपलभ्यते । कदाचिदत्र नष्टः स्यात् ।

१ 'मर्ज—मर्जयति' पाठा० ।

२ उद्धृत पुरुषकारे (पृष्ठ २६) धातुवृत्तौ (पृष्ठ ३८५) च ।

३ 'अभिघारयति' इति स्वामिनाम्नोदाजहार सायणः (धातुवृत्ति पृष्ठ ३८५) ।

४ अत्राह सायणः—'स्वामिकाश्यपमैत्रेयादयो भरान्तं पठन्ति' (धातु० पृष्ठ ३८६) इति । भरान्त भकारान्तमित्यर्थः । अत्र तु स्वामिमते चकारान्त पाठः, कौशिकमते तु भान्त ।

१०५ ह्लप व्यक्तायां वाचि । ॥११७॥

१०६. चुट छेदने । चोटयति । तुदादौ (६।८२) चुटति । चुटि इति नन्दी—चुण्टयति । चुडि[1] इति दुर्गः ॥११८॥

१०७. इल प्रेरणे । एलयति । भ्वादौ—एलति[2] ॥११९॥

१०८. म्रक्ष म्लेच्छने । म्रक्षयति ॥१२०॥

१०९. म्लेच्छ अव्यक्तायां वाचि । म्लेच्छयति । भ्वादौ (१।१२५) म्लेच्छति । म्रक्ष रोषे[3], म्लेच्छ अव्यक्ते शब्दे[4] इति सिद्धे चन्द्र एतौ नैच्छत् । बहुलमेतन्निदर्शनम् (१०।३२५) इति सर्वे चुरादौ पाठ्याः इति चान्द्रोऽभिप्रायः[5] ॥१२१॥

११०. ब्रीस बर्ह हिंसायाम् । ब्रोसयति । ब्रूस इत्येके । बर्हयत्यरिम् । भ्वादौ बर्ह प्राधान्ये (१।४२२) बर्हते प्राम्यः । ॥१२२,१२३॥

१११. गर्द शब्दे । गर्दयति । भ्वादौ (१।४७) गर्दति । गर्ज इत्येके ॥१२४॥

११२. गर्ध अभिकाङ्क्षायाम् । गर्धयति । दिवादौ (४।१३६) गृध्यति ॥१२५॥

११३. गुर्द पूर्वनिकेतने । पूर्वनिकेतनम् आद्यनिवासः ।[6] पारायणे द्वौ धातू—गुर्दयति[7], पूर्वयति । भ्वादौ पूर्व पूरणे (१।३८१)—पूर्वति ॥१२६॥

---

१. 'चुडि इति नन्दी-चुण्डयति । चुटि इति दुर्गः' इति पाठान्तरम् । अयमेव पाठो युक्तः प्रतिभाति कातन्त्रधातुपाठे 'चुटि छेदने' इति पाठदर्शनात् ।

२. भ्वादौ 'इल' न कश्चित् स्वामिना पठ्यते । तुदादौ ६।९५ तु पठ्यते । तौदादिके तु न भौवादिकं निर्दिश्यते ।

३. मुद्रिते चान्द्रधातुपाठे 'म्रक्ष संघाते' (१।२१७) पठ्यते ।

४. 'म्लेच्छ अव्यक्ते वचने' इति मुद्रिते चान्द्रधातुपाठे (१।५३) पठ्यते ।

५. 'चान्द्राभिप्रायः' पाठा० ।

६. अत्र धातुवृत्तौ 'पूर्वनिकेतनमासाद्याभ्यवहारः' इति पाठः स्वामिनाम्नोदभियते ।

७. सर्वहस्तलेखेष्वित्थमेव पठ्यते गुर्द भ्वादाव् (१।२०) यपि पठ्यते । तत्र दीर्घत्वस्यानित्यत्वमुक्त्वा गूर्दते गुर्दते इत्युभयथोक्तम् ।

११४, ११५. जसि रक्षणे, दहि[1] च । जंसयति, दंहयति[1] ॥१२७, १२८॥

११६. ईड स्तुतौ । ईडयति । अदादौ (२।१२) ईट्टे ॥१२९॥

११७. जसु हिंसायाम् । जासिनिप्रहण (२।३।५६) इति षष्ठी चौरस्योज्जासयति । दिवादौ (४।१०५) जस्यति ॥१३०॥

११८. पिडि संघाते । पिण्डयति । भ्वादौ (१।१७७) पिण्डते । पिण्ड, पिण्डी । पडि इत्येके—पण्डयति । पण्डित', पण्डा, भ्वादौ (१।१८५) पण्डते ॥१३१॥

११९. रुट रोषे । रोटयति । ग्रामरोट । रुषेत्येनयत्रौ मत्वा भ्वादिदिवादिभ्यां (१।४५८, ४।१२३) सिद्धमाह । रुट उपघाते । रुठ इत्येके ॥१३२॥

१२०. डपि डिपि संघाते । डम्पयति । डिम्पयति । डभि डिभि इति दौर्गा—डम्भयति, डम्भः, डिम्भयति डिम्भ ॥१३३,१३४॥

१२१. दभ दिभि क्षिप त्रिप डिप स्तिप क्षेपे । दाभयति । दिम्भयति । दभि इति नन्दी । दम्भयति । क्षेपयति । टेपयति । डेपयति । स्तेपयति । डबि डिबि इति चन्द्र.[2]—विडम्बयति । आडम्बर, डिम्बयति । डिम्ब शस्त्रकलह ॥१३५—१४०॥

१२२. स्तुप[3] समुच्छ्राये । स्तूपयति । दिवादौ ४।१२५) स्तूप्यति[3] अत्र नोपदेशमाह[4] तुष्टूपयिषति । स्तूपान्ते पर्यङ्के त्रिविधो सूत्रशते[5]

---

१. 'डभि—डम्भयति' पाठा० ।

२ मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

३. 'स्तूप' इति युक्त पाठ, अन्यथा 'स्तूपयति' इत्यत्र दीर्घत्व न स्यात् । दिवादावपि (४।१२५) स्तूप 'इत्येव' पठ्यते । अपि चैतस्मिन्नेव सूत्रव्याख्याने 'स्तूपान्ते पर्यङ्के इत्यत्र दीर्घ एव निर्दिश्यते ।

४. क आह इति न प्रतीयते । चुरादौ न मुद्रिते चान्द्रधातुपाठे नोपलभ्यते । दिवादाव् (४।७०) अपि मुद्रिते चान्द्रपाठे 'स्तुप' इत्येव पठ्यते ।

५. अस्माकीना तु द्वाविंशोत्तरशतसूत्रसंख्या भवति । 'वर्ध वर्धने' (१०।१७) इत्युत्तर 'पश परिग्रह इत्येके' इति पठ्यते, 'पशि नाशने' (१०।१८)

द्विचत्वारिंशन्धातुशतम्[1] । आदितः १६७७ ॥१४१॥

१२३. आ कुस्मादात्मनेपदी । कुस्मनाम्नो वा (१०।१५७) इति वक्ष्यति । आ एतस्मादितः परम् आत्मनेपदी गणः, यो यो धातुर्वा । अभिविधावाङ् मर्यादायां हि प्राक्कु[2]स्मादिति ब्रूयात् ।

१२४. चित संचेतने । चेतयते । भ्वादौ चिती संज्ञाने (१।१४) चेतति ॥१४२॥

१२५. दाश दाने । दाशयते । भ्वादौ (१।६२१) दाशति, दाशते ॥१४३॥

१२६. दशि दंशने । दंशयते । भासार्थः (१०।१९७) दंशयति । भ्वादौ दंश दशने (१।७२४) दशति ॥१४४॥

१२७. दसि दर्शनदंशनयोः । दंसयते दंसित. । भासार्थः (१०।१९७) दंसयति ॥१४५॥

१२८. तत्रि कुटुम्बधारणे । कुटुम्बं परिवारः, उपलक्षणमेतत् । तन्त्रयते । तन्त्रम् । स्वतन्त्रः । अवितृस्तृतन्त्रिभ्य ईः (उ० ३।१५८) —तन्त्रीः । अच इः (उ० ४।१३९)—तन्त्रिः । तन्द्रा तन्द्रीति पृषोदरादित्वात् (द्र० ६।३।१०९) । द्वौ धातू मत्वा चान्द्राः कुटुम्बयत इत्यप्युदाहरन्ति[3] ॥१४६॥

---

इत्युत्तरं 'मदि कल्याणे इति दुर्गः' इति पठ्यते । अनयोरेकतरं स्वामिना सूत्रमभिमतं स्यात् । तेनापि 'षच परिग्रहे इत्येके' इत्यस्यैव कथंचित् सूत्रत्वं सम्भवति न इतरस्य, यतो हि दुर्गः खलु कातन्त्रधातुपाठव्याख्याता, स चोत्तरकालिकः । वस्तुतस्तु अन्यत्र क्वचिदपि एकोऽयमत मूलधातुसूत्रेषु स्वामिना न पठितम्, इत्यतोऽस्यापि नैतत् सूत्रमिति मन्यामहे ।

१. अस्मद्गणनया १४१ धातवो भवन्ति । अत्र मन्ये स्वामिना 'वर्ध वर्धने' इत्युत्तरं पठ्यमानो वर्धधातुरप्यगृहीतः स्यात् । अत्र इतः पूर्वा टिप्पणी द्रष्टव्या ।

२. 'कुस्मेत' पाठा० ।

३. 'उदाजहुः' पाठा०, मुद्रिते चान्द्रधातुपाठे 'तत्रि कुटुम्बधारणे' इत्येवमेकधातुरूपं सूत्रं पठ्यते, स चापपाठः ।

१२९. मत्रि गुप्तभाषणे । मन्त्रयते । मन्त्रः ॥१४७॥

१३०. स्पश ग्रहणसंश्लेषणयोः । स्पाशयते । अत्स्मृदृत्वर (७।४।९५) इत्यपस्पशत् । अ दान्त (७।२।२७) इति स्पष्टः स्पाशितः । भ्वादौ स्पश बाधने (तु० १।६२६) स्पशति । स्पशश्चरः ॥१४८॥

१३१. भर्त्स तर्ज संतर्जने । भर्त्सयते, [भर्जयते] । लक्ष्ये भर्त्सयति तर्जयतीति दृश्यते । एवं 'निशामयति, मालयति, कोटयति, वश्चयति, निवेदयति' इत्यादि । अत एव चुरादिभूतान्स्वरान्नितानाकरोत्[1] । भ्वादौ तर्ज भर्त्सने (१।१४०)—तर्जति ॥१४९,१५०॥

१३२ वस्त गन्ध अर्दने । वस्तयते । वस्तः,वस्तिः । गन्धयते, गन्धः । गन्धर्वो घोटकः ॥१५१,१५२॥

१३३. किष्क हिंसायाम् । किष्कयते । किष्कुर्हस्ते वितस्तौ च (अमर० ३।३।७) किष्किन्धा । हिष्क इति दुर्गः, हिष्कितं लक्ष्यते । भ्वादौ (१।६०४) हिक्कति ॥१५३॥

१३४. निष्क परिमाणे । निष्कयते । निष्क. ॥१५४॥

१३५. लल ईप्सायाम् । लालयते । कुं[2] लालयते—कुलालः । भ्वादौ लड विलासे (१।२४०) लडति ॥१५५॥

१३६. कूण संकोचने । मुखं विकूणयते ॥१५६॥

१३७. तूण पूरणे । तूणयते । तूणः, तूणीरः । तूल इति चन्द्रः[3] ॥१५७॥

१३८. भ्रूण आशायाम् । भ्रूणयते । भ्रूणो गर्भः । आशंकायामित्येके ॥१५८॥

१३९. शठ श्लाघायाम् । शाठयते । शाठः । शट इति नन्दी, शल इति कौशिकः ॥१५९॥

---

१. उदात्तानुदात्तस्वरितविशिष्टान् इत्संज्ञकानित्यर्थः । काश्यपोऽप्याह—'कार्यमात्रादेव श्रुत्या पठ्न्ते' । चुरादय इति शेषः (द्र० धातु० पृष्ठ ३७०) ।

२. इतोऽग्रे कश्चित् पाठत्रुटितः ।

३. नोपलभ्यते मुद्रिते चान्द्रधातुपाठे ।

१४०. यक्ष पूजायाम् । यक्षयते । यक्षः । मनिन् (द्र० दश० उ० ६।७३) यक्ष्मा ॥१६०॥

१४१. स्यम वितर्के । स्यामयते । भ्वादौ स्यमु स्वन (१।५६५) इति मित्—स्यमति, स्यमयति ॥१६१॥

१४२. गूरी उद्यमे । उद्गूरयते । आगूरणः । तुदादौ गुरी उद्यमे (६।६५) उद्गुरते । अपगुरो णमुलि (६।१।५३) इत्यात्त्वं वा—अपगारम्, अपगोरम् ॥१६२॥

१४३. शम लक्ष आलोचने । निशामयते । वा दान्तशान्त (७।२।२७) इति शान्तः । अनालोचने—निशामितः । दिवादौ (४।९४) शाम्यति । शमोऽदर्शने (२।४७८) इति मित्त्वम्—शमयति रोगम् । लक्षयते लक्षणम्, लक्ष्यते । अन्यत्र लक्षयति घटम् ॥१६३,१६४॥

१४४. कुत्स अवक्षेपणे । कुत्सयते । कुत्सना । चिन्तिपूजि (३।३।१०५) इति कुत्सा ॥१६५॥

१४५. त्रुट छेदने । त्रोटयते रज्जुम् । तुदादौ (६।८०) त्रुटयति, वा भ्राश (३।१।७०) इति त्रुटति, त्रुट इत्येके[1] उत्त्रोडयते तृणम् ॥१६६॥

१४६. गल स्रावणे । गालयते, उद्गालयते । भ्वादौ (१। ३६४) गलति ॥१६७॥

१४७. भल आभण्डने । आभण्डनं निरूपणम् । निभालयते । ॥१६८॥

१४८. कुट प्रतापने । कोटयते ।[2] तुदादौ (६।१७१) कौटिल्ये—कुटति । त्रुट इति चन्द्र[3], अस एष च त्रुट छेदने (१०।१४६) इत्यनेनैव सिद्धम् । कूट धाप्रदान इति दुर्गः ॥१६९॥

१४९. वञ्चु प्रलम्भने । प्रलम्भनं मिथ्याफलाख्यानम् ।

---

१. धातुवृत्तौ (पृष्ठ ३८८) 'कुट इत्येके इति स्वामी' पाठ उद्भियते ।

२. पुरुषकारे (पृ० ६५) धातुवृत्तौ (पृ० ३८८) प्रौढमनोरमायां (पृष्ठ ६१८) च 'कुट्ट प्रतापने कुट्टयते' इति पाठ उपलभ्यते । स तु नेह दृश्यते ।

३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

एवमादीनामनुबन्धः प्रत्ययविधानार्थम्, स एवायमर्थान्तरे चुरादिरिति[1] । गृधिवञ्च्योः प्रलम्भने (१।३।६९) तङ्—वञ्चयते बालम्, अन्यथा हि वञ्चयति । भ्वादौ वञ्चु गतौ (तु० १।१२०)—वञ्चति ॥१७०॥

१५०. वृष शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यम्[2] । वर्षयते । वर्षधरः । भ्वादौ वृषु सेचने (१।४६४) [वर्षति] । तवर्गचतुर्थादिः सामर्थ्यधारणार्थं इत्येके—धर्षयतेऽरिम् ॥१७१॥

१५१. मद तृप्तिशोधने । शोधनं 'सम्पत्तिः'[3] । पक्षियोग इति मन्दो । मादयते । दिवादौ मदी हर्षे (४।१०१) माद्यति । घटादौ मदी हर्षग्लेपनयोः (१।५५२) मदयति ॥१७२॥

१५२ दिवु परिकूजने । देवयते गन्त्री । दिवादौ (४।१) दीव्यति । भ्वादौ देवने (तु० १।१३४) परिदेवने ॥१७३॥

१५३. गॄ विज्ञाने । गारयते । तुदादौ निगरणे (६।११०)—निगिरति । क्र्यादौ शब्दे (९।२७) गृणाति । कॄ विज्ञाने इति चन्द्रः ॥१७४॥

१५४. विद चेतनाख्यानविवादेषु । वेदयते सुखम्, आवेदयते कथाम्, प्रवेदयते वादिनम् । अदादौ (२।५७) वेत्ति, दिवादौ (४।६२) विद्यते । तुदादौ (६।१३२) विन्दति, विन्दते । रुधादौ (७।१७) विन्ते ॥१७५॥

१५५. मन स्तम्भे । स्तम्भो गर्वः । मानयते वृषलः[4] । पक्षे

---

१. धातुवृत्तिकारस्तु 'क्त्वायामिड्विकल्पार्थमनित्यणिच्चि लिङ्गमुकारानुबन्ध' इत्याह (पृष्ठ ३८८) ।

२. पुरुषकारे (पृष्ठ ८५) धातुवृत्तौ (पृष्ठ ३८६) च 'तृप्तिशोधने तर्पणशुद्धौ' इति स्वामिनाम्नोद्ध्रियते पाठः ।

३. धातुवृत्तौ (पृष्ठ ३८६) केशवस्वामिनाम्नोद्ध्रियतेऽयं पाठः ।

४. वृषलशब्दो हि द्व्यर्थकः—धर्मात्मवाची अधर्मात्मवाची च । तथा चोक्तं निरुक्ते—वृषलो वृषशीलो वृषाशीलो वा (३।१६) । धर्मात्मवाची 'वृषादिभ्यश्चित्' इत्यौणादिकेन (१।१०६) सूत्रेण सिध्यते । मुद्राराक्षसेऽसकृत् चाणक्येनोक्तमादरार्थं वृषलपदं धर्मात्मवाच्येव, न निन्दार्थकः । को हि नाम बुद्धिमान् राजानं निन्द्यपदेन वक्तुमुचितं मन्यते ।

मनतीति चन्द्रः[1] । दिवादौ (४।६६) मन्यते, तनादौ (८।९) मनुते । ॥१७६॥

१५६. यु जुगुप्सायाम् । यावयते ब्राह्मणान् जाल्मः। याव्यम्। अदादौ मिश्रणे (२।२५) यौति । क्र्यादौ बन्धने (९।७) युनाति । युञ् कुत्सायामित्येके—योजयते ॥१७७॥

१५७. कुस्म नाम्नो वा । कुस्ममिति दृष्टम्[2] । कुस्मेत्यस्मान्नाम्नः प्रातिपदिकाण्णिज् वा भवति । यद्वा—कुस्ममिति प्रकृत्यन्तरं दृष्टम्, कुपूर्वात्स्मयतेः—(१।६७८) परिस्खादिवद्[3] अन्येष्वपि दृश्यते (३।२।१०१) इति डप्रत्ययः । कुस्मयते, कुस्मयति । ननु स्मिङः कुपूर्वात् कुस्मयत इति सिद्धम्, कुस्माच्च नाम्नः सर्वप्रातिपदिकेभ्यः क्विपि (द्र० ३।१।११ भा०) कुस्मतीति सेत्स्यति तत्किमर्थं कुस्मनाम्नो णेरुच्यते?इति चोदयित्वा परिहरति–कुस्मयतिरकारितः इति। कोर्गतिना सह नित्यसमासोऽस्ति (द्र० २।२।१८), न तु कुत्सितं स्मयते इति तिङा उपपदमतिङ् (२।२।१९) इति। ततश्च स्मयते कु इत्यपि प्रयोगानियमः, स्यात्, स च नेष्यते । अथाण्यन्तेऽपि प्रकृत्यन्तरे भाषायामेतद्रूपं भवेत्,केन निर्वायत इत्याह—उपसर्गस्य बाह्यत्वमिष्यते प्रकुस्मयते, विकुस्मयत[4] इति.........ते भ्वधातोः (१।४।८०) इति, कुस्मयत इत्युपसर्गस्य इत्यपव्याख्या[5] । अपि च सार्वधातुके यकि

---

१. चन्द्रेण स्वीयधातुपाठव्याख्यायामेतल्लिखितं स्यात् ।

२. दृष्टम्, अग्रे च स्थूलाक्षरेषु मुद्रितानि वचनानि धातुपाठस्य सूत्राणि पूर्ववृत्तेर्वचनानि वा प्रतीयन्ते । इत्थं च कृत्स्नः पाठः—"कुस्मनाम्नो वा, कुस्ममिति दृष्टम्, कुस्मयतिरकारितः, उपसर्गस्य बाह्यत्वमिष्यते, तस्मात् कारित एव ।" धातुवृत्तौ त्वेवं पठ्यते—"कुस्मनाम्नो वा, कुस्ममिति दृष्टम्, कुस्मयतिरकारितमिति, कोर्नित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् कारितमेव ।" धातुप्रदीपे त्वित्थं पठ्यते—"कुस्म कुस्मयने, कुस्मनाम्नो वा, कुस्ममिति दृष्टमेव,कुस्मयतिरकारितः ।" सिद्धान्तकौमुद्यां नैतानि वचनानि व्याख्यायन्ते ।

३. यथा परिस्खाशब्दे डस्तथैव कुस्म इत्यत्रापीत्यर्थः ।

४. इतोऽग्रे कश्चित् पाठस्त्रुटितः ।

५. कस्येयं व्याख्येति न ज्ञायते ।

णिलोपे कुस्म्यत इतीष्यते, कुस्मीयत इति स्यात्, कुस्मयाञ्चक्रे इत्यपि कुस्मियाञ्चक्रे इति वा, कुसिष्मिया इति वा, अचुकुस्मतेति वा, चुकुस्मायिषते कुसिस्मयिषते इति, कुस्मनेति कुस्मितिः कुस्मयित्वेति प्रकुस्म्येति, तस्माद्कारित एव। न तु स्वार्थनिर्देशं विना क्रियावाचित्वाभावात् क्रियानिबन्धनाः कारकप्रत्ययाः कर्तव्याः। अथ तत्करोत्याद्यर्थे सूत्रयत्यादिवद् (द्र० ३।२। २६ वा०) अपि णिज् इष्यते, तर्हि प्रातिपदिकाद् धात्वर्थे (१०।२६५) इत्यनेन सिद्धः ? सत्यम्, किन्त्वात्मनेपदप्रवृत्तिर्धातुरूपनिवृत्तिश्च पृथक्पाठेऽस्य प्रयोजनम्। दुर्गस्तु कुस्मयन इत्यपाठीत्। कुस्मेति धातुर्मतिरयं बुद्ध्योत्पादितमर्थमाहेति च ॥१७८॥

चतुस्त्रिंशतिसूत्रेषु सप्तत्रिंशता धातुभिराकुस्मीयपर्यन्तैकः।

१५८. चर्च अध्ययने। चर्चयति वेदम्। चिन्तिपूजि (३।१। १०५) इति चर्चा ॥१७९॥

१५९. बुक्क भाषणे। बुक्कयति श्वा। भ्वादौ (१।८७) बुक्कति ॥१८०॥

१६०. शब्द उपसर्गादाविष्कारे[1]। प्रतिशब्दयति गिरिः 'प्रतिश्रुत्कामा[2]ऽऽविष्करोति' इत्यर्थः। विशब्दयति। योगविभागादाविष्कारे चेत्यनुपसर्गादपीति नन्दी—शब्दयति। दौर्गा शब्द इत्येकं सूत्रम्, शब्दक्रियायामित्यर्थः, तत उपसर्गाद् आविष्कार इति। चन्द्रः[3] प्रातिपदिकाद्धात्वर्थे (१०।२९५) इत्यनेनैव साधयति ॥१८१॥

१६१. कण निमीलने। काणयति चक्षुः। काणः। भ्वादौ (१।३०२) कणति। मित्त्वात् (द्र० १।५३८) कणयति ॥१८२॥

---

१. धातुवृत्तौ त्वेवं पाठ उद्ध्रियते 'यत्र स्वामी शब्द उपसर्गादाविष्कारे चेति पठित्वा उपसर्गपूर्वाच्छब्द इत्यस्मादाविष्कारे चकाराद् भाषणे च......' (पृष्ठ ३१०)।

२. धातुवृत्तौ 'प्रतिश्रुतमाविष्करोतीत्यर्थः' इति पाठ उद्ध्रियते (पृष्ठ ३१०)।

३. इद चन्द्रेण स्वोपज्ञे धातुव्याख्यान एवोक्तं स्यात्।

१६२. जभि नाशने । जम्भयति, जम्भयते । भ्वादौ जभ जभि जृम्भणे (१।२७३)—जम्भते, जम्भते ।, चन्द्रो जभ[1] इत्याह । रधिजभोरचि (७।१।६१) इति नुम्—जम्भयितुम् ॥१८३॥

१६३. षूद आस्रवणे[2] । सूदयते । घाते च केचित्—निषूदयति । भ्वादौ क्षरणे (१।२१)—सूदते, सूदः, निषूदितः ॥१८४॥

१६४. जस ताडने । जासिनिप्रहण (२।३।५६) इति चौरस्यो-ज्जासयति । दिवादौ (४।१०५) जस्यति । जसि (१०।११४) इत्युक्तम्—जंसयति ॥१८५॥

१६५. पश बन्धने । पाशयति । भ्वादौ पशति,[3] पशते । उभयत्रापि मूर्धन्यान्त इति दुर्गः ॥१८६॥

१६६. अम रोगे । आमयति । भ्वादौ अम गत्यादिषु (१।३१२) अमति । घटादौ अम रोगे[4] अमयति, अतिशब्दाद् गुणादेशो द्रष्टव्यः[5]। आमयः, आमयते ॥१८७॥

१६७. चट स्फुट भेदे[6] । उच्चाटयति । स्फोटयति । भ्वादौ (१।२२६) स्फोटति । तुदादौ (६।७८) स्फुटति ॥१८८॥

१६८. घट च । १६९. हन्त्यर्थाः । चट स्फुट घट च हन्त्यर्थाः, एते हन्त्यर्थे णिचमुत्पादयन्ति ।[7] उच्चाटयति, आस्फोटयति, विघा-

१. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

२. 'आस्रवणे' पाठा० ।

३. स्वामी भ्वादौ (१।६२६) तालव्यान्त न पपाठ, एतेषां मते 'पष' इत्याह ।

४. घटादौ 'न कम्यमिचमाम्' (१।८५६) सूत्रे निर्दिश्यते, 'अम रोगे' इत्येव न क्वचित् भ्वादौ पठ्यते ।

५. अस्याभिप्रायो न ज्ञायते ।

६. 'भेदने' इत्युद्ध्रियते पुरुषकारे (पृष्ठ ६२) ।

७. अत्र पुरुषकारे भूयान् पाठभेदो दृश्यते । तथाहि—'क्षीरस्वामी तु चट स्फुट भेदने । चाटयति, स्फोटयति । घट च—घटधातुश्च भेदने वर्तते । हन्त्यर्थाः हन्त्यर्थाश्च धातवो णिचमुत्पादयन्ति' इत्युक्त्वा दर्शनान्तरमप्याह—'घट च हन्त्यर्थाः ।

टयति । अन्ये[1] तु चट इति भास्फुटी—आस्फोटने चुरादिरिति व्याख्यन्, अन्यत्र भ्वादिः उच्चटयति । केचित्तु हन्त्यर्थाः स्वार्थे चेत्याहुः—घाटयति, लोडयति, गणान्तरपाठाद् वेति—तुदति (६।१) । इत्थं तुदौ हिंसार्थपाठ आत्मनेपदार्थः, घट संघाते इति दुर्गः—संघाटयति । घटेर्घटादौ (१।५१०) घुणार्थस्तङ्र्थो मित्संज्ञार्थश्च पाठः ॥१८९॥

१७०. दिवु अर्दने । परिदेवयति । अन्यत्र दीव्यति (४।१) चन्द्रो दिवु परिकूजने[2] इत्येव निष्ठिमाह[3] ॥१९०॥

१७१. अर्ज प्रतियत्ने । प्रतियत्नः संस्कारः । अर्जयति । भ्वादौ अर्ज सर्ज अर्जने (१।१३८)—अर्जति ॥१९१॥

१७२. घुषिर विशब्दने । विशब्दनं विशिष्टशब्दकरणम् । उद्घोषयति । अविशब्दन इत्येके । अपघोषयति पापम्, अपह्नुत इत्यर्थः । इरित्वमनित्यण्यन्तत्वे लिङ्गम्—अघुषत्, अघोषीत्, अजूघुषत् । घुष विशब्दने इति कौशिकः । भ्वादौ (१।४३४) घोषति ॥१९२॥

१७३. आङः क्रन्दसातत्ये । चुरादिः[4], आक्रन्दयति । अन्यत्र (१।५८) क्रन्दति ॥१९३॥

१७४. लप[5] शिल्पोपयोगे । लापयति । भ्रमादिना तक्ष्णोतीत्यर्थः । अन्यत्र लपति, लप्यति (१।६२७) । तालव्यान्त इति कौशिकः—लाशयति ॥१९४॥

---

घट स्फुट धातू द्वौ घट च धातुत्रयः, एते हन्त्यर्था हन्तिना समानार्थाः णिचमुत्पादयन्ति' इति (पृष्ठ ६२) ।

१. वक्ष्यमाणः पाठः शाकटायनस्येति पुरुषकारः (पृष्ठ६२) ।

२. 'परितप्तकूजन' ? पाठा० ।

३. चन्द्रस्तु 'दिवु परिकूजने' इत्यपि धातुपाठे न पठति, कुतस्तस्य सिद्धिः ? अत्र क्षीरतरङ्गिण्याम् (१०।१५२) सूत्रे पठ्यते ।

४. अत्राह धातुवृत्तिकारः—'स्वामी तु आङ्पूर्वो घुषिः क्रन्द सातत्ये चुरादिः, आघोषयति' (पृष्ठ ३६१) ।

५. अत्र पुरुषकारधातुवृत्तिकारमैत्रेयमनोरमाकारादयः स्वामिमते 'लस' इति दन्त्यं पठित्वा 'लष' इति मूर्धन्यान्तमिति केचित्' इति पठन्ति (पृष्ठ—पु० ११९, धा० ३५१, मै० ६१८) ।

**१७५. भूष अलंकारे** । भूषयति । भ्वादौ (१।४५५) भूषति । तसि भूषेति दुर्गः[1]—उत्तंसयति । अवतंसयति, उत्तंसः, अवतंसः ॥१९५॥

**१७६. मोक्ष असने**[2] । मोक्षयति शरान् । अन्यत्र (६।१३३) मोक्षते ॥१९६॥

**१७७. अर्ह पूजायाम्** । अर्हयति, आर्जिहत्, अर्हितम्, अर्हणा । भ्वादौ (१।४८८) अर्हति ॥१९७॥

**१७८. ज्ञा नियोजने** । आज्ञापयति भृत्यान् । ज्ञापितः; ज्ञापना । अन्यत्र (९।३८) जानाति ॥१९८॥

**१७९. भज विश्राणने** । विश्राणनं दानम् । विश्राणे विपेचन इत्यन्ये । भाजयति, भाजो[3] (द्र० ४।१।४२) अन्यत्र (१।७२५) भजति, भजते ॥१९९॥

**१८०. शृध अप्रसहने** । अप्रसहनम् = अमर्षः । प्रसहने = अभिभवे इत्येके । शर्धयत्यरिम् । अशशर्धत, अशीशृधत । भ्वादौ शृधु शब्दकुत्सायाम् (१।५०६)—शर्धते, तथा शृधु मृधु उन्दे (१।६१३)—शर्धते, शर्धति ॥२००॥

**१८१. यत निकारोपस्कारयोः**[4][5] । निकारः[4] खेदनम् । यातयत्यरिम् । यातना तीव्रवेदना । यातयति राजा छिद्रम्, छादयतीत्यर्थः । प्रतियातयति—प्रतिबिम्बयति, प्रतियातना = प्रतिबिम्बम् । भ्वादौ यती प्रयत्ने (१।२६) यतते । निरश्च धान्यधनयोः प्रतिदाने—निर्यातयत्युणम्, शोधयतीत्यर्थः, धान्यधने उपलक्षणम् ॥२०१॥

---

१. इत्येव भ्वादौ (१।४५५) अप्याह स्वामी ।

२. 'सहने' पाठा० ।

३. 'अभिलाषी' इत्यधिकं क्वचित् ।

४. 'निराकार इति तु पाठो दृश्यते, निराकारः परिभव इति च क्षीरस्वामी' इति पुरुषकारोद्धृतः पाठः (पृष्ठ ७६) । दीक्षितोऽपि प्रौढमनोरमायां 'स्वामी तु निकारस्थाने निराकारेति पठित्वा निराकारः परिभव इति व्याचख्यौ' इत्याह (पृष्ठ ६१८) । एवं धातुवृत्तिकारोऽपि (पृष्ठ ३९२) । अत्र तु सर्वत्रैवान्यः पाठ उपलभ्यते ।

५ 'निकारोपसंस्कारयोः' पाठा० ।

१८२. वस स्नेहच्छेदापहरणेषु[1]। वासयति, वासना, वासयति सूक्ष्मम्, वासयत्यरिम्, हन्ति इत्यर्थः। भ्वादौ (१।७३३) वसति, अदादौ (२।१६) वस्ते; वस्त्रम् ॥२०२॥

१८३. चर संशये। विचारयति। विचारणा हि सति संशये भवति। चर असंशये इति दुर्गः। अन्यत्र (१।३७१) चरति ॥२०३॥

१८४. च्यु सहने। च्यावयति। भ्वादौ (१।६८२) च्यवते। च्युस सहने[2] इति एके, हसने च इति एके—च्योसयति ॥२०४॥

१८५. भुवोऽवकल्कने। अवकल्कनम् मिश्रीकरणम्[3]। भावयति दध्नौदनम्[4]। अनित्यण्यन्तत्वार्थेयं पञ्चमी। विकल्कने इति नन्दी—भावयेद् ब्राह्मणस्तपः, भावितम्। भू प्राप्तावात्मनेपदी (१०।२११) विभाषा णिच्—भावयते, भवते। भू सत्तायाम् (१।१) भवति ॥२०५॥

१८६. कृपेस् तादर्थ्ये। तादर्थ्यम् उद्देशविषयम्[5]। कल्पयति देवताभ्यो हविः, संकल्पयति। भ्वादौ कृपू सामर्थ्ये (१।५०८)—कल्पते तादर्थ्येऽवकल्कन इत्येके। अत एव भू इव अवकल्कने इति दुर्गः। चान्द्रा द्वायप्यवकल्कने=चिन्तन इति व्याख्यन्[6]—सम्भावयति, अवकल्पयति ॥२०६॥

---

१. 'स्नेहच्छेदावहननेषु' पाठा०।

२. 'हासे' पाठा०।

३. उद्धृतम्—धातुवृत्तौ (पृष्ठ ३९२) पुरुषकारे (पृष्ठ १२) च।

४. 'भावयति क्षीरेण घृतम्' इति पुरुषकारे पाठः (पृष्ठ १२)।

५. अत्र पुरुषकार इत्यमुद्रितपाठे—'स्वामी तु कृपेर्योऽयं तादर्थ्ये स्मात इति व्याख्यायावकल्पयति इत्युदाहृत्य च सामर्थ्यो भवति इति व्याचष्ट' (पृष्ठ १२, ११)। धातुवृत्तौ (पृष्ठ ३८२) प्रौढमनोरमायां (पृष्ठ ६११) चैवं स्वामिपाठो निर्दिश्यते—'क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्यं इति अनुकरण मुद्रोऽर्थे मिश्रीकरणे, अथवा तद्भावेन कल्पितः पराश्रयने। तत्र योऽर्थः नामार्थंस्वरूपः, हविरादि द्वेधा व्याख्यद्' इति।

६. चान्द्रधातुपाठे नैवायं धातुः पठ्यते। कुत्र चान्द्रैरिदं व्याख्यात-मित्यपि विचारणीयम्।

१८७. रग लग आस्वादने[1] । रागयति, लागयति । अन्यार्थे घटादौ रगे शङ्कायाम्, लगे सङ्गे (१।५३२, ५३३)—रगति, लगति, रगयति, लगयति । रक लकेति चन्द्रः,[2] आसादने[3] इति दुर्गः ॥२०७॥

१८८. अन्चु विशेषणे । विशेषणम्—अतिशयः । अञ्चयत्यर्थान्, व्यक्तीकरोत्यर्थः । भ्वादौ अन्चु गतौ (१।११९)—अञ्चति ॥२०८॥

१८९. लिगि चित्रीकरणे । लिङ्गयति, उल्लिङ्गयति, लिङ्गम् । भ्वादौ लिगि गत्यर्थः (१।९१)—आलिङ्गति ॥२०९॥

१९०. मुद संसर्गे । मोदयति सर्पिषा सक्तून् । मोदकः । भ्वादौ मुद हर्षे (२।१६)—मोदते ॥२१०॥

१९१. उध्रस उञ्छे । क्र्यादिः (९।५६) पवायं स्वार्थणिजर्थः पठित इत्युदित्त्वम्—ध्रासयति, ध्रस्नाति । प्रयोगसमवायीत्येके—उद्ध्रासयति, उद्ध्रस्नाति ॥२११॥

१९२. मुच प्रमोचने । मोचयति शरान् । भ्वादौ मुच कल्कने (१।१०५)—मोचते, तुदादौ मुच्लृ मोक्षणे (६।१३३)—मुञ्चते, मुञ्चति ॥२१२॥

१९३. आस्वदः सकर्मकात् । ष्वद संवरणे (१०।२००) इति पठ्यति, आ एतस्मात् इत ऊर्ध्वं सकर्मकाण्णिच् क्रियते[4]। शाकटायनस्त्वाङ्पूर्वात् स्वादेराह[5]—आस्वादयति दधि, अन्यत्र भ्वादित्यात् (१।१८) स्वदते, स्वादमनुभवतीत्यर्थः ।

---

१. 'धाम्स्वादने' पाठा० ।

२. चान्द्रधातुपाठे नैव पठ्यते ।

३. 'आस्वादने' पाठा० । दौर्गधातुपाठस्यास्मत्हस्तलेखे नायं धातुः पठ्यते । अतः पाठशुद्धिः कीदृशीति न ज्ञायते ।

४. अत्र पुरुषकारधातुवृत्तिकारप्रौढमनोरमाकाराः स्वामिपक्षे 'आङ्पूर्वात् स्वदेः सकर्मकाण्णिज् भवति । यथ आस्वादयति' इति पाठमुद्दभिरे (पृष्ठ–पु० ४४, धा० ३६२, प्रौ० ३१९) । अत्र [illegible] न तथोपलभ्यते ।

५. काशकृत्स्नः 'स्वद आस्वादने, आस्वादः सकर्मकात्' इति पठन् (पृष्ठ २८१) नायमभिविधावाङ् इति स्पष्टमुद्घोषयति । तथैव शाकटायनोऽपि व्याचष्टे ।

१९४. ग्रस ग्रहणे । ग्रासयति [फलम्]। ग्रस वारणे इति दुर्गः—ग्रासयति मृगान् । धारण इति नन्दी, ग्रहण इत्येके । अन्यत्र (४।९) ग्रसति ग्रस्यति ॥२१२॥

१९५. पुष धारणे । पोषयत्याभरणान् । भ्वादौ (१।४६२) पोषति, दिवादौ (४।७२) पुष्यति, क्र्यादौ (९।६०) पुष्णाति ॥२१३॥

१९६. दल विदारणे । दालयति दारु । दालपः, दाल्मिः । भ्वादौ दल विशरणे (१।३६६)—दलति, मित्त्वाद् (द्र० १।५५२ व्याख्यानम्) दलयति ॥२१४॥

१९७. पट पुट रुट लुट तुजि पिजि लजि लुजि अजि कुसि कुशि भ्रसि दसि दशि घटि रघि लघि अहि बहि महि गुपू धूप विच्छ चीव बर्ह बल्ह पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भासार्थाः । एते सकर्मका भासार्था[1] णिचमुत्पादयन्ति । पाटयति, फलिपाटि (उ० ४।१८) इति पटुः, भ्वादौ (१।१९८) पटति । एषां गणान्तरे पाठः सकर्मकत्वेऽपि णिज्विकल्पार्थः, इहैव पठितांस्तु न्याय्यविकरणान् प्रत्युदाहरन्ति—भ्रंसति, कुसतीति । पोटयति, तुदादौ (६।७२) पुटति । रोटयति, लोटयति, भ्वादौ (१।४९७ पाठा०) रोटते, लोटते, दिवादौ लुट प्रतिघाते (४।११६) लुट्यति । तुञ्जयति, भ्वादौ (१।१५४) तुञ्जति । पिञ्जयति अदादौ (२।२० पाठा०) पिङ्क्ते । लञ्जयति[2], लञ्जति । लुञ्जयति, लुञ्जति । अञ्जयति, रुधादौ (७।२१) अङ्क्ते, व्यनक्ति । कुंसयति, कुंसति, मुकुंस, मुकुंशः । कुंशयति, कुंशति । भ्रंसयति, भ्रंसति । दंसयति, दंसति । दंशयति, भ्वादौ दन्श दशने (१।७१६) दशति । घण्टयति, घण्टति, घण्टा । रङ्घयति, लङ्घयति, भ्वादौ (१।७५) रङ्घते, लङ्घते । अंहयति, बंहयति, मंहयति, भ्वादौ अहि गतौ, बहि महि वृद्धौ (१।४२१, ४२०)—अंहते, बंहते, मंहते । गोपयति, धूपयति, विच्छयति, भ्वादौ (१।२८०,

---

१. अत्राह धातुवृत्तिकारः—'तथा च क्षीरस्वामी—भासा दीप्तिरर्थो येषां ते भासार्थाः इति' (पृष्ठ ३६३) । नात्राय पाठ उपलभ्यते ।

२ तस्मात् पुरुषकारः (पृष्ठ ६१) ।

२८१।६।१२६) गोपायति, धूपायति, विच्छायति, गुपूधूपविच्छ (३।१।२८) इत्यायः। चीवयति, भ्वादौ चीव आदाने (तु० १।६२८)—चीवति। वर्हयति, वल्हयति, भ्वादौ बर्ह बल्ह प्राधान्ये (१।४२३)—बर्हते, वल्हते। पोषयति, दिवादौ पुष हिंसायाम् (४।११)—पुष्यति। विलोकयति, आलोचयति, भ्वादौ (१।६३, १००) लोकते, लोचते। नादयति, भ्वादौ (१।४५) नदति। कोपयति, दिवादौ (४।१२६) कुप्यति। तर्कयति, वितर्क[1], तर्कितः। वर्तयति, वर्धयति, भ्वादौ (१।४०४, ४०५) वर्तते, वर्धते। अन्ये भजिपिसिलडिशुरितडिनटादीन् पठन्ति—भञ्जयति, रुधादौ (७।२१) भनक्ति। पिसयति, पिसति। लण्डयति, लण्डति। शृंहयति, भ्वादौ (१।४८५) शृंहते[1]। ताडयति, तडति। नाटयति, नटति, भ्वादावात्मनेपदीति नदी—नटते। घटादयः सकर्मकाः स्वार्थे णिचमुत्पादयन्ति सामार्थ्येति धातापणम्—भासयति श्विताः—दीपयति, इन्धयति, प्रकाशयति। गणान्तरपाठस्तेषां कार्यान्तरार्थः ॥२१५, २१६—२४९॥

१९८. पूरी आप्यायने। पूरयति, दिवादौ (४।४१) पूर्यते ॥२५०॥

१९९. रुज हिंसायाम्। रोजयति। तुदादौ रुजो भङ्गे (६।१२०)—रुजति ॥२५१॥

२००. ष्वद संवरणे[1]। स्वादयति, सिष्वादयिषति (द्र० ८।३।६२)। भ्वादौ ष्वद आस्वादने (१।१८) स्वदते ॥२५२॥

सकर्मकपर्यन्तकः। अत्र च द्विपत्वारिंशतिसूत्रेषु सततसविर्धातवः।

२०१. आ धृषाद्वा। धृष प्रसहने (१०।२१८) इति वक्ष्यति, आ एतस्माद् इत उत्तरेभ्यो णिज् वा भवतीत्यधिक्रियते। पक्षे भ्वाद्यो विकरणः शप्। इह नियमेन णिचो विकल्पः। अनित्यण्यन्तत्वं [illegible] यथालक्ष्यम्, क्वचिद् विकल्पार्थम्।

२०२. युज पृची सम्पर्चने[3]। योजयति, योजति, दिवादौ

१. भ्वादौ परस्मैपदिषु पठ्यते तेन 'शृंहति' इति साधु स्यात्।

२. उद्धृत धातुवृत्तौ (पृ० ३९४)।

३. 'सम्पर्चने इति क्षीरस्वामी' इति पुरुषकारः (पृ० ५२)।

युज समाधौ (४।६७) युज्यते, रुधादौ युजिर् योगे (७।७)—युनक्ति। सम्पर्चयति, रुधादौ (७।३०) सम्पृणक्ति, अदादौ पृची सम्पर्के (२।२१) संपृक्ते ॥२५३, २५४॥

२०३. अर्च पूजायाम्[1]। अर्चयति, अर्चति ॥२५५॥

२०४. षह मर्षणे। साहयति, सहति। यथा—स एवायं नागः सहति कलभेभ्यः परिभवम् (सुभाषित—६११) भ्वादौ (१।५९०) सहते ॥२५६॥

२०५. ईर क्षेपे। क्षेपः प्रेरणम्। ईरयति, ईरति। अदादौ (२।११) ईर्ते ॥२५७॥

२०६. ली द्रवीकरणे। विलालयति,[2] विलापयति। विलाययति, विलयति, विलयः विलायितम्। लियो वा[3] इति व्यवस्थितविभाषात्वाद् विलम्भनपूजाभिभवेभ्योऽन्यत्रात्वं मास्त्वीत्यैत्वायौ, विलम्भनादावेवात्वं पुक् च—कस्त्वमुल्लापयते? आलापयति, अपलापयते, लियः सम्माननशालीनीकरणयोश्च (१।३।७०) इति तङ्, स्नेहविपातने[4] लुक् (तु० ७।३।३९) घृतं विलीनयति। दिवादौ लीङ् श्लेषणे (४।२६)—लीयते क्र्यादौ (९।३२) लिनाति ॥२५८॥

२०७. वृजी वर्जने। वर्जयति, वर्जति। अदादौ (२।२० व्याख्याने) वृक्ते, रुधादौ (७।२९) वृणक्ति ॥२५९॥

२०८. वृञ् आवरणे। [5] आवारयति; आवरति, आवरते। स्वादौ (५।९) वृणुते, वृणोति, क्र्यादौ वृङ् सम्भक्तौ (९।४२) वृणीते[5] ॥२६०॥

२०९. जॄ वयोहानौ। जारयति, जरति, जारणा। दिवादौ (४।२०) जीर्यति, जीर्णः। क्र्यादौ (९।२४) जृणाति। ज्रि इति च नन्दी—ज्राययति, ज्रयति, क्र्यादौ ज्रिणाति ॥२६१॥

---

१. अत्र बालमनोरमा द्रष्टव्या चुरादि १८०९।

२. 'विलीनयति' पाठा०।

३. कुत्रत्यं सूत्रमिति न ज्ञायते। पाणिनीयं तु 'विभाषा लीयतेः' (६।१।५१) द्रष्टव्यम्।

४. 'विपातने' पाठान्तरम्।

५. 'आवारयति………वृणीते' पुरुषकारे (पृष्ठ ३९) उद्धृतः। तत्रैव चेतोऽग्रे 'तुदादौ वृङ् संभक्तौ व्रियते इति' इत्यधिकं पठ्यते, तदत्र नास्ति।

२१०. रिच वियोजन-सम्पर्चनयोः । रेचयति, रेचति । रुधादौ (७।४) रिणक्ति[1] ॥२६२॥

२११. शिष असर्वोपयोगे । असर्वोपयोगोऽनुपयुक्तत्वम् । शेषयति, शेषति । विपूर्वोऽतिशये । अतिशय उत्कर्षः । विशेषयति, विशेषति, व्यशेषीत् । रुधादौ शिष्लृ विशेषणे (७।१६) विशिनष्टि, व्यशिषत् ॥२६३॥

२१२. तप दाहे । तापयति, तपति ॥२६४॥

२१३. तृप दृप संदीपने[2] । तर्पयति, तर्पति । दिवादौ तृप प्रीणने (४।८६) तृप्यति । स्वादौ तृप्नोति[3] । दर्पयति, दर्पति । दिवादौ (४।८७) दृप्यति । चृत छृदेत्येके—चर्तयति, चर्तति; छर्दयति, छर्दति ॥२६५,२६६॥

२१४. दृभी भये । दर्भयति, दर्भति । क्र्यादौ दृभी ग्रन्थे—दृभ्णाति[4] ॥२६७॥

२१५. छद संवरणे[5] । छादयति, छदति । अर्जने घटादिः (१।५५०)—छदयति ॥२६८॥

२१६. श्रथ हिंसायाम् । श्राथयति, श्रथति । श्रन्थेत्येके—श्रन्थयति, श्रन्थति ॥२६९॥

२१७. मी गतौ[6]; मनने । माययति, मयति । दिवादौ (४।२७) मीयते, क्र्यादौ (९।४) मीनाति ॥२७०॥

२१८. क्रथ हिंसायाम् । क्राथयति, क्रथति । घटादौ (१।५३९) मित्—क्रथयति ॥२७१॥

---

१. इतोऽग्रे 'रिङ्क्ते' इत्यधिकम् ।

२. उद्धृत धातुवृत्तौ (पृष्ठ ३६४) ।

३ क्षीरस्वामी स्वादौ तृपधातुं न पठति । काशकृत्स्ने (पृष्ठ २२१) दीर्घे च धातुपाठे 'धिवि तृप प्रीणने' इति पठ्यते । पाणिनिः क्षुभ्नादिषु (गण० ८।४। ३९) तृप्नोतिशब्दं पठति । तेनास्य स्वादिपाठो युक्तः प्रतिभाति ।

४. क्षीरतरङ्गिण्यां क्र्यादौ दृभी ग्रन्थे न पठ्यते । तुदादौ (६।३५) पठ्यते, तेन दृभति इति युक्तम् । ५. अत्र १०।३७ टिप्पणी द्रष्टव्या ।

६. उद्धृत पुरुषकारे (पृष्ठ २७) ।

२१९. शीक आमर्षणे । शीकयति, शीकति, अशीशिकत् । भ्वादौ शीक सेचने (१।६२)—शीकते, अशिशीकत् ॥२७२॥

२२०. अर्द हिसि हिंसायाम् । अर्दयति, अर्दति । हिंसयति, हिंसति । रुधादौ (७।२४) हिनस्ति ॥२७३, २७४॥

२२१. आङः पद पद्यर्थे । पद्यतेरर्थो गतिः । आसादयति, आसदति,[1] आसीदतीत्येके । अन्यत्र (१।६९४) सीदति ॥२७५॥

२२२. शुन्ध शौचकरणे । शुन्धयति, शुन्धति ॥२७६॥

२२३. जुष परितर्पणे[2] । जोषयति, तुदादौ जुषी प्रीतिसेवनयोः (६।१०)—जुषते ॥२७७॥

२२४. धूञ् कम्पने । धूनयति, 'धावयति' इत्येके[3] । धवते, धवति, धूनितः । स्वादौ (५।१०) धुनोति, धूनोति । तुदादौ (६।९८) धुवति, क्रयादौ (९।१६) धुनाति ॥२७८॥

२२५. प्रीञ् तर्पणे । प्रीणयति,[4] प्रीञ्धूञोर्नुक् च साहचर्यात् (तु० ७।३।३७ वा०) प्राययति इत्येके, प्रयते, प्रयति, प्रीणितः दिवादौ प्रीङ् प्रीतौ (४।३४)—प्रीयते, क्रयादौ (९।२) प्रीणाति, प्रीणीते ॥२७९॥

२२६. श्रन्थ ग्रन्थ संदर्भे । संदर्भो ग्रन्थनम् । श्रन्थयति, ग्रन्थयति । श्रन्थति, ग्रन्थति । भ्वादौ श्रथि शैथिल्ये, ग्रथि कौटिल्ये (१।२६,३०) श्रन्थते, ग्रन्थते । क्रयादौ (९।४४, ४६) श्रथ्नाति, ग्रथ्नाति ॥२८०,२८१॥

२२७. आप्लृ लम्भने । लम्भनं प्राप्तिः । आपयति, आपति, आपितम् । स्वादौ व्याप्तौ (५।१७) आप्नोति । आप्तम् ॥२८२॥

---

१. द्र० 'अभिषेदत्' काश्यप संहिता (पृष्ठ ४१) ।

२. 'परितर्पणे परितप्तिक्रियायाम् इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ११७) धातुवृत्तौ (पृष्ठ ३९५) च पाठ उद्ध्रियेत, तच्च नात्र दृश्यते ।

३. उद्धृत पुरुषकारे (पृष्ठ ३४) ।

४. स्मृत पुरुषकारे (पृष्ठ ३०) धातुवृत्तौ (पृष्ठ ३९५) च ।

२२८. तनु श्रद्धोपकरणयोः । तानयति, तनति, तत्त्वा, तनित्वा, नितान्तम् । तनादौ तनु विस्तारे (८।१) तनुते, तनोति, ततः ।

२२९. उपसर्गाच्च दैर्घ्ये । चकारं भिन्नक्रममाहुः[1]—प्रतानयति, प्रातानयति, प्रतनति । घन श्रद्धोपहिंसनयोरिति न्यास पाठान्तरम्—घानयति, उपसर्गात्प्रघानयति, तच्च भ्वादौ घन शब्दे (१।३११) इत्येव सिद्धम् ॥२८३॥

२३०. वद संदेशने । वादयति, वदति[2], वदते । भ्वादौ (१।७३९) वदति, वदते,[3] यजादित्वात् (६।१।१५) संप्रसारणम्—उद्यते । चन्द्रो वचेत्यपाठीत्[4] ॥२८४॥

२३१. मान पूजायाम् । मानयति, मानति । भ्वादौ[5] (१।६९८) मीमांसते ॥२८५॥

२३२. भू प्राप्तावात्मनेपदी वा[6] । सम्भावयते, सम्भवते, इत्यभूत । भुवोऽवकल्कने (१०।१८५)—भावयति, भ्वादौ (१।१) भवति पाठादेव सिद्धे पाचवनमणिच्संनियोगेऽपि तदर्थम्—भावितारश्च मे सन्तु दातारश्च भवामहे[7] ॥२८६॥

२३३. वच भाषणे । वाचयति, वचति, वाचयते, वचयते ।

---

१ 'चकाराद् भिन्नक्रममाहुः' पाठः । अत्र 'चकारो भिन्नक्रमः, प्रत्ययार्थं समुच्चिनोति' इति काशिकापाठो (४।४।२६) द्रष्टव्यः । यथा 'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' (४।४।३५, ३६) इति श्लोकानुरोधेन चकारः क्रमं भित्वा तिष्ठते प्राक् पठ्यते, तथैव 'उपसर्गाच्च दैर्घ्ये' इत्यपि कस्यचिच्छ्लोकबद्धधातुपाठस्यांशः प्रतीयते, तदनुरोधेनैव चात्र चकारो 'दैर्घ्ये' इत्यतः प्राक् पठ्यते ।

२. 'संवादयति, संवदति' पाठः ।

३. भ्वादौ परस्मैपदिषु पठ्यते । तेन 'वदति' इत्येव युक्तम् । पाश्चात्ये धातुपाठे तूभयपदिषु पठ्यते (पृष्ठ १६१) ।

४ अपाठीदिति न भायेत ।

५. इतोऽग्रे 'विचारे' इत्यधिकम् ।

६. सर्वकोशेषु विद्यमानं, क्षीरस्वामिना च व्याख्यायमानं 'वा' पदं लिपिदोषेण भ्रान्त्या निष्कासितम् ।

७. आत्मनेपदं मत्वा भवपरेन निपातितं पुरुषकारे (पृष्ठ १२) ।

२१९. शीक आमर्षणे । शीकयति, शीकति, अशीशिकत । भ्वादौ शीकृ सेचने (१।६२)—शीकते, अशिशीकत ॥२७२॥

२२०. अर्द हिसि हिंसायाम् । अर्दयति, अर्दति । हिंसयति, हिंसति । रुधादौ (७।२४) हिनस्ति ॥२७३, २७४॥

२२१. आङः पद पद्यर्थे । पद्यतेरर्थो गतिः । आसादयति, आसदति,[1] आसीदतीत्येके । अन्यत्र (१।५९४) सीदति ॥२७५॥

२२२. शुन्ध शौचकरणे । शुन्धयति, शुन्धति ॥२७६॥

२२३. जुष परितर्पणे[2] । जोषयति, तुदादौ जुषी प्रीतिसेवनयोः (६।१०)—जुषते ॥२७७॥

२२४. धूञ् कम्पने । धूनयति, 'धावयति' इत्येके[3] । धवते, धवति, धूनितः । स्वादौ (५।१०) धुनोति, धूनोति । तुदादौ (६।९८) धुवति, क्र्यादौ (९।१६) धुनाति ॥२७८॥

२२५. प्रीञ् तर्पणे । प्रीणयति,[4] प्रीञ्धूञोर्नुक् च साहचर्यात् (तु० ७।३।३७ वा०) प्राययति इत्येके, प्रयते, प्रयति, प्रीणितः दिवादौ प्रीङ् प्रीतौ (४।३४)—प्रीयते, क्र्यादौ (९।२) प्रीणाति, प्रीणीते ॥२७९॥

२२६. श्रन्थ ग्रन्थ संदर्भे । संदर्भो ग्रन्थनम् । श्रन्थयति, ग्रन्थयति । श्रन्थति, ग्रन्थति । भ्वादौ श्रथि शैथिल्ये, ग्रथि कौटिल्ये (१।२६,२०) श्रन्थते, ग्रन्थते । क्र्यादौ (९।४५, ४६) श्रथ्नाति, ग्रथ्नाति ॥२८०, २८१॥

२२७. आप्लृ लम्भने । लम्भनं प्राप्तिः । आपयति, आपति, आपितम् । स्वादौ व्याप्तौ (५।१७) आप्नोति । आप्तम् ॥२८२॥

---

१. द्र० 'अभिषेवत्' काश्यप संहिता (पृष्ठ ४१)।

२. 'परितपणे परितप्तिक्रियायाम् इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ११७) धातुवृत्तौ (पृष्ठ ३९५) च पाठ उद्ध्रियेत, तच्च नात्र दृश्यते ।

३. उद्धृतं पुरुषकारे (पृष्ठ ३४)।

४. स्मृतं पुरुषकारे (पृष्ठ ३०) धातुवृत्तौ (पृष्ठ ३८५) च ।

२२८. तनु श्रद्धोपकरणयोः । तानयति, तनति, तत्ता, तनिता, वितानम् । तनादौ तनु विस्तारे (८।१) तनुते, तनोति, तनः ।

२२९. उपसर्गाच्च दैर्घ्ये । यथा विमतमनु१-प्रतानयति, आतानयति, प्रतनति । तत्र प्रकोरादिगणपाठेति अन्यत्र धात्वन्तरम्-वितानयति, उपसर्गादृते तानयति, तच्च भ्वादौ तन शब्दे (१।५११) इत्येव सिद्धम् ॥२८३॥

२३०. वद संदेशने । वादयति, वदति२, वदते । भ्वादौ (१।७३९) वदति, वदते.३ यजादित्वात् (६।१।१५) संप्रसारणम्—उद्यते । चन्द्रो नेत्यपाठीत्४ ॥२८४॥

२३१. मान पूजायाम् । मानयति, मानति । भ्वादौ५ (१।६९८) मीमांसते ॥२८५॥

२३२. भू प्राप्तावात्मनेपदी वा६ । संभावयते, संभवते, इत्यभूत । भुवोऽवकल्कने (१०।१८४)—भावयति, भ्वादौ (१।१) भवति पाठादेव सिद्धे चावकल्कनमणिचसंनियोगेऽपि भट्टर्थम्—भाविताश्च न तु दानाश्च मायाः७ ॥२८६॥

२३३. वच भाषणे । वाचयति, वचति, वाचयते, वच्यते ।

चन्दः संदेशे चुरादिमाह । अदादौ (२।५७) वक्ति, उच्यते, स्वपिसाहचर्याद् (६।१।१५) आदादिकस्य सम्प्रसारणम् ॥२८७॥

२३४. गर्ह विनिन्दने । गर्हयति, गर्हति । भ्वादौ (१।४२२) गर्हते ॥२८८॥

२३५. मार्ग अन्वेषणे । मार्गयति, मार्गति[1] । मृग अन्वेषणे (१०।२८३)—मृगयते ॥२८९॥

२३६. कठि शोके । उत्कण्ठयति, उत्कंठति । भ्वादौ (१।१६७) उत्कंठते ॥२९०॥

२३७. मृजूष्[2] शौचालंकारयोः । मार्जयति, मार्जति, मार्जना, मार्जिता, रसाला चेति लोकः । अदादौ ( २।६१ ) संमार्ष्टि, न धुमताङ्गस्य (१।१।६१) इत्यस्यानित्यत्वात् मृजेरात् ॥२९१॥

२३८. मृष तितिक्षायाम् । मर्षयति, मर्षति । दिवादौ (४।५४) मृष्यति । केचित् असुमदन्तचौपजीवनार्थं व्यत्यस्य पठन्ति[3]—मृषयति, मृषति ॥२९२॥

२३९. धृष अप्रसहने । अप्रसहनमभिभवः, अत एव प्रसहन इति युक्तम्[4] । धर्षयति, धर्षति, प्रधृष्टः, प्रधर्षितः । स्वादौ मिधृषा प्रागल्भ्ये (५।२६) धृष्णोति ॥२९३॥

सप्तत्रिंशतिसूत्रेषु चत्वारिंशताधातुभिरापवीयपर्यन्तः ।

२४०. अदन्ताः । इत आ गणान्ताद् इत्संज्ञानिषेधार्थमदन्तत्वं विधीयते, ततश्च अतो लोपः (६।४।४८) इत्यल्लोपस्य स्थानिवत्त्वाद् वृद्ध्याद्यभावः—कथयति, कथकः, बहुवचनाद्[5] वदिलजिप्रभृ-

1. इतोऽग्रे 'सत्कारे च—मार्गयति वाससी' इत्यधिकं क्वचित् ।

2. 'मृजूष् इति क्षीरस्वामी, षकारोऽदर्थ इति च' इत्युदघृत्य प्रत्याख्यातवान् पुरुषकारः —'तच्चिन्त्यम्—मृजेति भिदादिपाठाद् सिद्धेः' इति (पृष्ठ ५७) । 'षकारोऽदर्थः' इति नात्र पठ्यते ।

3. 'अथादन्ताः' इत्युत्तरसूत्रानन्तरमित्यर्थः । 4. 'इत्युक्तम्' पाठा० ।

5. 'अथादन्ता' इति सूत्र इति शेष । नादन्तान् सन् इति काशकृत्स्नाः प्रतिजानते । (का० धातु० २८२) ।

तीनाम् (१०।३०५, ३०६) अकारान्तागमो भवतीति द्रमिडाः—घण्टापयति, लज्जापयति ।

२४१. कथ वाक्यप्रतिबन्धे । प्रतिबन्धो विच्छेदोदीरणात्, अत एव वाक्यप्रबन्ध इत्येके पेठुः । कथयति । अल्लोपात्परापि वृद्धिर्नास्ति, परशब्दस्येष्टवाचित्वात् (१।४।२ भाष्ये) चिन्तपूजि (३।३।१०५) इत्यङ्—कथा—णेरनिटि (६।४।५१) इति लोपः, कथकः, संकथय्य, ल्यपि लघुपूर्वात् (६।४।५६) इत्यय् । अचकथत् सन्वल्लघुनि (७।४।९३) इति नास्त्यग्लोपित्वात् । कथमचीकथत् ? प्रकृत्यन्तरं[1] अन्वेष्यम् ॥२९४॥

२४२. वर ईप्सायाम् । कन्यां वरयति, वरः । चुरादिवृञो (१०।२०८) वारयति, वरति, वरते, स्वादौ वृञ् वरणे (५।८)—वृणोति, वृणुते, क्र्यादौ वृङ् सम्भक्तौ (९।४२) वृणीते ॥२९५॥

२४३. गण संख्याने । गणयति । ई च गणः (७।४।९७) अजीगणत्, अजगणत् । गणकः, गणिका, गणः, गणना, गणनम् ॥२९६॥

२४४. शठ श्वठ असम्यग्भाषणे[2] । शठयति, श्वठयति । भ्वादौ शठ कैतवे (१।२३६)—शठति, हेतौ शाठयति, श्वठ गतौ (१०।२६) इतीहस्यस्य श्वाठयति ॥२९७, २९८॥

२४५. पट वट ग्रन्थे । ग्रन्थो वेष्टनम्[3] । पटयति रज्जुम्, वटयति । पटादिर्दण्डके (१० १९७) पाटयति । भ्वादौ पट पट गतौ वट वेष्टने (१।१९८, २०२) पटति, वटति, हेतौ—पाटयति, वाटयति ॥२९९, ३००॥

२४६. रह त्यागे । रहयति । विरहः । ( १।४८३ ) रहति, हेतौ राहयति ॥३०१॥

---

१. स्मृत प्रक्रियाकौमुद्याम् (पृष्ठ २६५) ।

२. अत्र पुरुषकारः 'सम्यगाभाषणे सम्यग्वचनक्रियायामिति क्षीरस्वामी' इति क्षीरपाठमुद्धरति (पृष्ठ ६६) । न च तथात्र दृश्यते । युक्तश्चायमेव पाठः । काशकृत्स्नदुर्गावपि 'शठ श्वठ सम्यगाभाषणे' इति पेठतुः (काश० धातु० पृ० २८२) ।

३. स्थितं पुरुषकारे ( पृष्ठ ६७ ) धातुवृत्तौ ( पृष्ठ ३६७ ) च ।

२४७. रहि गतौ । रंहयति, रंहापयति । भ्वादौ (१।४८४) रंहति ॥३०२॥

२४८. स्तन गदी देवशब्दे । देवोऽभ्रम् । गदिर् इदित्पठितो धातुनिर्देशे (३।३।१०२ वा०), इकित्तिन्त्ययुक्तम्, अजिरूपक्षे गस्तादिरूपादर्शनात् । अत एव स्तन[1] गद शब्दे इति चन्द्रः (तु० चा० धा० १०।८३)। स्तनयति, गदयति, अजगदत् । स्तनिहृषिपुषिगदि (उ० ३।२९) इति णेरित्नुच् स्तनयित्नुः, गदयित्नुः । भ्वादौ (१।३१०, ४३) स्तनति, गदति, हेतौ स्तानयति, गादयति, अजीगदत् ॥३०३, ३०४॥

२४९. पत गतौ वा । पतयति, पतति, अपपतत्, अपातीत् । स्पृहिगृहिपति (३।२।१५८) इत्यालुच्—पतयालुः । भ्वादौ (१।५८०) पतति, अपप्तत् । अन्ये पत ऐश्वर्ये इति पेठुः, वाशब्दस्तूत्तरैकदेशार्थः,[2] वाङ्गुवत् ॥३०५॥

२५०. पश अनुपसर्गात् । गताविरयेव, अर्थानिर्देशात् । सनार्थोऽयमिति चन्द्रः । भ्वादेरनुपसर्गस्य पशे णिच्यदन्तत्वविधिरित्येके—पशयति । उपसर्गान्नास्ति प्रपशति । पशोऽनुपसर्गाद् वादन्त इत्येके—पशयति, पाशयति । मूर्धन्यान्तोऽयमिति नन्दी ॥३०६॥

२५१. स्वर आक्षेपे । स्वरयति । भ्वादौ स्वृ शब्दोपतापयोः (१।६६४)—स्वरति, हेतौ स्वारयति ॥३०७॥

२५२. रच प्रतियत्ने । रचयति । रचना ॥३०८॥

---

१ क्वचिदिह चान्द्रधातुपाठे 'ष्टन' षोपदेशः पठ्यते । यत्राह पुरुषकार'—'न चास्यापि दन्त्यपरत्वादित्यात् षोपदेशत्वम् । रम्याधिकासूक्ष्माहवयोदनेकाचा नैतदित्याहुः' (पृष्ठ १२)।

२. स्मरति धातुवृत्तिकारः (पृष्ठ ३१७), निराचष्टे च । अयंदमवधेयम्—यथा 'तप ऐश्वर्ये वावृतु वरणे' (४। ४८; ४९) इत्यत्र पक्षान्तरे वा शब्दः वृतुना संयोज्य 'वावृतु' धातुः स्वीक्रियते, न तथाऽत्र वा शब्द उत्तरधातुना संयुज्य 'वापश' इति रूपमाप्नोति । अत्र 'वा' निपातः पृथगेव विकल्पार्थं ब्रवीति । तस्माद् 'वावृतुवत्' इति स्वामिवचनमयुक्तम् । धातुवृत्तिकारस्तावदौ 'वा' शब्दप्रयोगमसहमानो निराचष्टे (पृष्ठ २६७)। श्लोकबद्धधातुपाठानुरोधेन यथा चकारोऽनेकत्र भिन्नक्रमः पठ्यते, तथा 'वा' पदस्यापि पूर्वनिर्देशः उपपद्यते ।

२५३. कल गतौ संख्याने च। कलयति[1] । क्ष्यादौ कल शब्दसंख्यानयोः (१।३३२)—कलते, हेतौ कालयति, क्षेपार्थात् (१०।५९)—कालयति गाम् ॥३०९॥

२५४. चह कल्कने। कल्कनं दम्भनम्। चहयति,अचचहत्। भ्वादौ (१।४८२) चहति, अचीचहत् ॥३१०॥

२५५. मह पूजायाम् । महयति, भ्वादौ[2] महति, कण्ड्वादौ (गण० ३।१।२७) महीङ्—महीयते । पविमह्योरिषच् (उ० १।५)—महिषः। महेरिनण्च (तु० उ० २।६६) महिनः । श्वन्नुक्षन् (उ० १।१५६) इति मघवन् । वर्तमाने पृषद्बृहत् (उ० २।८४)—महत् । पुंसि संज्ञायां घः (३।३।११८)—मही ॥३११॥

२५६. शार कृप श्रथ दौर्बल्ये। शारयति, अशशारत् । क्र्यादौ शॄ (९।१७)—शृणाति, अशीशरत्। शार इति नन्दी, अदन्तपाठो नाग्लोपि (७।४।२) इत्यर्थः—अशशरत्। सारेति दुर्गः। कृपयति, अचकृपत्, [कृपणः], कृपणा । अङ्विधौ (द्र० ३।३।१०४) कृपा, कृपेस्तादर्थ्ये[3] लः—कल्पयति। भ्वादौ कृपू सामर्थ्ये (१।४०८)—कल्पते । श्रन्थयति। कपिरिकादित्वात् (तु० ८।२।१८ मा०) श्लथयति। श्रथ प्रतिहर्षे (१०।१३)—श्राथयति ॥३१२–३१४॥

२५७. स्पृह ईप्सायाम् । स्पृहेरीप्सितः (१।४।३६) सम्प्रदानम्—पुष्पेभ्यः स्पृहयति। स्पृहिगृहि (३।२।१५८) इत्यालुच्—स्पृहयालुः।३१५।

२५८. भाम क्रोधे। भामयति, अबभामत्। भ्वादौ (१।२९८) भामते, अबीभमत् ॥३१६॥

२५९. सूच पैशुन्ये। सूचयति, असुसूचत । सूचकः। सूचट् (गण० ३।१।१३४)—सूची, सूचिः। सूचेः स्मन्[4] (तु० ४।१७७) सूक्ष्मम्।

---

१ 'दिशां ताराश्च' इत्यधिकं क्वचित् ।

२. नोपलभ्यते क्षीरतरङ्गिण्याम् ।

३. अत्र लिङ्गेन घोरादित्वस्य सूत्रस्य (१८६) सत्ता निर्दिष्टा। यथा तत्र राऽस्तस्याऽनेन लत्वं विधीयते। इदं लत्वविधायकं सूत्रं कस्यमिति न ज्ञायते।

४. 'स्मन्' इत्येव युक्तः पाठः, तेनैव 'सूक्ष्म' पदनिष्पत्तेः।

शुचिसूत्रि (३।१।२२ वा०) इति यङ्—सोसूच्यते । एकाचाम् एव षोपदेशत्व सिम[1]प्रभृतिभिः साहचर्यादाहुः,[2]अतः सूच सूत्र-संग्राम-सान्त्व साम-समाज-स्थूल स्तन-स्तेन-स्तोमानां षत्वं नास्ति । विषूचिका सुषामादौ (गण० ८।३।९८) ॥३१७॥

२६०. खेट भक्षणे । खेटयति, अचिखेटत् । खेटो ग्रामः । भ्वादौ खिट त्रासे (१।२०३)—खेटति, अचीखिटत् । आखेटः । खेड इति दौर्गाः ॥३१८॥

२६१. खोड क्षेपे । खोडयति । खोट खोडेति पाठभेदः ॥३१९॥

२६२. गोम उपलेपने । गोमयति क्ष्माम् । गोमयम् । प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वात्कस्मिंश्चित्काले गोमाद् गोमयसिद्धिः, पक्षे तु 'गोश्च पुरीषे' (४।३।१४५) मयट् । एवं कुमारादावनुमन्तव्यम् ॥३२०॥

२६३. कुमार क्रीडायाम् । कुमारयति । कुमारयतीति कुमारः, कुत्सितो मारो यस्य वा ॥३२१॥

२६४. शील उपधारणे । उपधारणमभ्यासः परिचय इत्येके । शीलयति, अशिशीलत् । भ्वादौ शील समाधौ (१।३४८)—शीलति, अशीशिलत् ॥३२२॥

२६५. साम सान्त्वने । सान्त्वनं प्रीणनम् । सामयति, अससामत् साम सान्त्वप्रयोगे (१०।२६ चान्द्रमते) इत्यस्यासीसमत् । नामन्सामन् (दश० उ० ६।७६) ॥३२३॥

२६६. वेल कालोपदेशे । वेलयति, अविवेलत् । भ्वादौ वेल गतौ (तु० १।३६०)—वेलति, वेला, नस्याप्यृदित्त्वाद् (क्षु० ७४।२) अविवेलत् । तेनाग्रेनं चन्द्रो नाध्यैष्ट ॥३२४॥

---

१. सिमड् प्रभृतिभिः' पाठा० ।

२. द्र० पूर्व पृष्ठ १६४ टि० २ ।

३. 'खोट' पाठान्तरम् । यस्मदूदौर्गधातुपाठकोशे 'खेट भक्षणे खोट क्षेपे' इत्येव पठ्यते ।

२७२. भाज पृथक्कर्मणि । विभाजयति, अबभाजत् । भाजितम, विभाज्य । भ्वादौ भज सेवायाम् (१।७२५)—भजते, भजति, अबीभजत, भज विश्राणने (१०।१७१)—भाजयति ॥३३०॥

२७३. सभाज प्रीतिदर्शने । सभाजयति, सभाज्यते । सभाजनम, सभाजना, सभाजकः, सभाजः ॥३३१॥

२७४. ऊन परिहाणे । ऊनयति, मा भवानूनिनत् । ऊनितम्, ऊनोऽचि (द्र० ३।१।१३४) ॥३३२॥

२७५. ध्वन शब्दे । ध्वनयति । भ्वादौ (१०।३१०)—ध्वनति, ध्वनिः, ध्वानयति ॥३३३॥

२७६. कूट दाहे[1] । कूटयति, अचुकूटत ॥३३४॥

२७७. केत विश्रावणे । निमन्त्रण इत्येके । केतयति, अचिकेतत् । केतितः, संकेत्य, संकेतः । भ्वादौ कित निवासे (१।७२०)—केतति, अचीकितत् ॥३३५॥

२७८. कुण गुण चामन्त्रणे । चकारात्केतोऽपि । आमन्त्रणं गूढोक्तिः । संकेतयति, कुणयति, गुणयति, अचुकुणत, अजुगुणत् । तुदादौ (६।३६) कुणति, अचूकुणत्, कुण सकोचने (१०।१३६)—विकुणयते, गुणम् ॥३३६, ३३७)

२७९. स्तेन चौर्ये । स्तेनयति, अतिस्तेनत् । 'स्तेनोऽचि' (द्र०३।१।१३४) ॥३३८॥

स्तेनान्ते पर्यङ्के चतुर्विंशे द्वयशते षट्कं धातुसप्तशतम् ।

२८०. आ गर्वादात्मनेपदी । गण इति शेषः ।

२८१. पद गतौ । पदयते । दिवादौ (४।६१) पद्यते, हेतावुपपादयति भ्वादौ पद स्थैर्ये (१।४२ मतान्तरे)—पदति ॥३३९॥

२८२. गृह ग्रहणे । गृहयते, अजगृहत । स्पृहिगृहि (३।२।१५०) इत्यालुच्—गृहयालुः, गृहितम् ॥३४०॥

---

रूपाणि सम्पत्स्यन्ते । अत एव निरामयित्वा, प्रार्थयित्वा इत्यादौ सत्यामावाद् ल्यबपि न भवति । यदा तु 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्तदा अमवत् इत्येते रूपे निष्पन्ने समादयः संयुज्यन्ते,'सममवद' इत्यादिरूपाणि च भवन्ति ।

१. 'परिदाहे इत्यन्ये' इति धातुवृत्तिकारः (पृष्ठ ३१८)

२८३. मृग अन्वेषणे । मृगयते । मृगिकम्प्योः शविधिः[1]—मृगया, मृगितम्[2] ॥३४१॥

२८४. कुह विस्मापने । कुहयते । कुहेयम्[3], कुहकः, कुहना ॥३४२॥

२८५. शूर वीर विक्रान्तौ । शूरयते, अशुशूरत । दिवादौ शूरी हिंसायाम् (४।४६)—शूर्यते, हेतौ शूरयति, अशुशूरत् । वीरयते—वीरः ॥३४३॥

२८६. स्थूल परिबृंहणे । परिबृंहणं पीनत्वम् । स्थूलयते, अतुस्थूलत । स्थूलोऽच्चि (द्र० ३।१।१३४) ॥३४४॥

२८७. अर्थ उपयाच्ञायाम् । अर्थयते, आर्तिथत, अर्तिथयिषते[4] ॥३४५॥

२८८. सत्र[5] सन्तानक्रियायाम् । सत्त्रयते, अससत्त्रत, सिसत्त्रयिषते[4] ॥३४६॥

२८९. गर्व माने । गर्वयते । भ्वादौ गर्व दर्पे (१।३८४)—गर्वति ॥३४७॥

आगर्वीयपर्यन्तके दश धातवः ।

२९०. सूत्र विमोचने । विमोचनं मोचनाभावः, ग्रन्थनम् । सूत्रयति । असुसूत्रत ॥३४८॥

२९१. मूत्र प्रस्रवणे[6] । मूत्रयति । अमुमूत्रत्[7] ॥३४९॥

२९२. रूक्ष पारुष्ये । रूक्षयति, अरुरूक्षत । विरूक्ष्य, रूक्षः ॥३५०॥

---

१. अत्र पूर्वं ६१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

२. इतोऽग्रे 'मृगः' इत्यधिकम् ।

३. कुह+इयम् इति च्छेदः । द्र० वर्धनेयम् धा० १०।२२२ सूत्रे ।

४. नान्तत्वात् सन् इति कारिकासूत्रेण (पृष्ठ २८२) यदन्तेभ्यो धातुभ्यः सन् न भवति ।

५. सर्वकोशेषु 'सत्र' एकतकारवान् पाठः ।

६. इतोऽग्रे 'मूत्रणे' इत्यधिकम् । ७. इतोऽग्रे 'मूत्रयति' इत्यधिकम् ।

२७२. भाज पृथक्कर्मणि । विभाजयति, अबभाजत् । भाजितम्, विभाज्य । भ्वादौ भज सेवायाम् (१।७२५)—भजते, भजति, अबीभजत्, भज विश्राणने (१०।१७६)—भाजयति ॥३३०॥

२७३. सभाज प्रीतिदर्शने । सभाजयति, सभाजयते । सभाजनम्, सभाजना, सभाजकः, सभाजः ॥३३१॥

२७४. ऊन परिहाणे[१] । ऊनयति, मा भवानूनिनत् । ऊनितम्, ऊनोऽस्त्रि (द्र० ३।१।१३४) ॥३३२॥

२७५. ध्वन शब्दे । ध्वनयति । भ्वादौ (१०।३१०)—ध्वनति, ध्वनिः, ध्वानयति ॥३३३॥

२७६. कूट दाहे । कूटयति, अचुकूटत् ॥३३४॥

२७७. केत विश्रावणे । निमन्त्रण इत्येके । केतयति, अचिकेतत् । केतितः, संकेत्य, संकेतः । भ्वादौ कित निवासे (१।७१०)—केतति, अचीकितत् ॥३३५॥

२७८. कुण गुण चामन्त्रणे । चकारात्केतोऽपि । आमन्त्रणं गूढोक्तिः । संकेतयति, कुणयति, गुणयति, अचुकुणत्, अजुगुणत् । तुदादौ (६।३६) कुणति, अचूकुणत्, कूण सङ्कोचने (१०।१३६)—विकूणयते, सुपम् ॥३३६, ३३७॥

२७९. स्तेन चौर्ये । स्तेनयति, अतिस्तेनत् । 'स्तेनोऽस्त्रि' (द्र० ३।१।१३४) ॥३३८॥

स्तेनान्ते पर्पटके चतुर्गिरो सूरयते पदूपठं धातुपूपरातम् ।

२८०. आ गर्वादात्मनेपदी । गण इति शेषः ।

२८१. पद गतौ । पदयते । दिवादौ (४।६१) पद्यते, हेतावुपपादयति, भ्वादौ पद स्थैर्ये (१।४२ मतान्तरे)—पदति ॥३३९॥

२८२. गृह ग्रहणे । गृहयते, अजगृहत । स्पृहिगृहि (३।२।१५०) इत्यालुच्—गृहयालुः, गृहितम् ॥३४०॥

---

रूपाणि सम्पत्स्यन्ते । अत एव निजामयिता, आर्थयिता इत्यादौ समाणभावात् इयनपि न भवति । यदा तु 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्तदा अभवत् इत्येते रूपे निष्पन्ने समादयः संयुज्यन्ते, 'समभवद्' इत्यादिरूपाणि च भवन्ति ।

१. 'परिहाणे इत्यन्ये' इति धातुवृत्तिकार (पृष्ठ ३५६)

२८३. मृग अन्वेषणे । मृगयते । मृगिकम्प्योः शविधिः[1]—मृगया, मृगितम्[2] ॥३४१॥

२८४. कुह विस्मापने । कुहयते । कुहेयम्[3], कुहकः, कुहना ॥३४२॥

२८५. शूर वीर विक्रान्तौ । शूरयते, अशुशूरत । दिवादौ शूरी हिंसायाम् (४।४६)—शूर्यते, हेतौ शूरयति, अशूशुरत । वीरयते—वीरः ॥३४३॥

२८६. स्थूल परिबृंहणे । परिबृंहणं पीनत्वम् । स्थूलयते, अतुस्थूलत । स्थूलोऽचि (द्र० ३।१।१३४) ॥३४४॥

२८७. अर्थ उपयाच्ञायाम् । अर्थयते, आर्तिथत, अर्तिथयिषते[4] ॥३४५॥

२८८. सत्र[5] सन्तानक्रियायाम् । सत्रयते, अससत्रत, सिसत्रयिषते[4] ॥३४६॥

२८९. गर्व माने । गर्वयते । भ्वादौ गर्व दर्पे (१।३८४)—गर्वति ॥३४७॥

आगर्वीयपर्यन्तके दश धातवः ।

२९०. सूत्र विमोचने । विमोचनं मोचनाभावः ग्रन्थनम् । सूत्रयति । असुसूत्रत ॥३४८॥

२९१. मूत्र प्रस्रवणे[6] । मूत्रयति । अमुमूत्रत्[7] ॥३४९॥

२९२. रूक्ष पारुष्ये । रूक्षयति, अरुरूक्षत् । विरूक्ष्य, रूक्षः ॥३५०॥

---

१. अत्र पूर्वं ६१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

२ इतोऽग्रे 'मृगः' इत्यधिकम् ।

३. कुह+इयम इति च्छेदः । द्र० वर्णेनेयम् धा० १०।२२२ सूत्रे ।

४. मान्तात् सन् इति काशकृत्स्नसूत्रेण (पृष्ठ २८२) यदन्तेभ्यो धातुभ्यः सन् न भवति ।

५. सर्वकोशेषु 'सत्र' एकतकारवान् पाठः ।

६. इतोऽग्रे 'मूत्रणे' इत्यधिकम् ।  ७. इतोऽग्रे 'मूत्रमचि' इत्यधिकम् ।

३१४. अङ्क पदलक्षणयोः । अङ्कयति, अङ्कितः । यङ्घेत्येके—अञ्जिघयिषति,पूर्वस्याञ्जिघयिषति । अङ्कत्यन्ये—अञ्जिकयिषति ॥३६६॥

३१५. सुख दुःख तत्क्रियायाम् । सुखनं दुःखनं च तत्क्रिया । सुखयति, सुसुखयिषति । दुःखयति ॥३६७, ३६८॥

३१६. रस आस्वादन-स्नेहनयोः । रसयति, रसना, रसः । भ्वादौ रस शब्दे (१।४६६)—रसति, हेतौ रासयति ॥३६९॥

३१७. व्यय गतौ । व्यययति । अवव्ययत् । भ्वादौ (१।६२०) व्ययति, व्ययते, अव्ययीत्, हेतौ व्याययति, व्ययोऽचि ( द्र० ३।१।१३४ ) ॥३७०॥

३१८. वित्त समुत्सर्गे । समुत्सर्गस्त्यागः । वित्तयति,वित्तितम्, वित्तिस्था । व्यय वित्तसमुत्सर्गे इति सभ्या ॥३७१॥

३१९. रूप रूपक्रियायाम् । रूपक्रिया रामबुद्धादिरूपस्य कर-णम्[1] । रूपयति, रूपकम् । रूपदर्शन वा[2]—निरूपयति, निरूपणा ॥३७२॥

३२०. छेद द्वैधीकरणे । छेदयति, अचिच्छेदत् । छेदितम् । अचिच्छेदम्,विच्छेद्य । रुधादौ (७।३) छिनत्ति,मचिच्छिदत् ॥३७३॥

३२१. छद अपवारणे । छदयति । छद संवरणे (१०।३९)—छादयति, उणादौ छत्वर (द्र० उ० ३।१), छद्म (द्र० उ० ४।१५६), छद्म (द्र० उ० ४।१४५) छदिस् (द्र० उ० २।१०८) ॥३७४॥

३२२. लाभ प्रेरणे । लाभयति । अललाभत् । लभेति सभ्या[3] लाभितम्, विलभना । भ्वादौ (१।७०१)—लभते—मलीलभत्[3] ॥३७५॥

३२३. व्रण गात्रविचूर्णने । व्रणयति, अवव्रणत् । भ्वादौ (१।३०२)—व्रणति, हेतौ व्राणयति, अविव्रणत् ॥३७६॥

३२४. वर्ण वर्णक्रियाविस्तारगुणवचनेषु । वर्णक्रिया=

१. स्मृत धातुवृत्तौ (पृष्ठ ४०१) ।

२. स्मृतं पुस्तकाटे (पृष्ठ ६१) ।

३ 'मललभत्' इत्यपपाठ सर्वकोशेषु ।

वर्णनं वर्णकरणं वा । कथां वर्णयति, सुवर्णं वर्णयति, । विस्तारे—वर्णनेयम् । गुणवचनं स्तुतिः शुक्लाशुक्लिर्वा—राजानमुपवर्णयति, वर्णकः ॥३७७॥

अदन्तपर्यन्तकः ।

३२५. बहुलमेतन्निदर्शनम्[1] । यदेतद् भ्वादिधातुपरिगणनं तद् बाहुल्येन निदर्शनत्वेन ज्ञेयम् । तेनापठिता मिलि-क्षमिप्रभृतयो लौकिकाः (द्र० वामनीय काव्यालङ्कार ५।२।२) स्तम्भुस्तुम्भादयश्च (३।१।८२) सौत्रास्तुस्त्यादयश्च (३।१।३५ वा०) वाक्यकारीया धातव उदाहार्याः । वर्धन्ते हि धातुगणाः । तथा च श्रीभोज.—

मिलन्त्याशासु जीमूताः, विक्षवन्ते दिवि ग्रहाः ।
तपः क्षपयति प्रावृट्, सीयन्ते कामिविग्रहाः ॥१॥
व्यतस्तुनीहि मासर्तुन् वसन्तो मानव स्मरः ।
दूतिद्रुतिमतीयस्व जिजागयिषति स्मर ॥२॥
मुपलक्षपट्टकारस्तोमैः कक्षमक्षयिडति ।
कुचविष्कम्भमुत्तम्भन् निष्कुम्नातीव ते स्मरः ॥३॥
नवधान्दोलयसेव प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशा ममाशामुन्मुलुम्पति ॥४॥
तावत्ता. प्रवासमुल्ललयाञ्चकार (शिशुपालवध ५।७) ।

भ्वादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति, चुरादिपाठस्तु निदर्शनार्थं इत्येके । रामो राज्यमकारयत्—(रामा० युद्ध १२८।१०५) वाहयति,वाचयति, भेदयति कुत्स्यम्, रञ्जयति वस्त्रम्, तापयति, घातयति । आह च—

निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते[2] ।
हेतुर्यानुप्रवेशोऽपि, वृद्धवारोपारिणाच्च विना ॥

अजान गर्भं महिमानमिन्द्रः (अथर्व० (२।१०।१२) अजीजनदित्यर्थः ।
षड्भिर्हलैः कृषति (द्र० ३।१।२६ भाष्ये) ।[3]

---

१. इद सूत्रमनार्षमिति नागेश (द० शब्देन्दुशेखरः) ।
२. 'णिज्ञुष्यते' वाक्यपदीये (३।७।६०) पाठः ।
३. अत्र ७।४।६२ सूत्रस्य भाष्यं तदीय प्रदीप चानुसन्धेयम् ।

वान्ति पर्णशुषो वाताः वान्ति[1] पर्णमुचोऽपरे ।
वान्ति पर्णरुहोऽप्यन्ये,[2] ततो देवः प्रवर्षति ।[3]

अन्ये तु प्रातिपदिकाद् धात्वर्थे (१०।२९६) इत्येव सिद्धे सूत्र मूत्र-छिद्रान्धदण्डाद्य (१०।३१०, ३११, ३१२) उदाहरणार्थं निदर्शिता इति व्याख्यन्,[4] तेन पर्ण हरितीभावे, अघ पापे, स्कन्ध समाहारे, पक्ष परिग्रहे, तसि अलङ्कारे, ऊप क्षुरणे, क्षप प्रेरणे—[5]क्षपयसि, क्षपा, स्फुट प्रकटभावे—स्फुटयति, तथा तडित् खचयतीवाशाः । पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः (शिशुपालवध ५।११) ।

चुरादिणिचो बहुल निदर्शनं वेत्यपरे । तेन पक्षे चोरति, चिन्तती-त्यादि सिद्धम् ।

धातूनामर्थनिर्देशोऽयं निदर्शनार्थमिति सौनागाः । यदाहुः—

क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः ।
प्रयोगतोऽनुमातव्याः अनेकार्था हि धातवः[6] ॥

३२६. णिङ् अङ्गनिरसने । प्रातिपदिकार्थाद् अङ्गविक्षेपेऽर्थे णिङ् भवति । ङकारस्तङर्थः (द्र० १।३।१२) । हस्तं निरस्यते—हस्तयते, पादयते ।

३२७. श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । श्वेताश्वादीनाञ्चतुर्णां यथासंख्यं णिङ्सङ्गेऽश्वस्य तरस्येतस्य कस्य च लोपो भवति । श्वेताश्वमाचष्टे—तेनातिक्रामति वा—श्वेतयते । अश्वतरम्—अश्वयते । गालोडितम्—गालोडयते । कालोडित इति ग्रन्थः, गालोडितस्य प्रकृतिप्रत्ययविभागाभा-मात् । आह्वरकम्—आह्वरयते । पारायणिका अर्थानुवृत्तिवद् अत्रापि

१. 'वातास्तत.' पाठान्तरं दशपाद्युणादिवृत्तौ ८।४०॥

२. 'ततः पर्णरुहो वान्ति' पाठा० दश० उणादिवृत्तौ ८।४०॥

३ श्लोकोऽयमुज्ज्वलदत्तेनाप्युणादिवृत्तावुद्धृतः (पृष्ठ ६९) ।

४. यथा पुरुषकारवचन (पृष्ठ ६५) तथाऽयं व्याख्याता भीमसेनः प्रतीयते । तेन क्वचिद्धातुवृत्तिरपि विहितेति प्रतीयते ।

५. अत्र पुरुषकारः (पृष्ठ ९५) देवराजयज्वकृता निघण्टु टीका (पृष्ठ ४३, १०९) च द्रष्टव्या ।

६. अत्र पूर्वं ३ पृष्ठस्था टि० ५, ६ द्रष्टव्या ।

णिचमनुवर्तयन्ति—श्वेतयति, अश्वयति, गालोडयति, आह्वरयति।

३२८. पुच्छादिषु धात्वर्थ इति सिद्धम्[1]। पुच्छभाण्डचीवराण्णिङ् (३।१।२०) इति पुच्छादिभ्यो धात्वर्थे उदसनादौ णिङ्प्रत्ययः सिद्धः, पाणिनिनैवोक्तत्वात्। पुच्छमुदस्यति—उत्पुच्छयते, परिपुच्छयते, भाण्डानि समाचिनोति—सम्भाण्डयते। चीवरमर्जयति, परिदधाति वा—सञ्चीवरयते भिक्षुः। एवं मुण्डादिभ्यः सत्यापपाशादिभ्योऽपि (प्र०३।१।२१, २५) णिच् सिद्धः। नपुंसकेन निर्देशो[2] मङ्गलार्थः।

ण्यन्तनामपर्यटकः।

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां चुरादिगणः सम्पूर्णः समाप्तः।

कश्मीरमण्डलभुव[3] जयसिंहनामनि
विश्वम्भरापरिवृढे दृढदीर्घदोष्णि।
शासत्यमात्यवरसूनुरिमां लिलेख
भक्त्या स्वयं द्रविणधामपि धातुपाठम्॥१॥
पदार्थजनका क्षीरस्वामिन क्षीरधेरिव।
वृत्तिः प्रसूतारम्येय नाम्नां क्षीरतरङ्गिणी[4]॥२॥



१. धातुपाठरचयितुर्भीमसेनस्य धात्वर्थमिदमित्याहुरिति बालमनोरमाकाराः। तच्चिन्त्यम्। नहि भीमसेनो धातुपाठकार, किन्तर्हि? तद्वृत्तिकारः। अत्र पुरुषकारवचनम् (पृष्ठ ६५) अनुसन्धेयम्।

२. 'सिद्धम्' इत्यनेनेति शेषः।

३. प्रतिलिपिकर्तुरिदं पद्यम्।

४. 'पदार्थजनका क्षीरस्वामिनः क्षीरवारिधेः। [illegible] प्रसूता पुण्येयं वृत्तिः क्षीरतरङ्गिणी' इति पाठः।

# क्षीरतरङ्गिणीस्थ-धातूनां वर्णानुक्रम-सूची

इह धातुवर्णानुक्रमसूच्यां प्रतिधातु गणसंख्या धातुसूत्रसंख्या च निर्दिश्यते ।

धातुगणाः

| | |
|---|---|
| १—भ्वादयः | ६—तुदादयः |
| २—अदादयः | ७—रुधादयः |
| ३—जुहोत्यादयः | ८—तनादयः |
| ४—दिवादयः | ९—क्र्यादयः |
| ५—स्वादयः | १०—चुरादयः |

**धातुभेदाः**—इह वर्णानुक्रमसूच्यां चतुर्धा धातवो निर्दिश्यन्ते—

१—धातुसूत्रोपात्ताः, २—पाठान्तरोपात्ताः, ३—व्याख्याग्रन्थेऽन्यमतेन साक्षादुपात्ताः, ४—अन्यदीया असाक्षान्निर्दिष्टास्तदीयवाक्येनोहिताः ।

**१.—धातुसूत्रोपात्ताः**—ये धातवः धातुसूत्रेषु साक्षान्निर्दिष्टाः[1], ग्रन्थकर्त्रा च व्याख्यातास्त इह स्थूलाक्षरैर्मुद्रिताः । यथा अंश १०,३०४; अक १,४३६ ॥

**२–पाठान्तरोपात्ताः**—ये धातवः पाठान्तरेषु निर्दिष्टास्तेऽत्र धात्वनन्तरं (पाठा०) संकेतेन संकेतिताः । यथा—मृज (पाठा०) १,१४६ ।

**३—अन्यमतेन साक्षादुपात्ताः**—ये धातवः ग्रन्थकृता तत्तत्सूत्रव्याख्यानेऽन्यदीयमतेन साक्षान्निर्दिष्टास्त[2] इह सूक्ष्माक्षरैर्मुद्रिताः । यथा—अप १०, ३२५, अक्क १०,३१४ अह्व १०,३१४ ।

**४—अन्यदीया असाक्षान्निर्दिष्टा**—ये केवलान्यदीया धातवो ग्रन्थकृता साक्षादनिर्दिष्टाः, तद्वाक्येनोहितास्त[3] इह वक्राक्षरैर् (इटैलिक)

१. द्र०—अंश समाघाते १०,३०४; पृष्ठ ३२०, पं० ८ ।

२. द्र०—अह्न......अङ्क्तिः । अह्व इत्येके ···अह्क इत्यन्ये ·· १०,३१४; पृष्ठ ३२१, पं० १, २ ।

३. द्र०—अस अंशयति । चन्द्रो दन्त्यान्त्यमाह—अंसयति · १०, ३०४; पृष्ठ ३२० पं० ८, ६ ।

मुद्रिताः । यथा—अंस १०,३०४;

**टिप्पणी**—१—इह पाठे अनुनासिकोपधा धातवो नकारोपधाः पठ्यन्ते । यथा-अन्चु, अन्जू, उन्भ, तृन्फ इत्यादि । अन्यत्रैषु परसवर्णत्वं निर्दिश्यते । यथा=अञ्चु, अञ्जू, उम्भ, तृम्फ इत्यादि ।

२—धातोराद्यानुबन्धानुत्सृज्यैव धातोर्निर्देशः कृतः ।

| धातुः | गणः | सूत्रसं० | धातु. | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| अ | | | अठि | १ | १६५ | अमि | १ | ५५७ |
| अंश | १० | ३०४ | अड | १ | २४६ | अय | १ | ३१८ |
| अंस | १० | ३०४ | अण | १ | ३०२ | अय | १ | ६२७ |
| अक | १ | ५३६ | अत | १ | ३३ | अर्क | १० | ६३ |
| अँकि | १ | ६९ | अति | १ | ५१ | अर्घ | १ | ४८८ |
| अकि | १० | ३१३ | अत्ड | १ | १६० | अर्च | १ | १२४ |
| अच्. | १ | ४३५ | अद | २ | १ | अर्च | १० | २०३ |
| अग | १ | ५३६ | अदि | १ | ५१ | अर्ज | १ | १३८ |
| अगि | १ | ६१ | अद्द | १ | १६० | अर्ज | १० | १७१ |
| अघ | १० | ३२५ | अद्ड | १ | २४३ | अर्थ | १० | २८७ |
| | | | अन | २ | ६७ | | | |
| अघि | १ | ७७ | अन्चु[1] | १ | ११६ | अर्द | १ | ४६ |
| अङ्क | १० | ३१४ | अन्चु | १० | १८८ | अर्द | १० | २२० |
| अङ्ग | १० | ३१४ | अन्जू | ७ | २६ | अर्ब | १ | २८६ |
| अङ्घ | १० | ३१४ | अन्ध | १० | ३११ | अर्व | १ | ३८५ |
| अचि | १ | ६०५ | अन्व | १ | २८६ | अर्ह | १ | ४८८ |
| अञ्चु | १ | ६०५ | अबि | १ | २६४ | अर्ह | १० | १७७ |
| अज | १ | १४३ | अभि | १ | २७१ | अलाँ | १ | ३४३ |
| अजि | १० | १६७ | अभ्र | १ | ३७१ | अव | १ | ३६२ |
| अट | १ | १६८ | अम | १ | ३१२ | अश | ९ | ५५ |
| अठ | १ | २३१ | अम | १० | १६६ | अशू | ५ | ७१ |

१. अन्यवृत्तिषु नकारो परसवर्णत्वेन निर्दिष्ट । यथा—अञ्चु, अञ्जू।

 सर्वत्र नकार एव निर्दिश्यते ।

१. अत्र २७५ पृष्ठस्थ २ टिप्पण्यां निर्दिष्टः पाठो द्रष्टव्यः।

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| कित | १ | ८७० | कुथि | १ | ३७ | कृञ् | १ | ६३६ |
| कित | ३ | २० | कुथि | ९ | ४७ | कृञ् | ५ | ७ |
| किल | ६ | ६० | कुद्र | १० | ६ | कृञ् | ८ | ११ |
| किल | १० | ५९ | कुद्रि | १० | ६ | कृड | ६ | ८६ |
| किष्क | १० | १३३ | कुन्थ | १ | १४७ | कृती | ६ | १४० |
| कीट | १० | ९० | कुन्थु | १ | ११७ | कृती | ७ | १२ |
| कील | १ | ३४९ | कुन्थ | ९. | ४७ | कृप | १० | २८६ |
| कु | २ | ३४ | कुप | ४ | १२६ | कृप | १० | २५६ |
| कुक | १ | ७३ | कुप | १० | १९७ | कृपू | १ | ५०८ |
| कुङ् | १ | ६८१ | कुपि | १० | १०३ | कृवि | १ | ३९० |
| कुङ् | ६ | १०२ | कुभि | १० | १०३ | कृश | ४ | १२० |
| कुच | १ | ११५ | कुमार | १० | २६३ | कृष | १ | ७१७ |
| कुच | १ | ६०० | कुर | ६ | ५१ | कृष | ६ | ६ |
| कुच | ६ | ७३ | कुर्द | १ | २० | कॄ | ६ | १११ |
| कुञ्च | १ | १२१ | कुल | १ | ५७९ | कॄ | ९ | २५ |
| कुट | ६ | ७१ | कुश | ४ | ११३ | कॄ | १० | १५३ |
| कुट्ट | १० | १४८ | कुशि | १० | १९७ | कॄञ् | ९ | १४ |
| कुटुम्ब | १० | १७८ | कुष | ९ | ५१ | कॄत | १० | १०१ |
| कुट्ट | १० | ३२ | कुस | ४ | ११० | केत | १० | २७७ |
| कुठि | १ | २३८ | कुसि | १० | १९७ | केपृ | १ | २५९ |
| कुड | ६ | ८५ | कुस्म | १० | १५७ | केलृ | १ | ३६० |
| कुडि | १ | १५३ | कुह | १० | २८४ | केवृ | १ | ३३५ |
| कुडि | १ | २२० | कूङ् | ६ | १०२ | कै | १ | ६५२ |
| कुडि | १० | ४० | कूज | १ | १३७ | क्नसु | ४ | ५ |
| कुण | ६ | ४६ | कूट | १० | १५८ | क्नूञ् | ९ | ९ |
| कुण | १० | २५८ | कूट | १० | २७६ | क्नूयी | १ | ३८५ |
| कुत्स | १० | १४४ | कूण | १० | १२६ | क्नसु | १ | ५५५ |
| कुथ | ४ | १० | कूल | १ | ३४० | क्रथ | १ | ५३९ |

